महाकविश्रीत्रिविक्रमपण्डिताचार्येण

विरचितम्

# उषाहरणम्

श्रीसुमतीन्द्रतीर्थकृतया

रसिकरंजनीटीकया सहितम्

सम्पादकः

डा. वादिराजाचार्यः एल्. एस्

प्रकाशकाः

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम्, बेङ्गलूरु-०४

महाकविश्रीत्रिविक्रमपण्डिताचार्येण विरचितम्

# उषाहरणम्

श्रीसुमतीन्द्रपरमहंसकृतया रसिकरञ्जनीटीकया सहितम् ।

सम्पादकः

डा ।। एल्.एस्. वादिराजाचार्यः

M.A., Ph.D.

This Volume is published with the grant from the
Govt. of Karnataka



*Published by*

**Dvaita Vedanta Studies and Research Foundation**

No.11, Uttaradi Matha Compound, Bangalore-4.

**Uṣāharaṇam** of Mahākavī Śrī Trivikramapaṇḍitāćārya with Tīkā of Śrī Sumatīndraparamahamsa. Edited by Edited by Dr. L.S. Vadirajachar, Published by Dvaita Vedanta Studies and Research Foundation, No.11, Uttaradi Matha Compound, Basavanagudi, B'lore-04.

Pages : xxxii+508

Price : 300/-

Year of Publication : 2020

© The Publisher

ISBN No.: 978-93-83679-93-5

Typeset and Printed at : Vāgartha, B'lor-19.
Email : vagartha@yahoo.com

# Preface

Likuća family is one of the celebrated families of great scholars in the early period of Mādhva tradition. Likuća Śrī Trivikrama Paṇḍitāćārya, is the tallest personality in that family. Śrī Trivikrama Paṇḍitāćārya, was a poet, a scholar and a Vedāntin par excellence. Most importantly he discussed his philosophical questions with Śrī Madhvāćārya himself, and became one of his dearest direct disciples. He is a household name in Mādhva tradition, as the author of a popular stotra, the Vāyustuti.

Śrī Trivikrama Paṇḍitāćārya, his younger brother Śaṅkara Paṇḍitāćārya, his son Nārāyaṇa Paṇḍitāćārya and his grandson Vāmana Paṇḍitāćārya have all authored important commentaries in Mādhva School, in addition to many Mahākāvyas and short stotras.

Uṣāharaṇa is a Mahākāvya composed by Śrī Trivikrama Paṇḍitāćārya. It is mentioned in Sumadhvavijaya (a mahākāvya composed by his son Śrī Nārāyaṇa Paṇḍitāćārya) that this work was actually composed by Paṇḍitāćārya at a very early age:

"sa sasarja sadadhvagopakṛtyai
likućaḥ kāvyaphalaṃ rasābhirāmam" (13.48)

Uṣāharaṇa deals with a short episode that is found originally in Mahābhārata and Harivaṁṣa. It is connected with the story of Aniruddha, grandson of Lord Śrī Kṛṣṇa, marrying Uṣā, daughter of Bāṇāsura. Uṣāharaṇa has all the qualities of a mahākāvya, and is full of Kāvyarasas, fitting naturally with the magnificent story.

The real depth and beauty of this Kāvya can be

appreciated only with a detailed commentary. Śrī Sumatīndra Tīrtha Pūjyapāda, a great ascetic and a commentator of the Mādhva School, has written a lucid commentary named Rasikarañjanī, to show the intricate details embedded in this work.

Even though Uṣāharaṇa along with Rasikarañjanī was published earlier, the book has been unavailable for many years now. We are happy that this work is again being made available by Dvaita Vedānta Studies and Research Foundation. This book has been ably edited by Dr. L.S. Vadirajacharya, the deputy director of the Vidyadhīṣa Post-Graduate Sanskrit Research Centre. I congratulate him for this work. He has edited and authored numerous works in the past and I wish that he continues his services, with the blessings of Lord Śrī Rāma and Śrī Mukhyaprāṇa.

I hope that the students and scholars of Saṃskṛta will welcome this volume.

**Dr. Satyadhyanacharya Katti**
Chairman and Hon Director
Dvaita Vedanta Studies and
Research Foundation, Bengaluru

# प्रथमवाचः

विदितचरमेवैतत्पण्डितमूर्धन्यानां सहृदयचर्व्यमाणरससर्वस्वफलभारावनम्रः कम्रः काव्याख्यो महान् वनस्पतिः श्राव्यदृश्यात्मना सामान्यतो द्विधा प्रविभक्तः । वाल्मीक्यादिभिरादिकविभिरुप्तबीजो भासप्रभृतिभिरङ्कुरितः कालिदासादिमहाकविभिः कुसुमितः फलितश्चास्ति । भगवान् विश्वरूप श्रीकृष्ण इवापरिमेयाकृतिश्चतुर्दशभुवनमेव व्याप्य राराज्यत इति रसविदां हृदयमेव संवादीति ।

तथात्वे पुनरिदमप्युषाहरणं नाम श्राव्यरत्नं महाकाव्यं कालिदासकाव्यमिव द्राक्षापाकग्रथितं सत् सरसप्रसादमधुरं माघकाव्यमिवानेकालङ्कारचित्रबन्धबन्धुरं भारविकाव्यमिवार्थगौरवसुन्दरं श्रीहर्षकाव्यमिव प्रौढवर्णनमेदुरमितरकाव्यान्यतिशेत इत्यत्र नास्ति संशीतिलेशोऽपीति एतदनुशीलयतामतिरोहितमेव ।

कविरत्र प्रायः स्वल्पाक्षरवृत्तैः पाञ्चालीरीत्या नातिदीर्घसमासैः देवेशस्य भगवतः श्रीकृष्णस्य प्रादुर्भावमारभ्य कंसवधोग्रसेनराज्यदानावधिकचरितं प्रथमे सर्गे । द्वितीये जरासन्धजयानन्तरं कालयवनपीडानिवृत्तये गुप्तसभामन्त्रं, द्वारकानिर्माणात्परं श्रीकृष्णकृतकालयवनवधं च । तृतीये श्रीरुग्मिण्याहरणम् । चतुर्थे भैष्मीकृष्णसम्भोगशृङ्गारं, प्रद्युम्नोत्पत्तिं, शम्बरवधं, रतिसनाथमन्मथागतिं, कामस्य रुग्मवतीविवाहं, रुग्मवत्यामनिरुद्धजननं च निवबन्ध । पञ्चमे अनिरुद्धस्योपवनपद्माकरादिविहारं, स्वप्नदृष्टस्यानिरुद्धस्य उषासख्या चित्रलेखयापहरणमुषासङ्गमं च । षष्ठे द्वारवत्यामनिरुद्धादशनखिन्नप्रणयिनीविलापं श्रीकृष्णादिमन्त्रं, नारदागमनं, नारदोक्तमनिरुद्धापहरणं, तत्कारणं च । सप्तमे गरुडारूढानां रामकृष्णप्रद्युम्नानां शोणितपुरगमनं पुरपालकध्वंसनं शैवज्वरविजयरुद्रागमनं च । अष्टमे यमकचक्रबन्धादिचित्रकाव्यभङ्ग्या श्रीकृष्णप्रद्युम्नसंवादं, बाणसैनिकायोधनं, रुद्रयुद्धं, मुनीन्द्रकृतहरिहरप्रार्थनां, रुद्रावमर्दनं, बाणस्य करनिकरकृन्तनपूर्वकपराजयं च । नवमे रुद्रकृतश्रीकृष्णस्तवनं, उषया सहानिरुद्धं बन्धनाद्विमोच्य

गरुडमारोप्य श्रीकृष्णादिभिः पुनः स्वपुरं प्रत्यागमनं, बलभद्रकृतरैवतकवर्णनं, श्रीकृष्णाङ्गयोषादीनां गृहप्रवेशादिमङ्गलं च ।

एषा च कथा हरिवंशे द्वितीयपर्वणि (अ. ११६ तम अध्यायमारभ्य १२८ पर्यन्तं) विस्तरतो यथा वर्णिता, तथैव प्रायोऽत्र ग्रन्थे पुनः सरसीकृत्य निबद्धा दरीदृश्यते । अतः पञ्चमवेदतयातिप्रसिद्धमहाभारतान्तर्भूतत्वादाख्यानमिदमतिपावनं काव्यस्यास्यातिमहतीं प्रतिष्ठामादत्ते ।

काव्येऽत्र यद्यपि 'निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः' इत्युक्तलक्षणोऽनिरुद्धः केवलं वनिताविहारलोलुपः स्पृहणीयविलासः सम्भोगशृङ्गारपरवशो दक्षिणो दत्तो धीरललितो नायकः । नायिका च ज्ञातयौव्वना मुग्धा ललितोत्तमा पद्मिनी उषा भवितुमर्हति । रसश्च प्रधानः शृङ्गारः । अङ्गतया चेतरे करुणवीररौद्राद्भुतभयानकादयो रसाः दृश्यन्ते । नवमाध्याये एकशष्टितमश्लोकटीकायां 'अनेन चाहरणाविष्कृतधीरोदात्तनायकत्वं व्यज्यत' इति वदद्भिर्व्याख्यातृभिर्धीरोदात्तो नायक इति समर्थ्यते । काव्यपर्यालोचने तु अनिरुद्धस्योपवनादिविहारपरवशतया उषापहृतहृदयवत्तया च बहुधा वर्णनाच्छृङ्गारापेक्षया अल्पीयानेव वीरो रसो बाणयुद्धे निबद्ध इत्यनिरुद्धस्य धीरललितत्वमेव परं चकास्ति ।

तथापि कविसम्मतो नायकस्तु श्रीकृष्ण एव 'महासत्त्वोऽतिगम्भीरः कृपावानविकत्थनः । स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ।।' इत्युक्तलक्षणवत्तया धीरोदात्तो भवितुमर्हति । तथाहि– रुक्मिणीहरणे रुक्मिप्रतिरोधे कंसवधे रुद्रयुद्धे महासत्वस्थैर्यादिकं, प्रार्थयन्त्यां रुक्मिण्यां स्तुवति च महादेवे शत्रावपि रुक्मिणि बाणे च शैवज्वरे च कृपा, मन्त्रसभायां निगूढाहङ्कारत्वं, युद्धादावविकत्थनं, निर्विकारत्वाद्गाम्भीर्यं चात्र विस्तराद्भगवत्येव श्रीकृष्णे समर्थितम् । प्रागुक्तं व्याख्यातृवचनमप्यस्मिन्पक्षे सञ्जाघटीति । अन्यथोपोद्घाततया श्रीकृष्णः संक्षेपेण वर्णितः स्यात् । अत्र तु महाकाव्याङ्गतया नायकस्य श्रीकृष्णस्य रुक्मिणीविवाहः प्रद्युम्नानिरुद्धयोः

कुमारयोरुत्पत्तिश्चावर्ण्यत । शत्रवधसम्पादितस्य नायकाभ्युदयाङ्गतया उषाहरणमनिरुद्धकर्तृकं श्रीकृष्णायत्तत्वेनैव निबद्धम् । तदुक्तं कविनैव नवमाध्याये एकसप्ततितमे श्लोके 'अमित्रनिर्वापणनिर्वृतात्मना कृतश्च कन्याहरणोत्सवस्त्वया' इति । टीकायामपि– 'अनिरुद्धकर्तकमप्युषाहरणं स्वतन्त्रत्वात्त्वकृतमेवेति भावः' इत्युक्तम् । प्रथमे पञ्चमश्लोके 'न चात्र नैगुण्यकथा मुकुन्दपादाम्बुजस्मारकवाक्यबन्धे' इति श्रीकृष्णचरितमेव वर्णयामीति कविना प्रतिज्ञातं च दृश्यते । उषाहरणमिति काव्यनामापि कंसादिवधादप्यतिमहतो जगत्संहारकत्रिनेत्रविजयेन भुजसहस्रदुर्जयबाणविजयेन च भगवत्कर्तृकेन सम्पादितस्य उषाया आहरणरूपस्य स्वपौत्राभ्युदयस्य प्रधाननायकश्रीकृष्णनिष्ठत्वादौचितीमेवादधाति । अतो ज्ञायते प्रधाननायकः सर्वगुणाकरः श्रीकृष्ण एव । नायिका च प्रधाना उषाया अप्यधिकनायिका-गुणसर्वस्वशालिनी रमणीकुलललामभूता देवी रुक्मिणी । उपनायकौ प्रद्युम्नानिरुद्धौ । तत्पत्न्यौ च उपनायिके । वीरो रसः प्रधानः । शृङ्गारा-दयोऽङ्गतया वर्ण्यन्ते । यथा रामायणे नायकेनोपनायकस्य सुग्रीवस्य राज्याहरणादि । तथैवात्रापि भगवता प्रद्युम्नस्य रुग्मवतीसम्बन्धः । अनिरुद्ध-स्योषासमागमश्च सम्पादित इति युक्तमुत्पश्यामः ।

एतत्काव्यकर्ता च तौलवलिकुचकुलजात् सुब्रह्मण्यसूरेः पश्चिमाब्धितीरे कुम्बले जनपदे कावुमठाख्यगृहे हरिहरयोः प्रसादेन लब्धजन्मा कविकुल-तिलकस्त्रिविक्रमपण्डितः । एष खलु बाल्य एव स्ववशया देव्या वाण्या स्खलन्त्यापि मनोहारिण्या पांसुक्रीडनसहचारिण्या निरवद्यपद्यानि प्रथयन् पठनसमय एव काव्यमिदमरीरचत । तदुक्तं सुमध्वविजये– 'कलभाषण एव सूरिपौतः कविरासिदनवद्यपद्यवादी । अवभाति ननु प्रभाप्रभावी भगवान् बालतरोपि तिग्मभानुः ॥' इति । अध्यैष्ट च स्वकुलक्रमागतमद्वैतराद्धान्तम् । अजैषीद्धानुप्रभृतिविद्वद्वरान् । रहसि पित्राऽवसाने निर्गुणोपासनां त्यक्त्वा ज्ञानानन्दादिगुणगणरमणीयम्य वासुदेवस्यैवोपासना कर्तव्येत्यनुशिष्टोऽपि स्वयं विमृश्य युक्तमनुष्ठेयमिति विविक्ते निखिलशास्त्रसारमालोड्य सगुणोपास्तिरेव

युक्तेति निश्चिन्वानोऽद्वैतिभिर्विष्णुमङ्गले जयसिंहमहाराजेन सेव्यमानान् श्रीमध्वाचार्यान् जयेति प्रचोदितः पञ्चदशदिनानि श्रीमध्वाचार्यैर्विवदमानः पराजितः श्रीमाध्वमतदीक्षामूढ्वा श्रुतद्वैतसिद्धान्तः स्वयं माध्वसूत्रभाष्यस्य तत्वप्रदीपाख्यटीकां कृत्वा असूयुमायिजनप्रहितकृत्याहन्त्रीं नृसिंहस्तुतिं विष्णस्तुतिं वायुस्तुतिं च प्रणिनाय । अस्य च द्वैतिशिरोमणेः श्रीमध्वाचार्याणां च समानः कालः । श्रीमदाचार्याश्च शा. शके ११६०-१२३९ पर्यन्तं भूमाववसन्निति तच्चरितवेदिनोऽभिप्रयन्ति ।

कवेरस्य द्वावनुजौ शङ्करार्याख्यौ कल्याण्याख्या सोदरी नारायण-पण्डिताख्यः सुमध्वविजयकर्ता सुतश्चासन् । मध्वादत्तविष्णवर्चोऽन्ते सन्न्यास्यभूदस्य वृन्दावनं कावुमठेऽस्तीति विदन्ति विज्ञाः । काव्यमिदं द्वैतमतप्रवेशात्प्रागेव कृतमिति तत्सुतोक्ते सुमध्वविजये स्वपितृकथाकथने षडङ्गवेदाध्ययनानन्तरमुषाहरणं कृतवांस्ततोऽद्वैतं पपाठेत्युक्तत्वादत्र काव्ये माध्वसाम्प्रदायिकश्रीमध्वनमनाभावान् माध्वमतप्रक्रियानुल्लेखनाच्च स्फुटं विज्ञायते । अत्र (९-४) 'तत्सूनवो वयमिति रुद्रस्य कृष्णपौत्रत्वं (८-८३) 'परमेश्वरत्वं निश्चिन्महे' इति हरिसर्वोत्तमत्वमित्यादिमाध्व-तत्ववर्णनालोकने (म.वि.१३-६७) 'क्षणदासु विचक्षणः' इत्यद्वैत्यवस्थायामेव द्वैतप्रणयित्वमुक्तमस्य प्रतीयते ।

एतट्टीकाकाराश्च श्रीराघवेन्द्रतीर्थीयपीठाधिरूढाः श्रीसुमतीन्द्रतीर्थयतयः व्यङ्ग्यालङ्काराद्युदाहरणेन वेदान्तशाब्दसाहितीरसिकत्वं स्वटीकया व्यञ्जयन्ति ।

इदं च महाकाव्यं प्राक् मुम्बायिनगरे निर्णयसागरमुद्रणालयद्वारा १८६७ तमे मुद्रापितम् । परन्तु कालक्रमेण नष्टमासीत् । प्राच्यविद्यासंशोधनालयेऽपि अस्य ग्रन्थस्य असमग्रा मातुका एव आसन् । श्रीकृष्णार्चननिरतानां श्रीकृष्णापुरमठेशश्रीविद्याधीशतीर्थकरकमलसञ्जातानां श्रीमद्विद्यापूर्णतीर्थ-श्रीमच्चरणानां अनुग्रहेण आज्ञया च पावञ्जे गुरुरायमहाभागैः श्रीमद्विद्या-पूर्णतीर्थश्रीमच्चरणान्तेवासिनां बि. श्रीनिवासभट्टानां माग्रदर्शने इदं काव्यं पुनः

१९२७ तमे संवत्सरे स्वमुद्रणालये मुद्रापयित्वा प्रकाशितम् । प्रायः अस्य विषयस्य इदानीं शतगुंसमा व्यतीयुः । इदानीं नोपलभ्यते । अत वयमस्य काव्यग्रन्थस्य मुद्रणे प्रवृत्ताः ।

अस्य प्रतिष्ठानस्य प्रधानपोषकेभ्यः गाढावगाढसुधान्यायामृतचन्द्रिकादि-ग्रन्थपाठप्रवचनादिना अविरतशास्त्रसेवकेभ्यः सुधादिग्रन्थपाठनेन मत्स्वरूपो-द्धारकेभ्यः नैकविद्वच्छिष्येभ्यः अस्मद्गुरुचरणेभ्यः श्रीमदुत्तरादिपठाधीशेभ्यः अनन्तश्रीविभूषितेभ्यः परमपूज्येभ्यः श्रीसत्यात्मतीर्थेभ्यः स्मारं स्मारं सभक्तिश्रद्धं अनन्तानन्तप्रणतिततीः समर्पयामि ।

सुधाविशारदेभ्यः अस्मद्विद्यापीठस्य कुलपतिमहाभागेभ्यः शुकवत् शिक्षितेभ्यः पूज्येभ्यः गुत्तलार्येभ्यः साष्ठाङ्गं प्रणतीरर्पयामि ।

संस्थायाः संस्थापकेभ्यः महामहोपाध्यायेभ्यः पूज्येभ्यः कीर्तिशेषेभ्यः कृ.त.पाण्डुरङ्गी महोदयेभ्यः प्रणतीर्निवेदयामि ।

अधुना अमुं ग्रन्थं द्वैतवेदान्तसंशोधनकेन्द्रद्वारा संशोधयितुं अवकाशप्रदेभ्यः शोधकेन्द्रस्य गौरवनिदेशकपदं अलङ्कृतवद्भ्यः निरन्तरपाठाप्रवचनादिना जनानुरागिभ्यः निदेशकवचनं दत्वा अनुग्रहं कृतवद्भ्यः मान्येभ्यः डा. सत्यध्यानाचार्य कट्टि महोदयेभ्यः भूयांसि नमांसि ।

एतादृशविद्वत्पूर्णकाव्यप्रबन्धस्य अध्ययनाध्यापनादिना ज्ञानवृद्धिः भूयादिति भगवन्तं प्रार्थये ।

सज्जनविधेयः

**डा. वादिराजाचार्यः एल्.एस्.**

उपनिर्देशकः

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

बेङ्गळूरु-४



# ಉಷಾಹರಣ – ಒಂದು ಮಹಾಕಾವ್ಯ

ಕಾವ್ಯಪ್ರಕಾಶ, ಮಮ್ಮಟ ಇವರು ತಮ್ಮ ಪ್ರಸಿದ್ಧ ಕೃತಿಯಲ್ಲಿ 'ಕವೇ ಭಾರತೀ' ಅಥವಾ 'ಕಾವ್ಯದ ಭಾಷೆ,' ಕಾವ್ಯವು ಅನೇಕ ವಸ್ತುಗಳು ಹಾಗೂ ಸನ್ನಿವೇಶ-ಗಳನ್ನು ತನ್ನ ಕಾವ್ಯದಲ್ಲಿ ಉತ್ಪತ್ತಿ ಅಥವಾ ತೆರೆದುಕೊಳ್ಳುತ್ತದೆಂದು ತಿಳಿಸುತ್ತಾರೆ. ಅಲ್ಲದೇ ಈ ಕಾವ್ಯೋತ್ಪತ್ತಿಯು 'ಬ್ರಹ್ಮ'ನಿಗಿಂತ ಉತ್ತಮವೆಂದೂ ತಿಳಿಸುತ್ತದೆ. ಇದಕ್ಕೆ ಕಾರಣ ಕಾವ್ಯೋತ್ಪತ್ತಿಯು ಕವಿಯ ಮನಸ್ಸಿನ ವಿಚಾರವನ್ನಷ್ಟೇ ತಿಳಿಸು-ತ್ತದೆ; ಆದರೆ 'ಬ್ರಹ್ಮ'ನ ಬಗ್ಗೆ ತಿಳಿಯಪಡಲು ಇನ್ನೂ ಅನೇಕ ಬಾಹ್ಯಕಾರಣಗಳು ಅವಲಂಬಿತವಾಗಿದ್ದು ಕಾವ್ಯೋತ್ಪತ್ತಿಯ ಬ್ರಹ್ಮನಿಗಿಂತ ಉತ್ತಮ ಸ್ಥರದ್ದು ಆಗಿರುತ್ತದೆ,

ಪ್ರಚಲಿತವಾದ ವಿಚಾರವೇನೆಂದರೆ ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯ ಹಾಗೂ ವಿದ್ವತ್ ಪ್ರಪಂಚದಲ್ಲಿ ಯಾವುದೇ ಹಿರಿಯದಾದ ಅಥವಾ ಸಂಖ್ಯೆಯಲ್ಲಿ ದೊಡ್ಡದಾದ ಕಾವ್ಯಗಳು 'ಮಹಾಕಾವ್ಯ'ವೆಂದು ಪರಿಗಣಿಸಬೇಕಿಲ್ಲ. ಆದರೂ ಸಂಸ್ಕೃತ ವಿಮರ್ಶಕರು 'ಮಹಾಕಾವ್ಯ'ದ ಪರಿದಿಯಲ್ಲಿರಬೇಕಾದ ನಿಯಮಗಳನ್ನು ಪಟ್ಟಿ ಮಾಡಿರುತ್ತಾರೆ. ಪ್ರಸಿದ್ಧ ವಿಮರ್ಶಕರಾದ 'ಭಾಮಹ,' 'ದಂಡಿ, ವಿಶ್ವನಾಥ ಮುಂತಾದವರು ನಿಬಂಧಿಸಿದ ಕೆಲವು 'ಮಹಾಕಾವ್ಯ'ದ ಆವಶ್ಯಕ ಗುಣಗಳು ಹೀಗೆ ಕೆಳಕಂಡಂತಿವೆ; ಭಾಮಹ, ದಂಡಿ, ವಿಶ್ವನಾಥ, ಈ ಮೂವರು ಸಾಹಿತ್ಯ ವಿಮರ್ಶಕಕಾರರ ಕೃತಿಗಳನ್ನು ಕೂಲಂಕುಶ ಸೂಕ್ಷ್ಮವಾಗಿ ಪರಿಶೀಲಿಸಿದ ಮೇಲೆ ಅವರ 'ಗುರುತು'ಗಳ ಪೈಕಿ ಭಾಮಹ ಹಾಗೂ ದಂಡಿಯವರ ವಿಚಾರಗಳಲ್ಲಿ ಅನೇಕ ಸಾಮ್ಯಗಳಿರುವುದು ವಿದಿತವಾಗುವುದು ಹಾಗೂ 'ವಿಶ್ವನಾಥ'ರು ಕೆಲವು ಇತರ ವಿಚಾರಗಳನ್ನು ಹೊರತಂದಿದ್ದಾರೆ.

ಆದ್ದರಿಂದ ಅವುಗಳ ಪರಿಚಯ ಹೀಗಿದೆ-

1) 'ಮಹಾಕಾವ್ಯ'ವು ತನ್ನ ಪ್ರಾರಂಭಿಕ ಸಾಲುಗಳಲ್ಲಿ ವಂದನಾ ಹಾಗೂ ಕೃತಜ್ಞತಾಪೂರ್ವಕ ಅಥವಾ ವಿಷಯವನ್ನು ಸಂಗ್ರಹರೂಪದಲ್ಲಿ ಪ್ರಸ್ತುತಪಡಿಸಿ ಚಾರಿತ್ರಿಕ ಹಿನ್ನೆಲೆ, ಇನ್ನಿತರ ವಿಷಯಗಳಿಂದ ಪ್ರಸ್ತಾವನೆ ಮಾಡಿರಬೇಕು.

2) 'ಮಹಾಕಾವ್ಯ'ವು ಮಾನವ ಜೀವನದ ನಾಲ್ಕು ಪ್ರಮುಖ ಘಟ್ಟಗಳ ವಿಶೇಷತೆಗಳನ್ನು ಮೆರೆಯುತ್ತ ಅದಕ್ಕೆ ಸಾರ್ಥಕವಾಗಿರುವಂಥ ಒಬ್ಬ ಉದಾತ್ತತೆ-ಗಳನ್ನು ಪ್ರತಿನಿಧಿಸುವಂಥ 'ಕಥಾನಾಯಕ'ನನ್ನು ಸ್ಮರಿಸಬೇಕು.

3) 'ಮಹಾಕಾವ್ಯ'ವು ಅಂದಿನ ಸಾಮಾಜಿಕ ಪರಿಸ್ಥಿತಿಗಳನ್ನು ಪ್ರಸ್ತುತಪಡಿಸಿ ಕಾವ್ಯವನ್ನು ನೈಜತೆಯಲ್ಲಿ ಪ್ರತಿನಿಧಿಸಬೇಕು. ಇದು ಅಂದಿನ ನಾಗರೀಕತೆ, ನಗರಪ್ರದೇಶಗಳು, ಸಮುದ್ರಸಾಗರಗಳು, ಬೆಟ್ಟಗುಡ್ಡ ಮುಂತಾದ ಪ್ರಾಕೃತಿಕ ಪರಿಚಯ, ಋತುಮಾನಗಳು, ಸೂರ್ಯ ಚಂದ್ರರ ಚಲನೆ ಉದಯಾಸ್ತ-ಮಾನಗಳು, ಕ್ರೀಡೆ, ಉದ್ಯಾನ, ಜಲಕ್ರೀಡೆಗಳು, ಯುವಜನರ ಪ್ರೇಮ, ಕಲಹ ಪ್ರಮೇಯಗಳು, ಹುಟ್ಟುಹಬ್ಬಗಳು, ಮದುವೆ-ಉಪನಯನ ಸಂಸ್ಕಾರಗಳು, ಆಡಳಿತ, ಮಂತ್ರಿ-ಮಹೋದಯರ ಕಾರುಭಾರುಗಳು, ಸೈನ್ಯ ಇತರ ರಾಜತಾಂತ್ರಿಕ ವ್ಯವಹಾರಗಳು, ಆಡಳಿತ ಸುಧಾರಣೆಗಳನ್ನು ಒಳಗೊಂಡ ಕಥಾನಾಯಕನ ಸಾಹಸ ಹಾಗೂ ಔನ್ನತಿ ಹಾಗೂ ಜಯಶೀಲತೆಗಳನ್ನು ಪ್ರಸ್ತುತಪಡಿಸುವುದು.

4) ಕಾವ್ಯಗಳ ಛಂದಸ್ಸು, ಪರಿಚ್ಛೇದ, ಅಷ್ಟಕ, ಪಂಕ್ತಿ , ಸರ್ಗ, 8ಕ್ಕಿಂತ ಹೆಚ್ಚು ಸಾಲುಗಳನ್ನು ಹೊಂದಿರಬೇಕು. ಹಾಗೂ ಉತ್ತಮವಾದ ಮನೋಭಾವನೆಗಳು ಹಾಗೂ ಭಾಷೆಯಲ್ಲಿನ ಪ್ರತಿಭೆಗಳು, ಚಮತ್ಕಾರಿಕ ಹಾಗೂ ವೈಚಾರಿಕತೆಗಳು ಇರಬೇಕು.

5) ಸರ್ಗಗಳು ಅತೀ ಉದ್ದವಾಗಿರದೇ ಉತ್ತಮವಾದ ಹಾಗೂ ಇಂಪಾದ ಪ್ರಾಸ, ಶಬ್ದ ಜೋಡಣೆಗಳನ್ನು ಹೊಂದಿರಬೇಕು. ಅಂತಿಮದಲ್ಲಿ ಬೇರೆ ಬೇರೆ ಮೀಟರುಗಳನ್ನು(?) ಹೊಂದಿರಬೇಕು.

6) ಕಥಾನಾಯಕ ಅಥವಾ ಕಾವ್ಯದ ಹೀರೋನ ಗುಣಗಳು ಆಕರ್ಷಕ ಹಾಗೂ ಉದಾತ್ತವಾಗಿದ್ದು ಅದನ್ನು ಪ್ರಥಮ ಅಧ್ಯಾಯಗಳಲ್ಲಿ ವಿಷದೀ-ಕರಿಸಿರಬೇಕು. ಅವನು ಗೆಲುವನ್ನು ಸಾಧಿಸಿರುವ ಪ್ರಸಂಗ, ಶತ್ರುಗಳು, ಖಳನಾಯಕರು ಹಾಗೂ ಅವರ ವಿಶೇಷತೆ ಗುಣಗಳನ್ನೂ ಪ್ರಸ್ತುತ ಪಡಿಸಿರಬೇಕು.

7) ಕಾವ್ಯನಾಮವು, ಕವಿ ಅಥವಾ ಕಥಾನಯಕ, ಅದರ ನಾಯಕ ಹಾಗೂ ಇತರ ಪಾತ್ರಧಾರಿಗಳ ಗುರುತುಗಳನ್ನು ಹೊಂದಿದ್ದು ಸರ್ಗಗಳು ಸನ್ನಿವೇಷ, ವ್ಯಕ್ತಿತ್ವಗಳನ್ನು ಬಿಂಬಿಸಬೇಕು.

8) 'ಕ್ಯಾಂಟೋಸ್'ಗಳು ಕಥೆಯ ಪ್ರಮುಖ ಭಾಗವನ್ನು ಪ್ರತಿನಿಧಿಸಬೇಕು. ಹಾಗೂ ಮುಂದಿನ ಅಧ್ಯಾಯಕ್ಕೆ ಸಣ್ಣ ಪೀಠಿಕೆಯನ್ನು ಒದಗಿಸಬೇಕು.

9) 'ನಾಯಕ' ಒಬ್ಬನೇ ಆಗಬೇಕೆಂದಿಲ್ಲ. ಆ ಸಂಸ್ಥಾನಿಕರ ಅಥವಾ ಪರಂಪರೆ, ವಂಶಜರ ವಿಚಾರಗಳನ್ನು ಒಳಗೊಂಡಿರಬೇಕು.

10) ಕಾವ್ಯವು ದುಷ್ಟಶಕ್ತಿಗಳ ದಮನ ಹಾಗೂ ಶಿಷ್ಟಶಕ್ತಿ ವ್ಯಕ್ತಿಗಳ ವಿಚಾರಧಾರೆಗಳನ್ನು ಪ್ರತಿಧ್ವನಿಸಬೇಕು.

11) ಈ ಮೇಲೆ ಗುರುತಿಸಿದ 'ಗುಣ' ಅಂಶಗಳನ್ನು ಹೊಂದಿಲ್ಲದಿದ್ದರೂ 'ಮಹಾಕಾವ್ಯ'ವೆಂದಿನಿಸದಿರಬೇಕೆಂದಿಲ್ಲ. ಆದರೆ ಈ ಸಂದರ್ಭದಲ್ಲಿ ಆ ಕಾವ್ಯದ ಕಟ್ಟಡವು ಮನೋಲ್ಲಾಸವಾಗಿದ್ದರೆ ಪರವಾಗಿಲ್ಲ, ಸಾಕು.

12) ಕಾವ್ಯವು ಸುಲಭ, ಸುಲಲಿತ, ಅರ್ಥವಾಗುವಂತಿರಬೇಕು ಹಾಗೂ ಓದುಗರಿಗೆ ಹೊಸ ವಿಷಯ, ವಿಚಾರ ಕುತೂಹಲಗಳನ್ನು ತಣಿಸಬೇಕು.

ಡಾ|| ಡಿ.ಎನ್. ಶ್ಯಾನಭಾಗರು ತಮ್ಮ ಗದ್ಯ 'ರುಕ್ಮಿಣೀಶ ವಿಜಯ' ಕಾವ್ಯದಲ್ಲಿ ಕೆಲವು (ಸೂಕ್ಷ್ಮ, ಸೂಕ್ತ) ಸೂಚನೆಗಳನ್ನು (ಅಭಿಪ್ರಾಯಗಳನ್ನು) ಕೊಟ್ಟಿರುವವರು ಹೀಗಿದೆ : ''ಈ ಮೂವರ ಕೃತಿಗಳಲ್ಲಿ, ವಿಮರ್ಷೆಗಳು ಕಟ್ಟುನಿಟ್ಟುಗಳ ಸರಪಳಿಗಳ ಬದಲಾಗಿ ಓದುಗರ ಮನಗೆಲ್ಲುವಂಥ ಸಡಲಿಕೆಗಳ (Hexibility)ನ್ನು ಹೊಂದಿರುವುದು ಉತ್ತಮಪಕ್ಷ. ಇದಕ್ಕೆ ಕಾರಣ ಕಾವ್ಯಪ್ರಪಂಚದಲ್ಲಿ ಕವಿಯೇ ಪ್ರಧಾನ ಚಿಂತಕ, ಉತ್ಪತ್ತಿಕಾರ, ಸ್ಥಿತಿಕಾರ ಹಾಗೂ ಸಂಹಾರಕಾರನೂ ಕೂಡ, ಅಂದರೆ ಇತರರ ಚಿಂತನೆ, ವಿಚಾರಗಳಿಗೆ ಆಸ್ಪದ-ವಿಲ್ಲದಿರುವಿಕೆ. ಅಲ್ಲದೇ ಕವಿಯು ಸಾಹಿತ್ಯಿಕ ಹಾಗೂ ಇನ್ನಿತರ ಸಂಪ್ರದಾಯ-ಗಳಿಗೆ ಅಲುಗಾಡದಂತಹ ಬಂಧನಗಳಿಗೊಡಲ್ಪಡಬಾರದು. ಹಾಗೆಂದು ಸ್ವೇಚ್ಛಾಸ್ವಾತಂತ್ರ್ಯವಿದೆಯೆಂದೂ ಅಲ್ಲ. ಈ ಎರಡೂ ವಿಪರೀತಗಳು ಹಾನಿಕಾರವು; ಕಾವ್ಯದ ಉತ್ಕರ್ಷ ಹಾಗೂ ಪ್ರಗತಿಗಳಿಗೆ ಕಾವ್ಯವು ಮಹಾಗಾತ್ರ-ವಾಗಲೀ ಚೊಕ್ಕದಾದದ್ದಾಗಿರಲೀ ರಚನೆಯ ಸಂದರ್ಭದಲ್ಲಿ ಒಂದೇ ಪ್ರಪ್ರಥಮಗುರಿಯಾಗಿ ಓದುಗನ, ಅಧ್ಯಯನೀಯ ಮನಸ್ಸಿಗೆ, ಹಿತ, ಉಲ್ಲಾಸ, ಹಾಗೂ ಸಾರ್ಥಕತೆಗಳನ್ನು ಪೂರೈಸಬೇಕು. ಅಂತಹ ಕವಿಯು ಈ ಮೇಲೆ ಗುರುತಿಸಿದ ವಿಮರ್ಷಕರ ಗೊತ್ತುವಳಿಗಳನ್ನು ಉತ್ತಮವಾಗಿ, ಸಮೀಚೀನವಾಗಿ ಮುಟ್ಟುವುದರಲ್ಲಿ ಸಫಲನೇ ಆಗುವನೇ ಹೊರತು ಕಟ್ಟುನಿಟ್ಟುಗಳ ಬಂಧನದಲ್ಲಿ ಸಿಲುಕಬೇಕಾದ ದುಃಸ್ಸಾಹಸಕ್ಕೊಳಗಾಗುವ ಅವಶ್ಯಕತೆಗಳು ಇಲ್ಲ.

ಹೀಗೆ ಅಂತಹ ಕವಿಯು ನಿಬಂಧನೆಗಳನ್ನು ಮೀರದೇ 'ಅತಿಶ್ರಮಿ'ಯೂ ಆಗದೆ ಕಟ್ಟುಪಾಡುಗಳಲ್ಲಿ ತೊಡರಿಕೊಳ್ಳದೆಯೂ, ಮಧ್ಯಮ ಮಾರ್ಗದಲ್ಲಿ ಶ್ರೋತೃಗಳ ಮನೋಲ್ಲಾಸ ಹಾಗೂ 'ಕಾವ್ಯ' ಶೈಲಿಗಳ ಸೌಂದರ್ಯಗಳನ್ನು

ಮರೆಮಾಚದೇ ಉತ್ತಮ ದೃಷ್ಟಿಕಾರನಾಗುತ್ತಾನೆ. ಶ್ರೋತೃಗಳ ವೈಚಾರಿಕ ಸ್ಪಂದನೆಯನ್ನೂ ಗೌರವಿಸಿ, ವಿಮರ್ಷಕರ ಅಭಿಲಾಷೆ, ನಿಬಂಧನೆಗಳ ದಿಕ್ಕು ದೆಶೆಗಳನ್ನು ಮೀರದೇ ಅತ್ಯಂತ ಸಫಲ ಕೃತಿಯನ್ನು ಹೊರತರುವಲ್ಲಿ ಯಶಸ್ವಿಯಾಗುವುದು ವಿದಿತ.

ಈ ಎಲ್ಲಾ ಮೇಲಿನ ಪೀಠಿಕೆಗಳನ್ನು ಪ್ರಸ್ತಾವಿಸಲ್ಪಟ್ಟಿರುವ ಉದ್ದೇಶವೇನೆಂದರೆ ಶ್ರೀಯುತರಾದ ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ನೈಜ ಕವಿಯಾಗಿ ಎಲ್ಲಾ ನಿಬಂಧನೆ ಹಾಗೂ ವಿಮರ್ಷೆಗಳಿಗೆ ಉತ್ತಮವಾಗಿ ಸ್ಪಂದಿಸಿ ಮಹಾಕಾವ್ಯದ ಕೇಂದ್ರಬಿಂದುವಾದ ಶ್ರೀಕೃಷ್ಣನ ಮಹಿಮೆಗಳ ಮಂಗಳವಾದ ಗುಣಗಾನಗಳನ್ನು ಮಾಡುವುದಲ್ಲದೆ ಭಗವಂತನ ಕೃಪಾಕಟಾಕ್ಷಕ್ಕೂ ಪಾತ್ರರಾಗಿರುತ್ತಾರೆ.

## ಕವಿಪರಿಚಯ

ಶ್ರೀ ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರ ಕಾಲ 13ನೆಯ ಶತಮಾನ. ಶ್ರೀಮದಾನಂದತೀರ್ಥ ಭಗವತ್ಪಾದಾಚಾರ್ಯರ ಸಮಕಾಲೀನರು. ಇವರ ಊರು ಕಾಸರಗೋಡು, ಕಾಸರಗೋಡಿನ ಆಗಿನ ಹೆಸರು ಕಲೆನಾಡು, ಆಗ ಆ ಊರು ತುಳುನಾಡಿನ ಎಲ್ಲ ಚಟುವಟಿಕೆಗಳ ಕೇಂದ್ರಸ್ಥಾನವಾಗಿತ್ತು. ತುಳು-ನಾಡಿನ ರಾಜಧಾನಿಯಂತೆ ಇತ್ತು. ಈಗ ಅದು ತುಳುನಾಡಿನಿಂದ ಬೇರ್ಪಟ್ಟು ಕೇರಳ ರಾಜ್ಯದ ಒಂದು ಭಾಗವಾಗಿದೆ. ಶ್ರೀ ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ವಾಸವಾಗಿದ್ದ ಮನೆ ಕಾವುಮಠ. ಈಗಲೂ ಈ ಮನೆಯು ಈ ಹೆಸರಿನಿಂದಲೇ ಕಾಸರಗೋಡಿನಲ್ಲಿದೆ. ಅವರ ವಂಶದವರು ಈಗಲೂ ಅಲ್ಲಿ ವಾಸವಾಗಿದ್ದಾರೆ.

ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರ ತಂದೆಯ ಹೆಸರು ಸುಬ್ರಹ್ಮಣ್ಯ ಪಂಡಿತರು ಆಂಗಿರಸ ಗೋತ್ರದವರು, ಪಜತ್ತಾಯ ವಂಶದವರು, ಘನವಿದ್ವಾಂಸರು. ಮಧ್ವಗುರುಗಳು ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರಿಗೆ ಅನುಗ್ರಹಿಸಿದ ಶ್ರೀ ಲಕ್ಷ್ಮೀನಾರಾಯಣ ಪ್ರತಿಮೆ ಈಗಲೂ ಈ ವಂಶದವರ ಮನೆಯಲ್ಲಿ ಪೂಜೆಗೊಳ್ಳುತ್ತಿದೆ.

ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ಲಿಕುಚ ವಂಶದವರು. ಈ ಮನೆತನದವರು ದಕ್ಷಿಣ ಕನ್ನಡ ಜಿಲ್ಲೆಯಲ್ಲಿ ಈಗಲೂ ಸಾಕಷ್ಟು ಸಂಖ್ಯೆಯಲ್ಲಿ-ದ್ದಾರೆ. ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ಬದುಕಿದ್ದ ಆ ಕಾಲ ಆರ್ಥಿಕವಾಗಿ, ಸಾಮಾಜಿಕವಾಗಿ, ಆಧ್ಯಾತ್ಮಿಕವಾಗಿ ತುಂಬಾ ಉನ್ನತ ಸ್ಥಿತಿಯಲ್ಲಿದ್ದ ಕಾಲ ಅದು. ಇಮ್ಮಡಿ ಜಯಸಿಂಹ ಆಗ ತುಳುನಾಡಿನ ರಾಜನಾಗಿದ್ದ.

ಆಧ್ಯಾತ್ಮಿಕ ಪ್ರಪಂಚದಲ್ಲಿ ಹೊಸ ಕ್ರಾಂತಿಯನ್ನೇ ಉಂಟು ಮಾಡಿ ಆಧ್ಯಾತ್ಮಿಕ ಚಿಂತನೆಗೆ ಹೊಸ ಬೆಳಕು ನೀಡಿದ ಶ್ರೀಮದಾನಂದತೀರ್ಥ ಭಗವತ್ಪಾದಾ- ಚಾರ್ಯರ ಸಮಕಾಲೀನರು ಶ್ರೀ ತ್ರಿವಿಕ್ರಮಪಂಡಿತಾಚಾರ್ಯರು, ಎಂಬುದು ಒಂದು ವೈಶಿಷ್ಟ್ಯ. ಮಧ್ವಾಚಾರ್ಯರ ವಿದ್ವತ್ತು, ಅವರ ಪಾಂಡಿತ್ಯದ ವೈಖರಿ, ವ್ಯಕ್ತಿತ್ವಗಳನ್ನು ಕೇಳಿ ತಿಳಿದ ತ್ರಿವಿಕ್ರಮರು ತಾವೂ ಆಚಾರ್ಯರನ್ನು ಪ್ರತ್ಯಕ್ಷವಾಗಿಯೇ ನೋಡಬೇಕೆಂದು ಹಂಬಲಿಸುತ್ತಿದ್ದರು. ಅವರು ಜಯಸಿಂಹನ ಆಸ್ಥಾನ ಕವಿ ಆಗಿದ್ದರು. ಅದ್ವೈತ ವೇದಾಂತದಲ್ಲಿ ಅದ್ವಿತೀಯ ಪಂಡಿತರೆಂದು ಹೆಸರಾಗಿದ್ದರು. ದೇಶದ ಪಂಡಿತರೆಲ್ಲರೂ ಅವರನ್ನು ಅಗ್ರಮಾನ್ಯವಿದ್ವಾಂಸ- ರೆಂಬುದಾಗಿ ಅಂಗೀಕರಿಸಿದ್ದರು. ಆದರೂ ಮಧ್ವಗುರುಗಳನ್ನು ಭೇಟಿಯಾಗಿ ಅವರೊಡನೆ ಚರ್ಚಿಸಿ ತನ್ನ ಸಂಶಯಗಳನ್ನು ಪರಿಹರಿಸಿಕೊಳ್ಳಲು ಅವರ ಮನಸ್ಸು ಹಾತೊರೆಯುತ್ತಿತ್ತು.

ಶ್ರೀಹರಿಯ ಸಂಕಲ್ಪದಂತೆ ಆಚಾರ್ಯರು ಸಂಚಾರಕ್ರಮದಲ್ಲಿ ಕಾಸರಗೋಡಿಗೆ ಬಂದರು. ವಿಷ್ಣು ಮಂಗಲ ದೇವಸ್ಥಾನದಲ್ಲಿ ಅವರು ತಂಗಿದ್ದರು. ಮಧ್ವಗುರುಗಳ ವಿಚಾರಧಾರೆಗೆ ಮನಸೋತು ತ್ರಿವಿಕ್ರಮರು ಆಚಾರ್ಯರನ್ನು ಭೇಟಿ ಆದರು. ಅವರ ಜೊತೆಯಲ್ಲಿ 15 ದಿನಗಳ ಕಾಲ ಚರ್ಚಿಸಿದರು. ತಮ್ಮ ಎಲ್ಲ ಸಂಶಯಗಳನ್ನೂ ಪರಿಹರಿಸಿಕೊಂಡರು. ತಲೆಮಾರಿನಿಂದ ನಂಬಿಕೊಂಡು ಬಂದಿದ್ದ ಮಾಯಾವಾದವನ್ನು ತೊರೆದು ಶ್ರೀಮದಾಚಾರ್ಯರ ಶಿಷ್ಯರಾದರು.

ತ್ರಿವಿಕ್ರಮರು ಸಣ್ಣ ಹುಡುಗನಾಗಿದ್ದಾಗಲೇ ಕವಿತೆಗಳನ್ನು ಬರೆಯುತ್ತಿದ್ದರು. ವಿದ್ವಾಂಸರು ಇವರ ಪ್ರತಿಭೆಯನ್ನು ಕಂಡು ಆಶ್ಚರ್ಯಚಕಿತರಾದರು. ತ್ರಿವಿಕ್ರಮರು ಹರೆಯ ವಯಸ್ಸಿನಲ್ಲಿ ಉಷಾಹರಣ ಎಂಬ ಎಂಟು ಸರ್ಗದ ಕಾವ್ಯವನ್ನು ರಚಿಸಿದರು.

ಗುರುಗಳಾದ ಶ್ರೀಮದಾಚಾರ್ಯರ ಅಪ್ಪಣೆಯನ್ನು ಶಿರಸಾ ವಹಿಸಿದ ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ಆಚಾರ್ಯರ ಬ್ರಹ್ಮಸೂತ್ರ ಭಾಷ್ಯಕ್ಕೆ ತತ್ತ್ವಪ್ರದೀಪ (ತತ್ವಪ್ರದೀಪಿಕಾ) ಎಂಬ ಅಸಾಮಾನ್ಯವಾದ, ಅಸದೃಶವಾದ, ಅದ್ಭುತವಾದ, ರಮ್ಯವಾದ ಒಂದು ಟೀಕೆಯನ್ನು ಬರೆದರು. ಹೀಗೆ ಶಿಷ್ಯನ ಪ್ರಾರ್ಥನೆಯನ್ನು ವಾತ್ಸಲ್ಯದಿಂದ ಅಂಗೀಕರಿಸಿದ ಗುರುಗಳು ಬ್ರಹ್ಮಸೂತ್ರ- ಗಳನ್ನು ಕುರಿತು ಇನ್ನೊಂದು ಭಾಷ್ಯವನ್ನು ಅಂದರೆ ಅನುಭಾಷ್ಯವನ್ನು ಅಥವಾ ಅನುವ್ಯಾಖ್ಯಾನವನ್ನು ರಚಿಸಿದರು. ಹೀಗೆ ಗುರುಗಳ ಮತ್ತು ಶಿಷ್ಯರ

ಬಾಂಧವ್ಯವು ತುಂಬಾ ಮಧುರವಾಗಿತ್ತು. ಶ್ರೀ ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರ ಬಗ್ಗೆ ಇಷ್ಟು ವಿಷಯಗಳನ್ನು ನಾವು ಅವರ ಮಕ್ಕಳಾದ ಶ್ರೀ ನಾರಾಯಣ ಪಂಡಿತಾಚಾರ್ಯರು ಬರೆದ ಸುಮಧ್ವವಿಜಯ ಎಂಬ ಮಹಾಕಾವ್ಯದ ''ಕಲಭಾಷಣ ಏವ ಸೂರಿಪೋತಃ ಕವಿರಾಸೀದನವದ್ಯಪದ್ಯವಾದೀ'' ''ಸ ಸಸರ್ಜ ಸದಧ್ವಗೋಪಕೃತ್ಯೈ ಲಿಕುಚಃ ಕಾವ್ಯಫಲಂ ರಸಾಭಿರಾಮಮ್ ॥'' ''ತಂ ವಿಷ್ಣುಮಂಗಲಗತಂ ಬಹುಲಪ್ರಬೋಧಂ ಪ್ರಾಪ್ಯಾಭ್ಯವಂದತ ತಾಯುಗವಿಕ್ರಮಾರ್ಯಃ । ಆನಂದದಂ ಸ ಚತುರಾನನಹಾಸಲಕ್ಷ್ಮ್ಯೈ ತತ್ತ್ವಂ ಪ್ರವೇತ್ತುಮಮರೇಂದ್ರ ಇವಾಬ್ಜಯೋನಿಮ್'' ''ಗುರ್ವಾಜ್ಞಾಗೌರವಾಟ್ಟೀಕಾಂ ಕುರ್ವನ್ ಭಾಷ್ಯಸ್ಯ ದುಷ್ಕರಾಮ್ ।''

''ಮನೋಮಾಂದ್ಯಾದತೋ ಗ್ರಂಥಂ ವ್ಯಕ್ತತರ್ಕತತಿಂ ಕುರು'' 13, 14 ಮತ್ತು 15ನೆಯ ಸರ್ಗಗಳಿಂದ ತಿಳಿದುಕೊಳ್ಳಬಹುದಾಗಿದೆ.

1. ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರ ತಂದೆ ಸುಬ್ರಹ್ಮಣ್ಯ ಪಂಡಿತರು. ಅವರೂ ವಿದ್ವಾಂಸರಾಗಿದ್ದರು. ಅವರು ಅದ್ವೈತ ವೇದಾಂತದಲ್ಲಿ ಪಾರಂಗತ-ರಾಗಿದ್ದರು. ಅವರೂ ಕೃತಿಗಳನ್ನು ರಚಿಸಿರಬಹುದು. ಆದರೆ ಅವುಗಳು ಈವರೆಗೆ ಉಪಲಬ್ಧವಾಗಿಲ್ಲ.

2. ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರ ತಮ್ಮ ಶಂಕರ ಪಂಡಿತರು. ಅವರೂ ಸಹ ವಿದ್ವಾಂಸರು, ಶ್ರೀಮದಾನಂದತೀರ್ಥರ ಅನುಗ್ರಹಕ್ಕೆ ಪಾತ್ರರಾದವರು.

3. ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರ ತಂಗಿ ಕಲ್ಯಾಣೀದೇವೀ ಎಂದು ಇತಿಹಾಸವಿದೆ. ಈಕೆಯೂ ವಿದುಷಿ ಆಗಿದ್ದಳು.

4, ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರಿಗೆ ಮೂವರು ಗಂಡು ಮಕ್ಕಳು. ಇವರಲ್ಲಿ ಮೂರನೆಯವರ ಹೆಸರು ನಾರಾಯಣಪಂಡಿತಾಚಾರ್ಯರು ಎಂಬುದಾಗಿ ಇತ್ತು. ಉಳಿದ ಇಬ್ಬರ ಹೆಸರು ತಿಳಿದು ಬಂದಿಲ್ಲ.

ಈ ವಂಶದವರು ಸಂಸ್ಕೃತ ಪ್ರಪಂಚಕ್ಕೆ ಅದರಲ್ಲಿಯೂ ಮಧ್ವಸಿದ್ಧಾಂತಕ್ಕೆ ನೀಡಿರುವ ಅಸಾಧಾರಣ ಕೊಡುಗೆಯನ್ನು ನಾವು ಹೀಗೆ ಗಮನಿಸಬಹುದು. ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ಶ್ರೀಮದಾಚಾರ್ಯರು ಬರೆದ ಬ್ರಹ್ಮಸೂತ್ರ ಭಾಷ್ಯಕ್ಕೆ ತತ್ತ್ವಪ್ರದೀಪ ಎಂಬ ಟೀಕೆಯನ್ನು ಬರೆದರು. ಅವರ ತಮ್ಮಂದಿರಾದ ಶಂಕರ ಪಂಡಿತರು ಮಧ್ವಾಚಾರ್ಯರು ಬರೆದ ಅನುವ್ಯಾಖ್ಯಾನಕ್ಕೆ

ನ್ಯಾಯವಿವರಣದ ಬೆಳಕಿನಲ್ಲಿ ಟೀಕೆಯನ್ನು ಬರೆದರು. ತ್ರಿವಿಕ್ರಮಪಂಡಿತಾ-ಚಾರ್ಯರ ಮಕ್ಕಳಾದ ನಾರಾಯಣಪಂಡಿತಾಚಾರ್ಯರು, ಮಧ್ವಾಚಾರ್ಯರು ಬರೆದಿರುವ ಅನುವ್ಯಾಖ್ಯಾನಕ್ಕೆ ನಯಚಂದ್ರಿಕಾ ಎಂಬ ಟೀಕೆಯನ್ನು ಬರೆದರು. ನಾರಾಯಣಪಂಡಿತಾಚಾರ್ಯರ ಮಗ ವಾಮನಪಂಡಿತಾಚಾರ್ಯರು ಮಧ್ವಾಚಾರ್ಯರು ಬರೆದ ಅಣುಭಾಷ್ಯ(ಸರ್ವಶಾಸ್ತ್ರಾರ್ಥಸಂಗ್ರಹ)ಕ್ಕೆ ಆನಂದಮಾಲಾ ಎಂಬ ಟೀಕೆಯನ್ನು ರಚಿಸಿದ್ದಾರೆ.

ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯ ಪ್ರಪಂಚಕ್ಕೆ ನೀಡಿದ ಕೊಡುಗೆ ಅಪಾರ ಮತ್ತು ಅಮೂಲ್ಯ. ಇಡೀ ಪಂಡಿತ ಮನೆತನಕ್ಕೆ ಸ್ಫೂರ್ತಿ-ದಾಯಕರಾದವರು ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು.

## ಕೃತಿಪರಿಚಯ

1. ಉಷಾಹರಣ : ಒಂಬತ್ತು ಸರ್ಗಾತ್ಮಕವಾದ ಮಹಾಕಾವ್ಯ.

2. ವಿಷ್ಣುಸ್ತುತಿ : ಶ್ರೀ ಹರಿಯ ಸ್ತೋತ್ರ.

3. ವಾಯುಸ್ತುತಿ : ಹನುಮ ಭೀಮ ಮಧ್ವರೂಪಿಯಾದ ವಾಯುದೇವರ ಮಹಿಮೆಯ ವರ್ಣನಾರೂಪ ಸ್ತೋತ್ರ.

4, ತತ್ತ್ವಪ್ರದೀಪ : ಮಧ್ವಗುರುಗಳ ಅಪ್ಪಣೆಯ ಮೇರೆಗೆ (ತತ್ತ್ವದೀಪಿಕಾ) ಆಚಾರ್ಯರ ಭಾಷ್ಯದ ಮೇಲೆ ರಚಿಸಿದ ಪ್ರೌಢವಾದ ಟೀಕಾ ಗ್ರಂಥ

ಈ ನಾಲ್ಕು ಗ್ರಂಥಗಳು ನಮಗೆ ಉಪಲಬ್ದವಾಗಿವೆ. ಇದಲ್ಲದೇ ಕೃಷ್ಣಾಚಾರ್ಯರು ತಮ್ಮ ಸ್ಮೃತಿಮುಕ್ತಾವಳಿ ಎಂಬ ಗ್ರಂಥದಲ್ಲಿ ತ್ರಿವಿಕ್ರಮ-ಪಂಡಿತಾಚಾರ್ಯರ ತಿಥಿನಿರ್ಣಯದ ವಚನಗಳು ಎಂದು ಉದಾಹರಿಸಿದ್ದಾರೆ. ಮತ್ತು ಶ್ರೀವಾದಿರಾಜ ಪೂಜ್ಯಪಾದರು ತಮ್ಮ ಏಕಾದಶೀ ನಿರ್ಣಯದಲ್ಲಿ ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರ ತಿಥಿನಿರ್ಣಯದ ವಚನಗಳನ್ನು ಉದಾಹರಿಸಿ-ದ್ದಾರೆ. ಈ ಇಬ್ಬರು ಮಹಾನುಭಾವರ ಉಲ್ಲೇಖವನ್ನು ಗಮನಿಸಿದಾಗ ಶ್ರೀ ತ್ರಿವಿಕ್ರಮಪಂಡಿತಾಚಾರ್ಯರು ತಿಥಿನಿರ್ಣಯ ಎಂಬ ಗ್ರಂಥವನ್ನು ಬರೆದಿದ್ದಾರೆ ಎಂಬುದಾಗಿ ನಮಗೆ ತಿಳಿದು ಬರುತ್ತದೆ. ಆದರೆ ಈ ಗ್ರಂಥವು ನಮಗೆ ದೊರೆತಿಲ್ಲ. ಅಲ್ಲದೇ ಇನ್ನೂ ಅನೇಕ ಗ್ರಂಥಗಳನ್ನು ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತರು ರಚಿಸಿರಬಹುದು. ಇದರ ಬಗ್ಗೆ ಇನ್ನೂ ಸಂಶೋಧನೆ ನಡೆಯ-ಬೇಕಾಗಿದೆ.

ಈಗ ನಮಗೆ ಉಪಲಬ್ದವಾಗಿರುವ ಗ್ರಂಥಗಳ ಮಧ್ಯದಲ್ಲಿ ಉಷಾಹರಣದ ಕಿರುಪರಿಚಯವನ್ನು ಮಾಡಿಕೊಡುವ ಪ್ರಯತ್ನ ಮಾಡುತ್ತೇನೆ.

**ಉಷಾಹರಣ–** ತ್ರಿವಿಕ್ರಮಪಂಡಿತಾಚಾರ್ಯರ ಮುಖಕಮಲದಿಂದ ಮೊಟ್ಟಮೊದಲ ಬಾರಿಗೆ ಹೊರಹೊಮ್ಮಿದ ಸುಂದರವಾದ ಮತ್ತು ಭವ್ಯವಾದ ಈ ಕೃತಿ ಸಂಸ್ಕೃತಸಾಹಿತ್ಯದ ಮಹಾಕಾವ್ಯಗಳ ಸರಣಿಯಲ್ಲಿ ಸೇರಿಕೊಳ್ಳಲು ಅರ್ಹವಾಗಿದೆ. ಅವರ ಯೌವನದಲ್ಲಿಯೇ ಈ ಕೃತಿಯ ರಚನೆ ಆಗಿದೆ. 8 ಸರ್ಗಗಳಿಂದ ಕೂಡಿದ ಈ ಮಹಾಕಾವ್ಯವು ಮುಂಬಯಿ ನಿರ್ಣಯಸಾಗರ ಮುದ್ರಣಾಲಯದಲ್ಲಿ 1867ನೆಯ ಇಸ್ವಿಯಲ್ಲಿ ಮುದ್ರಿತವಾಗಿದೆ. ಈಗ ಈ ಪುಸ್ತಕವು ಓದಲು ದೊರೆಯುವುದೂ ಕಷ್ಟವಾಗಿದೆ. ಪ್ರಾಚ್ಯವಿದ್ಯಾ-ಸಂಶೋಧನಾಲಯದಲ್ಲಿ ಈ ಪುಸ್ತಕದ ಒಂದು ಪ್ರತಿ ಮಾತ್ರ ಇದೆ. ಆದರೆ ಸಮಗ್ರ ಗ್ರಂಥ ಇಲ್ಲ. ಮೊದಲಿನ ನಾಲ್ಕು ಸರ್ಗಗಳು ಮಾತ್ರ ಈ ಪುಸ್ತಕದಲ್ಲಿವೆ.

ಗ್ರಂಥದ ಹೆಸರೇ ಸೂಚಿಸುವಂತೆ ಭಾಗವತದಲ್ಲಿ ಬರುವ ಉಷಾ ಅನಿರುದ್ಧರ ಕಥೆಯೇ ಈ ಕಾವ್ಯಕ್ಕೆ ಕಥಾವಸ್ತು. ಪರಮವೈಷ್ಣವರಾದ ಕವಿ, ಕಾವ್ಯದ ಆರಂಭದಲ್ಲಿ ಶ್ರೀಹರಿಯನ್ನು ನಮಸ್ಕರಿಸಿ ಅವನ ಅನುಗ್ರಹವನ್ನು ಪ್ರಾರ್ಥಿಸಿದ್ದಾರೆ.

**ಲಕ್ಷ್ಮೀ ಲಾವಣ್ಯಪೀಯೂಷಪಾನಪಾತ್ರಾಯಿತೇಕ್ಷಣಃ ।**
**ನೀರನೀರದಶ್ಯಾಮಃ ಪಾತು ವೋ ಭಗವಾನ್ ಹರಿಃ ॥**

ಉಷಾಹರಣ –1–1

ಲಕ್ಷ್ಮೀದೇವಿಯ ಲಾವಣ್ಯಾಮೃತ ಪಾನ ಮಾಡುವ ಪಾತ್ರೆಯಂತಿರುವ ಕಣ್ಣುಗಳುಳ್ಳ ನೀರಿನಿಂದ ತುಂಬಿದ ಮೋಡದಂತೆ ನೀಲವರ್ಣನಾದ, ಷಡ್ಗುಣೈಶ್ವರ್ಯ ಸಂಪನ್ನನಾದ ಶ್ರೀಹರಿಯು ನಮ್ಮನ್ನು ರಕ್ಷಿಸಲಿ.

ಈ ಕಾವ್ಯಗಳಲ್ಲಿಯ ಒಂಬತ್ತು ಸರ್ಗಗಳ ಕಥೆಯನ್ನು ಹೀಗೆ ಸಂಗ್ರಹಿಸ-ಬಹುದು.

ಸರ್ಗ –1 ಮಂಗಲ ಪದ್ಯದಲ್ಲಿ ಹರಿಯನ್ನು ಪ್ರಾರ್ಥಿಸಿ ಅನಂತರ ಗುರುಗಳಿಗೆ ನಮಸ್ಕರಿಸಿ ತನ್ನ ಕಾವ್ಯವು ಭಕ್ತಿರಸ ಪ್ರಧಾನವಾದುದು ಎಂದು ಪ್ರತಿಜ್ಞೆ ಮಾಡಿದ ಕವಿ ಕಾವ್ಯವನ್ನು ಮುಂದುವರೆಸಿದ್ದಾರೆ. ಭೂಮಿಯಲ್ಲಿ ಅಸುರರ ಹಾವಳಿಯಿಂದ ಸಜ್ಜನರು ಬೇಸತ್ತಿದ್ದಾರೆ. ಸತ್ಕರ್ಮಾಚರಣೆಗೆ ತೊಂದರೆ ಆಗುತ್ತಿದೆ. ಇದನ್ನು ಮನಗಂಡ ಚತುರ್ಮುಖ ಪ್ರಮುಖರಾದ ದೇವತೆಗಳು

ಕ್ಷೀರಸಮುದ್ರಶಾಯಿಯಾದ ಭಗವಂತನಲ್ಲಿಗೆ ಹೋಗಿ, ಭೂಭಾರಹರಣಕ್ಕಾಗಿ ಮತ್ತು ಸಜ್ಜನರ ರಕ್ಷಣೆಗಾಗಿ ವಸುದೇವ ದೇವಕಿಯರ ಮಗನಾಗಬೇಕೆಂದು ಪ್ರಾರ್ಥಿಸುತ್ತಾರೆ.

ದೇವತೆಗಳ ಪ್ರಾರ್ಥನೆಯನ್ನು ಮನ್ನಿಸಿದ ಭಗವಂತನು ವಸುದೇವ ದೇವಕಿಯರ ಮಗನಾಗಿ ಪ್ರಾದುರ್ಭವಿಸುತ್ತಾನೆ. ಕೃಷ್ಣನ ಆಜ್ಞೆಯಂತೆ ವಸುದೇವನು ನಂದಗೋಕುಲಕ್ಕೆ ಕೃಷ್ಣನನ್ನು ಕೊಂಡೊಯ್ಯುತ್ತಾನೆ. ಕಂಸನ ಆಜ್ಞೆಯಿಂದ ಬಂದ ಅನೇಕ ದೈತ್ಯರನ್ನು ಕೃಷ್ಣನು ಸಂಹರಿಸಿದನು. ಚಾಣೂರ ಮುಷ್ಟಿಕರ ಸಂಹಾರವೂ ಆಯಿತು. ಕಂಸನನ್ನೂ ಶ್ರೀ ಕೃಷ್ಣ ಸಂಹರಿಸಿದನು.

ಸರ್ಗ-2 ಜರಾಸಂಧ, ಕಾಲಯವನರ ಉಪಟಳ ಹೆಚ್ಚಾಗಿದ್ದನ್ನು ಗಮನಿಸಿದ ಕೃಷ್ಣ ಎಲ್ಲ ಯಾದವರ ರಕ್ಷಣೆಗಾಗಿ ಸಮುದ್ರದಲ್ಲಿ ವಿಶ್ವಕರ್ಮನಿಂದ ದ್ವಾರಕೆಯನ್ನು ನಿರ್ಮಿಸಿದ. ಅನಂತರ ಮುಚುಕುಂದನು ಕಾಲಯವನನನ್ನು ತನ್ನ ಕೆಂಡ ಕಾರುವ ಕಣ್ಣಿನಿಂದ ಸುಟ್ಟು, ತಾನು ತಪಸ್ಸನ್ನಾಚರಿಸಲು ಹಿಮಾಲಯಕ್ಕೆ ಹೊರಡುತ್ತಾನೆ.

ಸರ್ಗ-3 ಕೃಷ್ಣ ಬೆಳೆದು ದೊಡ್ಡವನಾದಾಗ, ಅತ್ತ ಭೀಷ್ಮಕ ಮಹಾರಾಜನು ತನ್ನ ಮಗಳಾದ ರುಕ್ಮಿಣಿಯ ಸ್ವಯಂವರವನ್ನು ಘೋಷಿಸುತ್ತಾನೆ. ತನ್ನ ತಂಗಿ ರುಕ್ಮಿಣಿಯನ್ನು ಶಿಶುಪಾಲನಿಗೆ ಕೊಡಬೇಕೆಂಬುದು ರುಕ್ಮಿಯ ಆಸೆ. ಕೃಷ್ಣನನ್ನೇ ಪತಿಯನ್ನಾಗಿ ಪಡೆಯಬೇಕೆಂಬುದು ರುಕ್ಮಿಣಿಯ ಆಸೆ. ಕೃಷ್ಣನು ರುಕ್ಮಿಣಿಯ ಮನದಾಳ- ವನ್ನು ಅರಿತು ತಾನೇ ಬಂದು ರುಕ್ಮಿಣಿಯನ್ನು ಕರೆದುಕೊಂಡು ಹೋಗುತ್ತಾನೆ. ರುಕ್ಮಿಣಿಯು ಕೃಷ್ಣನಿಗೆ ಪತ್ರವನ್ನು ಬರೆದು ಕಳುಹಿಸುವ ವಿಷಯವನ್ನು ಕವಿ ಈ ಕಾವ್ಯದಲ್ಲಿ ಪ್ರಸ್ತಾಪಿಸಿಲ್ಲ. ಕೃಷ್ಣನು ರುಕ್ಮಿಣಿಯನ್ನು ದ್ವಾರಕೆಗೆ ಕರೆತಂದು ಮದುವೆಯಾಗುತ್ತಾನೆ.

ಸರ್ಗ-4 ಈ ಸರ್ಗದ ಕಥೆಯನ್ನು ಕವಿ ತುಂಬಾ ಸರಸವಾಗಿ ವರ್ಣಿಸಿದ್ದಾರೆ. ಶ್ರೀ ಕೃಷ್ಣ ರುಕ್ಮಿಣಿಯರ ಮಗ ಪ್ರದ್ಯುಮ್ನ. ಪ್ರದ್ಯುಮ್ನನು ಏಳು ದಿನಗಳ ಮಗು ಆಗಿರುವಾಗಲೇ ಶಂಬರಾಸುರನು ತನ್ನ ಮಾಯಾಬಲದಿಂದ ಮಗುವನ್ನು ಅಪಹರಿಸಿದನು. ಶ್ರೀ ಕೃಷ್ಣನ ಮಗನಿಂದ ತನಗೆ ಮರಣ ಎಂಬ ವಿಷಯವನ್ನು ತಿಳಿದ ಶಂಬರಾಸುರನು ಮಗುವನ್ನು ಅಪಹರಿಸಿ ಸಮುದ್ರ ಮಧ್ಯದಲ್ಲಿ ಎಸೆದನು. ಮಗುವನ್ನು ಒಂದು ಮೀನು ನುಂಗಿತು, ಮೀನು-ಗಾರನು ಆ ಮೀನನ್ನು ಶಂಬರಾಸುರನಿಗೆ ಕಾಣಿಕೆಯಾಗಿ ಅರ್ಪಿಸಿದನು. ಶಂಬರಾಸುರನು ಮೀನನ್ನು ತನ್ನ ಹೆಂಡತಿ ರತಿಯ ವಶಕ್ಕೆ ಕೊಡುತ್ತಾನೆ. ಆಗ

ಶಂಬರಾಸುರನ ಹೆಂಡತಿಯು ಮೀನನ್ನು ಸೀಳಿದಾಗ ಸುಂದರ ಮಗುವನ್ನು ಕಂಡು ಮುಗ್ಧಳಾಗಿ ಗಂಡನಿಗೆ ಅರಿಯದಂತೆ ಆ ಮಗುವನ್ನು ಸಾಕುತ್ತಾಳೆ. ಮಗು ಬೆಳೆದು ದೊಡ್ಡವನಾದಾಗ ಆ ಮಗನನ್ನೇ ಮೋಹಿಸುತ್ತಾಳೆ. ಆಗ ಅವರಿಬ್ಬರಲ್ಲಿ ನಡೆಯುವ ಸಂಭಾಷಣೆ ತುಂಬಾ ಮಧುರವಾಗಿದೆ. ಕೊನೆಗೆ ತನ್ನ ಪೂರ್ವಜನ್ಮದ ವೃತ್ತಾಂತವನ್ನು ತಿಳಿಸಿ, ಮಗನು ಹಿಂದಿನ ಜನ್ಮದಲ್ಲಿ ಮನ್ಮಥ ಎಂಬುದಾಗಿಯೂ ತಾನು ರತಿ ಎಂಬುದಾಗಿಯೂ ತಿಳಿಸಿ, ಈಶ್ವರನಿಂದ ಸಂಹೃತನಾದ ವಿಷಯವನ್ನೂ ತಿಳಿಸಿ ತನ್ನನ್ನು ಹೆಂಡತಿಯಾಗಿ ಸ್ವೀಕರಿಸುವಂತೆ ಪ್ರಾರ್ಥಿಸುತ್ತಾಳೆ. ಶಂಬರನಿಗೆ ಈ ವಿಷಯ ತಿಳಿದು ವಿರೋಧಿಸಿದಾಗ ಪ್ರದ್ಯುಮ್ನನು ಶಂಬರನನ್ನು ಸಂಹರಿಸುತ್ತಾನೆ. ತನ್ನ ರತಿಯ ಜೊತೆಯಲ್ಲಿ ದ್ವಾರಕೆಗೆ ಬಂದು ತಾಯಿಯನ್ನು ನಮಸ್ಕರಿಸಿದಾಗ ರುಕ್ಮಿಣಿಗೆ ಆದ ಸಂತೋಷಕ್ಕೆ ಪಾರವೇ ಇಲ್ಲ. ಊರ ಜನರೆಲ್ಲ ಪ್ರದ್ಯುಮ್ನ ಹಾಗೂ ರತಿಯನ್ನು ಕಂಡು ಸಂತೋಷ ಪಡುತ್ತಾರೆ.

ಮುಂದೆ ಪ್ರದ್ಯುಮ್ನನು ರುಕ್ಮಿಯ ಮಗಳಾದ ರುಕ್ಮವತಿಯನ್ನು ವಿಧಿ-ಪೂರ್ವಕವಾಗಿ ಮದುವೆ ಆಗುತ್ತಾನೆ. ಪ್ರದ್ಯುಮ್ನ ಮತ್ತು ರುಕ್ಮವತಿಯರ ಮಗನಾಗಿ ಅನಿರುದ್ಧನು ಜನಿಸುತ್ತಾನೆ.

ಸರ್ಗ- 5 ಅನಿರುದ್ಧನ ಉಪವನದಲ್ಲಿಯ ವಿಹಾರ ವರ್ಣನೆ ಮತ್ತು ಉಷೆಯೂ ಸ್ವಪ್ನದಲ್ಲಿ ಕಂಡ ಅನಿರುದ್ಧನನ್ನು ಅವಳ ಗೆಳತಿ ಚಿತ್ರಲೇಖೆಯು ಅಪಹರಿಸಿ ತಂದು ಉಷೆಯ ಜೊತೆ ಸೇರಿಸುವ ಪ್ರಸಂಗ ವರ್ಣನೆ.

ಸರ್ಗ- 6 ದ್ವಾರಕೆಯಲ್ಲಿ ಅನಿರುದ್ಧನು ಕಾಣದೇ ಇದ್ದದನ್ನು ಮನಗಂಡು ಪುರವಾಸಿಗಳೆಲ್ಲರು ದುಃಖಿಗೊಂಡರು, ಕೃಷ್ಣಾದಿಗಳ ಮಂತ್ರಾಲೋಚನೆ, ನಾರದರ ಆಗಮನ, ನಾರದರು ಅನಿರುದ್ಧನ ಅಪಹರಣ ಮತ್ತು ಅದಕ್ಕೆ ಕಾರಣವನ್ನು ತಿಳಿಸುತ್ತಾರೆ.

ಸರ್ಗ- 7 ರಾಮಕೃಷ್ಣಪ್ರದ್ಯುಮ್ನರು ಗರುಡಾರೂಡರಾಗಿ ಶೋಣಿತ-ಪುರವನ್ನು ಕುರಿತು ಪ್ರಯಾಣಬೆಳಸುತ್ತಾರೆ, ಪುರದ್ವಾರಪಾಲಕರ ಧ್ವಂಸ, ಶೈವಜ್ವರನ ಸಂಹಾರ ಮತ್ತು ಶಿವನ ಆಗಮನ.

ಸರ್ಗ- 8 ಯಮಕಚಕ್ರಬಂಧಾದಿಕಾವ್ಯಭಂಗಿಯಿಂದ ಶ್ರೀಕೃಷ್ಣಪ್ರದ್ಯುಮ್ನರ ಸಂವಾದ, ಬಾಣಾಸುರನ ಸೈನಿಕರ ಜೊತೆ ಯುದ್ಧ, ರುದ್ರಯುದ್ಧ, ಹರಿಹರನ್ನು ಕುರಿತು ಮುನಿಪುಂಗವರಿಂದ ಪ್ರಾರ್ಥನೆ, ರುದ್ರಾವಮರ್ದನ, ಮತ್ತು ಬಾಣಾಸುರನ ಸಾವಿರ ಕೈಗಳನ್ನು ಕತ್ತರಿಸುವಮೂಲಕ ಅವನ ಪರಾಜಯ.

ಸರ್ಗ- 9 ಶಿವಕೃತ ವಿಷ್ಣುಸ್ತುತಿ, ಉಷೆಯ ಜೊತೆಗೆ ಅನಿರುದ್ಧನನ್ನೂ ಬಂಧನದಿಂದ ಬಿಡಿಸಿ ಶ್ರೀಕೃಷ್ಣನು ಗರುಡಾರೂಡನಾಗಿ ದ್ವಾರಕೆಗೆ ಮರಳಿ ಆಗಮನ, ಮಾರ್ಗಮಧ್ಯದಲ್ಲಿ ಬಲರಾಮನಿಂದ ರೈವತಪರ್ವತದ ವರ್ಣನೆ, ಕೃಷ್ಣನ ಅಣತಿಯಂತೆ ಅನಿರುದ್ಧನು ಬಾಣಾಸುರನ ಮಗಳಾದ ಉಷೆಯನ್ನು ಹೆಂಡತಿಯನ್ನಾಗಿ ವರಿಸುತ್ತಾನೆ. ಇಷ್ಟು ಈ ಒಂಬತ್ತು ಸರ್ಗಗಳಲ್ಲಿ ಬರುವ ಸಂಕ್ಷೇಪವಾದ ಕಥೆ.

**ಪ್ರಮೇಯಗಳ ದೃಷ್ಟಿಯಲ್ಲಿ ಉಷಾಹರಣಕಾವ್ಯ**

ಉಷಾಹರಣ ಮಹಾಕಾವ್ಯವು ಕೃತಿಕಾರನ ಮಂಗಳಾಚರಣೆಯೊಂದಿಗೆ ಬಹು ಅರ್ಥಪೂರ್ಣವಾಗಿ ಪ್ರಾರಂಭಗೊಂಡಿದೆ.

''ಲಕ್ಷ್ಮೀಲಾವಣ್ಯ .....'' (ಉಷಾಹರಣ 1.1)

1. ನಂತರ ಕವಿಯು ಭಗವಂತನ ಅತಿಶಯವಾದ ಸರ್ವೋತ್ತಮತ್ವವನ್ನು ಮನೋಜ್ಞವಾಗಿ ಕಾವ್ಯದ ಪ್ರಮುಖ ಧ್ಯೇಯವಾಗಿ ಪ್ರತಿಬಿಂಬಿಸುವುದರಿಂದ ಪ್ರಾರಂಭಿಸುತ್ತಾರೆ. विज्ञायपाथेयवताम् (Ibid 1.3)

2. ಮಾನವನ ನಾಲ್ಕು ಪ್ರಮುಖ ಚತುರ್ವಿಧ ಪುರುಷಾರ್ಥಗಳು) ಧ್ಯೇಯೋದ್ದೇಶಗಳನ್ನು (ಧರ್ಮ, ಅರ್ಥ, ಕಾಮ, ಮೋಕ್ಷ) ಉತ್ತಮ ಜೀವಗಳು ಅನುಸರಿಸಿ ಜನ್ಮ ಸಾಫಲ್ಯಗಳನ್ನು ಕಾಣುವ ಕಾವ್ಯದ ಸಾಲುಗಳನ್ನು ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ಭಗವಂತನಲ್ಲಿ ಸಮರ್ಪಣೆ ಮಾಡುವುದರೊಂದಿಗೆ ಕಾವ್ಯವನ್ನು ಮುನ್ನಡೆಸುವರು. तमिमं शरणं प्राप्ताः (Ibid 1.64)

3. ಈ ಕವಿವಾಣಿಯಲ್ಲಿ ಆಚಾರ್ಯರು ಭಗವಂತನ ಕೃಪಾಕಟಾಕ್ಷಕ್ಕೆ ಶರಣಾಗುವ ಜೀವನು ಜರಾಮರಣಗಳ ಸಂಕೋಲೆಗಳೆಂಬ ವಿಷವರ್ತುಲವನ್ನು ಧಾಟಿ ಯಾವ ದುಃಖ, ಭಯ, ದುಮ್ಮಾನಗಳಿಲ್ಲದ ಅಮೃತತ್ವವನ್ನು ಪಡೆಯುವನೆಂಬುದನ್ನು ತಿಳಿಸಿಕೊಡುತ್ತಾರೆ. तौ शृङ्खलातं सभयात् (Ibid 1.113)

4.ಈ ಕಾವ್ಯದ ಸಾಲುಗಳು ತಿಳಿಯಪಡಿಸುವುದೇನೆಂದರೆ ಭಗವಂತನಾದ ಶ್ರೀಹರಿಯನ್ನು ನಂಬಿ ನಡೆಯುವವನು ಈ ಸಂಸಾರಬಂಧನವೆಂಬ ಸಂಕೋಲೆಗಳಿಂದ ಬಿಡುಗಡೆ ಹೊಂದಿ ಮುಕ್ತಿಯ ಪಥದತ್ತ ನಿಸ್ಸಂಶಯದಿಂದ ಸಾಗುವಂಥವನಾಗುತ್ತಾನೆ.

5. ಈ ಕಾವ್ಯಶೃಂಖಲೆಯಲ್ಲಿ ತಿಳಿಯಲ್ಪಡುವುದೇನೆಂದರೆ, ಶ್ರೀಹರಿ ಪರಮಾತ್ಮನು ಜೀವನ ಎಲ್ಲಾ ಅಜ್ಞಾನಗಳನ್ನು ಬಗೆಹರಿಸಿ ಉತ್ತಮವಾದ ಜ್ಞಾನಗಳನ್ನು ಕೊಟ್ಟು ದುಃಖಗಳಿಂದ ಮುಕ್ತಿಯನ್ನು ಕರುಣಿಸುತ್ತಾನೆ ಎಂಬುದೇ ಈ ಸದ್ಯದ ಸಾರಾಂಶ.

ಕಾವ್ಯದ ಸಾಲುಗಳು ತಿಳಿಸುವುದೇನೆಂದರೆ ಧರ್ಮ-ಸತ್ಯತೆ, ಅರ್ಥ-ಸಮೃದ್ಧಿ, ಕಾಮ-ಆಸೆ ಇವನ್ನು ಪ್ರತಿಯೊಬ್ಬ ಜೀವರು ಅರ್ಥಪೂರ್ಣವಾಗಿ ಹೊಂದಬೇಕು.

**ಕಾವ್ಯದೃಷ್ಟಿಯಲ್ಲಿ ಉಷಾಹರಣಕಾವ್ಯ**

ಈ ಕಾವ್ಯವು ಕೆಳಕಂಡ ವಿಚಾರ ಸರಣಿಯನ್ನು ಹೊಂದಿರುತ್ತದೆ.

1) ದ್ವಾರಕಾಪಟ್ಟಣದ ವಿವರಣೆ : ಇದು ಎರಡನೇ ಅಧ್ಯಾಯದಲ್ಲಿ ವಿವರಿಸ- ಲಾಗಿದೆ. ದ್ವಾರಕಾಪಟ್ಟಣವು ಉತ್ತಮವಾದ ಸಮೃದ್ಧಿಯನ್ನು ಹೊಂದಿರುವಂತಹ ಪಟ್ಟಣವಾಗಿತ್ತು.

बद्धेषु शुद्धस्पटिकोपलेन ........ (Ibid 2.52)

ದ್ವಾರಕಾಪಟ್ಟಣದಲ್ಲಿ ಅತ್ಯುತ್ತವಾದ ಕಟ್ಟಡಗಳು ಕಟ್ಟಲ್ಪಟ್ಟಿದ್ದವು ಮತ್ತು ಅವುಗಳ ಒಳಗೆ ಮುತ್ತು ರತ್ನಗಳಿಂದ ಅಲಂಕರಿಸಲ್ಪಟ್ಟಿತ್ತು. ಈ ವ್ಯಾಖ್ಯಾನವು 17 ಕಾವ್ಯಗಳಲ್ಲಿ ವಿಸ್ತರಿಸಲ್ಪಟ್ಟಿದೆ. (45-62)

2) ಎರಡನೇ ಅಧ್ಯಾಯದಲ್ಲಿ ಕ್ಷೀರಸಾಗರದ ವಿವರಣೆಯು ವಿಸ್ತೃತ-ಗೊಂಡಿದೆ. ಕ್ಷೀರಸಾಗರ ಸಕಲ ಸಮೃದ್ಧಿಯ ದ್ಯೋತಕವಾಗಿದೆ.

विस्मयाद्विस्मृतस्वर्ग ........ (Ibid I.26)

ದೇವಾನುದೇವತೆಗಳು ಈ ಕ್ಷೀರಸಾಗರವನ್ನು ನೋಡಿ ಅನಂತ (ಅತ್ಯಂತ) ಸಂತೋಷಭರಿತ ಆಶ್ಚರ್ಯಚಕಿತರಾದರು. (13 ರಿಂದ 28ರ ವರೆಗಿನ ಪದ್ಯಗಳು). ಇಂತಹ ಕ್ಷೀರಸಾಗರವನ್ನು ನೋಡಿದ ದೇವಾನುದೇವತೆಗಳು ಸಂತೋಷದ ಭರದಲ್ಲಿ ಮೋಕ್ಷಸ್ಥಾನವನ್ನೇ ಮರೆತು ಸಾಗರದ ಸೌಂದರ್ಯವನ್ನು ನಿರಂತರವಾಗಿ ಸವಿಯುತ್ತಿದ್ದರು.

3) ಪ್ರವರ್ತಕ ಶ್ರೇಣಿಯ ವಿವರಣೆಯು ಬಂದಿದೆ. ಅನಿರುದ್ಧ ಮತ್ತು ಉಷಾ ಕೃಷ್ಣನೊಡಗೂಡಿ ದ್ವಾರಕಾಪಟ್ಟಣಕ್ಕೆ ಹಿಂತಿರುಗುವಾಗ ರೈವತಕ ಪರ್ವತ ಶ್ರೇಣಿಯನ್ನು ಕಂಡರು. ಈ ಪರ್ವತಶ್ರೇಣಿಯ ಸೌಂದರ್ಯವನ್ನು ಕವಿಯು

ವಿಸ್ತಾರವಾಗಿ ವರ್ಣಿಸಿದ್ದಾನೆ. (40 ರಿಂದ 52ನೆಯ ಪದ್ಯ). ಉದಾಹರಣೆ-ಯಲ್ಲಿ ಒಂದು ಪದ್ಯ ಹೀಗಿದೆ :

इत्थं सुरेरह ........ (Ibid IX.41)

ರೈವತಕ ಪರ್ವತಶ್ರೇಣಿಯ ಮೇಲೆ ಚಂದ್ರನ ಕಿರಣಗಳು ಬಿದ್ದಾಗ ಮೂಡಿದ ಆಹ್ಲಾದತೆಯು ಸ್ವರ್ಗವನ್ನೇ ಮೀರಿಸುವಂತಹದ್ದಾಗಿತ್ತು.

4) ಚಂದ್ರೋದಯದ ಉತ್ಕರ್ಷದ ವರ್ಣನೆಯು 5ನೆಯ ಸರ್ಗದಲ್ಲಿ ವಿಸ್ತೃತವಾಗಿದೆ. ಅನಿರುದ್ಧನು ಅರಮನೆಯ ಛಾವಣಿಯ ಮೇಲಿಂದ ನೋಡುವಾಗ ಕಂಡ ಚಂದ್ರೋದಯದ ಸುಮಧುರ ಆಹ್ಲಾದತೆಯನ್ನು ಕವಿಯು ಈ ರೀತಿಯಾಗಿ ವರ್ಣಿಸುತ್ತಾನೆ :

प्रविष्टनीडेषु ........ (Ibid V.42)

ಚಂದ್ರನು ಪೂರ್ವದಿಕ್ಕಿನಲ್ಲಿ ಉದಯಾಚಲದ ಮೇಲೆ ಉತ್ಕರ್ಷ ಹೊಂದು-ತ್ತಿರುವಾಗ ಅವನ ಕಿರಣಗಳು ನಿಧಾನವಾಗಿ ಪ್ರಸರಿಸುತ್ತವೆ. ನಂತರ ಕತ್ತಲೆ-ಯನ್ನು ದೂರೀಕರಿಸಿ ಚಂದ್ರನ ಪೂರ್ಣ ಬಿಂಬವು ಸಜ್ಜನರ ಮನದಲ್ಲಿ ಮೂಡುತ್ತದೆ. ಇಂತಹ ಚಂದ್ರನು ಆಕಾಶವನ್ನೇ ವಿಸ್ತರಿಸುತ್ತಾನೆ. ಇಂತಹ ಚಂದ್ರನನ್ನು ಸರ್ವೋತ್ತಮನಾದ ಶ್ರೀಹರಿಯ ಕೃಪಾಕಟಾಕ್ಷವೆಂದು ತಪಸ್ಸು ಮಾಡುತ್ತಿರುವ ಸಜ್ಜನರು ಅನುಭವಿಸುತ್ತಾರೆ.

5) ಸೂರ್ಯೋದಯದ ಉತ್ಕರ್ಷವು 5ನೆಯ ಸರ್ಗದಲ್ಲಿ ವಿಸ್ತೃತಗೊಂಡಿದೆ. ಇದು ಅತ್ಯಂತ ಪ್ರಾಕೃತಿಕವಾಗಿದೆ.

सरस्समीरे सुरभौ मनोहरे लतागृहे पकप्रलेशु ........ (Ibid V.23)

ಈ ಸೂರ್ಯೋದಯದಿಂದ ಪುಳಕಿತಗೊಂಡ ಕನ್ಯಾಮಣಿಗಳು ಸ್ವಗೃಹದ ತಾಪದಿಂದ ದೂರವಾಗಲು ಬ್ರಾಹ್ಮೀ ಸೂರ್ಯನ ಕಿರಣವನ್ನು ಅನುಭವಿಸಿದರು.

6) ಉದ್ಯಾನವನಗಳ ಸೌಂದರ್ಯಗಳ ವಿವರಣೆಯನ್ನು 5ನೆಯ ಸರ್ಗಯದಲ್ಲಿ ವಿಸ್ತೃತಗೊಳಿಸಲಾಗಿದೆ. ಈ ವಿವರಣೆಯು ನಯನಮನೋಹರ-ವಾಗಿದೆ.

सुगन्धपुष्प ........ (Ibid V.2)

ಕೃಷ್ಣಪರಮಾತ್ಮನು ನರಕಾಸುರ ಹಾಗೂ ಇಂದ್ರರ ಮೇಲೆ ಜಯ ಸಾಧಿಸಿದಾಗ ಅನಿರುದ್ಧನು ಉದ್ಯಾನವನಗಳ ಸೌಂದರ್ಯವನ್ನು ಆಹ್ಲಾದಿಸಿದನು. ಉದ್ಯಾನದ ಸೌಂದರ್ಯವು ಅಲ್ಲಿನ ಲಲನೆಯರ ಕ್ರೀಡೋತ್ಸವದ ಮುಂದೆ ಕಳಾಹೀನವಾದವು.

7) ಜಲಕ್ರೀಡೆಯ ವಿವರಣೆಯು 5ನೇ ಸರ್ಗದಲ್ಲಿ ವಿಸ್ತೃತಗೊಂಡಿದೆ. (V 24-33) ಅನಿರುದ್ಧನು ಇಂತಹ ಜಲಕ್ರೀಡೆಯಲ್ಲಿ ತೊಡಗಿಸಿಕೊಂಡನು.

सुफेन मन्दस्मितसाधुसत्कृतिः ........ (Ibid V.25)

ಅನಿರುದ್ಧನು ಈ ಜಲಕ್ರೀಡೆ ಸ್ಥಳಕ್ಕೆ ಸುಂದರಿಯರ ಒಡಗೂಡಿ ಗೆಲುವಿನ ಆಟದಲ್ಲಿ ತೊಡಗಿರುವಾಗ ಉಂಟಾದ ನೀರಿನ ಅಲೆಗಳಿಂದ ನೀರು ಕೆಂಪಾ-ಯಿತು. ಇದಕ್ಕೆ ಕಾರಣ ಸುಂದರಿಯರ ಸ್ತನಗಳಿಗೆ ಲೇಪನಗೊಂಡ ಸುಗಂಧದ ದ್ರವ್ಯಗಳು ಆಗಿದ್ದವು.

8) ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ಮಧುಪಾನದ ವಿವರಣೆಯನ್ನು ಈ ರೀತಿ ವಿಸ್ತರಿಸಿದ್ದಾರೆ. (V.52-57) ಇದರ ವಿವರಣೆಯು ರಸಿಕ ಆಭಿಮುಖ-ದಿಂದ ಕೂಡಿದ್ದಾಗಿದೆ.

सवारुणीपानविवृत्त ........ (Ibid V.55)

ಅನಿರುದ್ಧನು ಮಧುಪಾನ ಸವಿಯ ಸುಖವನ್ನು ಅನುಭವಿಸುವಾಗ ಸುಂದರ ಲಲನೆಯರು ತಮ್ಮ ಸ್ತನಗಳನ್ನು ಅವನ ಕೈಗಳಿಗೆ ಸ್ಪರ್ಶಿಸುತ್ತಾ ಇರುತ್ತಿದ್ದರು.

9) ಉಷಾಹರಣವು ಸ್ತ್ರೀಪುರುಷ ಸಮಾಗಮ ಹಾಗೂ ಪ್ರೇಮಿಗಳ ಸಂಭ್ರಮಗಳನ್ನು 5ನೇ ಸರ್ಗದಲ್ಲಿ ವಿಸ್ತಾರಗೊಳಿಸಿದೆ. ಉಷಾ ಹಾಗೂ ಅನಿರುದ್ಧರ ಸಮಾಗಮವು ಸ್ಫೂರ್ತಿದಾಯಕವಾಗಿರುತ್ತಿತ್ತು .

भुजद्वयस्यास्य ........ (Ibid V.70)

ಉಷಳು ತನ್ನ ಕೆಂಪುತುಟಿಗಳಿಂದ ಮಾದಕತೆ ತುಂಬಿದ ಕಣ್ಣಿನ ದೃಷ್ಟಿಯನ್ನು ಅನಿರುದ್ಧನತ್ತ (ಬೀಸಿದಾಗ) ಬೀರಿದಾಗ ಹಾಗೂ ತನ್ನ ಸುಂದರ ನಿತಂಬಗಳನ್ನು ಅವನಿಗೆ ಆಲಂಗಿಸಿದ್ದಾಗ ಉಷಳ ಆಲಿಂಗನವು ಪುರುಷರ ಆಲಿಂಗನೆಗಿಂತ ಹೆಚ್ಚು ಬಿಗಿಯಾಗಿರುತ್ತಿತ್ತು . ಈ ರೀತಿಯಾಗಿ ಅವಳು ಅನಿರುದ್ಧನನ್ನು ಆಲಿಂಗನದಲ್ಲಿ ಗೆಲ್ಲುತ್ತಿದ್ದಳು.

10) ಕಾವ್ಯದ ಈ ಮೂರು ಸ್ಥಳಗಳಲ್ಲಿ ಮದುವೆಯ ವಿವರಣೆಯು ಕಾಣಲು ಸಿಗುತ್ತದೆ.

ಮೊದಲಿಗೆ ಕೃಷ್ಣ ರುಕ್ಮಿಣಿಯರ ವಿವಾಹದ ಶುಭಲಕ್ಷಣಗಳು.

सस्नुषास्फुरणसंम्मदो लत्कन्धरं ........ (Ibid IV.3)

ಎರಡನೆಯದಾಗಿ ಪ್ರದ್ಯುಮ್ನ ಹಾಗೂ ರುಕ್ಮಾವತಿಯ ವಿವಾಹ ಸಂದರ್ಭ,

अग्रहीत्स ........ (Ibid IV.53)

ಮೂರನೆಯದಾಗಿ, ಅನಿರುದ್ಧ ಉಷೆಯರ ಶುಭವಿವಾಹ ಸಂದರ್ಭ.

इत्थं महोत्सवपदे ........ (Ibid IX.63)

11) ಪ್ರೇಮ (ಪ್ರಹಸನ) ಬಂಧನದಲ್ಲಿ ಸಿಲುಕಿದ ತರುಣರ ವಿವಾಹ ಸಂದರ್ಭವನ್ನು ಕಾವ್ಯವು ಎರಡು ಬಗೆಯಲ್ಲಿ ವಿಸ್ತಾರ ಮಾಡುತ್ತದೆ.

तां निशासु शशिमण्डलानना ........ (Ibid IV.10)

ಈ ಕಾವ್ಯಭಾಗವು ಕೃಷ್ಣರುಕ್ಮಿಣಿಯರ ಸಮಾಗಮವನ್ನು ವಿವರಿಸುತ್ತದೆ. ಅದೇರೀತಿಯಾಗಿ ಉಷಾ-ಅನಿರುದ್ಧರ ಸಮಾಗಮವನ್ನು ಐದು (V.69-77) ಭಾಗದಲ್ಲಿ ಕಾವ್ಯವು ವಿಸ್ತಾರ ಮಾಡುತ್ತದೆ.

ಇದರ ವಿವರಣೆಗಳು ರಸಿಕಭರಿತವಾಗಿರುವುದನ್ನು ಕಾವ್ಯದಲ್ಲಿ ಕಾಣಬಹುದು.

12) ಪುತ್ರಸಂತಾನವನ್ನು ಪಡೆಯುವ ವಿವರಣೆಗಳನ್ನು ಕಾವ್ಯದ ಸರ್ಗ I / 68-101) ಹಾಗೂ VI (12-14) ಭಾಗಗಳಲ್ಲಿ ಮತ್ತು IV (54-55)ಗಳಲ್ಲಿ ಕಾಣಬಹುದು. ಕವಿಯು ಕೃಷ್ಣನ ಜನನವನ್ನು ಸಕಲ ಮನುಕುಲದ ಆಹ್ಲಾದ-ಕ್ಕಾಗಿ ಮನೋಹರವಾಗಿ ಚಿತ್ರಿಸುತ್ತಾನೆ.

चराचरणां भूतानामभूतं परमान्तरम् । ........ (Ibid I.98)

ರುಕ್ಮಿಣಿ ದೇವಿಯು ಪ್ರದ್ಯುಮ್ನ ಶಿಶುವಿಗೆ ಜನ್ಮ ಕೊಡುವ ವೃತ್ತಾಂತವು

नैष तस्य सुरतस्य वर्णना ........ (Ibid IV.12)

ಮನ್ಮನು ಶಿವನಿಂದ ಭಸ್ಮೀಭೂತನಾಗಿದ್ದರೂ 'ಪ್ರದ್ಯುಮ್ನನಾಗಿ ನೂತನ ಹಾಗೂ ಆಕರ್ಷಕ (ಪ್ರಾದುರ್ಭಾವ!) ಅವತಾರವನ್ನು ತಾಳಿದನು.

ರುಕ್ಮಾವತಿ ದೇವಿಯು 'ಅನಿರುದ್ಧ' ಶಿಶುವಿಗೆ ಜನ್ಮವೀಯುವಳು.

स्तवत्यरणिगोचरस्ततो ........ (Ibid IV.54)

ಯಾವ ರೀತಿ ಅಗ್ನಿಯು ಆರಣಿಯನ್ನು ಮಥಿಸಿದಾಗ ಉಂಟಾಗುವ ಕಿಡಿಯಂತೆ ಅನಿರುದ್ಧ ಶಿಶುವು ಜನ್ಮ ತಾಳುವನು.

13) ಮಂತ್ರಿ ಮಹೋದಯರೊಂದಿಗಿನ ಸಮಾಲೋಚನೆಗಳು ಸರ್ಗ II (24-35) ಹಾಗೂ VI (7-3) ಭಾಗಗಳಲ್ಲಿ ವಿಸ್ತೃತವಾಗಿದೆ. ಕಾಲಯವನ ಎಂಬ ಶತ್ರುವಿನ ಮಥುರಾಪಟ್ಟಣದ ಮೇಲಾದ ಆಕ್ರಮಣಕಾಲದಲ್ಲಿ ಕೃಷ್ಣ-ರಾಜನು ತನ್ನ ಯಾದವ ಮಂತ್ರಿಗಳೊಂದಿಗೆ 'ಸುಧರ್ಮ'' ಸಭಾಗೃಹ-ದಲ್ಲಿ ಯಾವ ರೀತಿಯಲ್ಲಿ ಸಮಾಲೋಚನೆ ನಡೆಸಿ ತನ್ನ ಉತ್ತಮ ಪ್ರಭಾವ-ಗಳನ್ನು ಮೆರೆಯುವನೆಂಬುದು ಈ ಭಾಗದಲ್ಲಿ ವಿಸ್ತೃತಗೊಂಡಿದೆ.

सुपौरुषाणामपि ........ (Ibid II.25)

ಉತ್ತಮಗತಿಯಿಂದ ನಡೆಸುವ ಯುದ್ಧದ (ತಯಾರಿ) ಸಿದ್ಧತೆಗಳನ್ನು ಮಾಡುವ ಅಪ್ರತಿಮ ಯೋಧನು ಗೆಲ್ಲುವುದರಲ್ಲಿ ಯಶಸ್ವಿಯಾಗುವನು. ಇಂತಹ ಕೌಶಲಗಳಿಲ್ಲದ ಯುದ್ಧಗಳಲ್ಲಿ ಪಾಲ್ಗೊಳ್ಳುವುದರಿಂದ ಸಫಲನಾಗು-ವುದು ಸಾಧ್ಯವಿಲ್ಲ.

14) ರಣರಂಗದ ವಿವರಣೆಗಳನ್ನು ಸರ್ಗ IIIರಲ್ಲಿ ವಿಸ್ತಾರಗೊಂಡು ರುಕ್ಮಿಯು ಕೃಷ್ಣನನ್ನು ಎದುರಿಸಿ ಯುದ್ಧಮಾಡುವ ಭಾಗಗಳು (60,21) ಅಧ್ಯಾಯ VII (1-70), VIII (1-90)ಗಳಲ್ಲಿ ದೇವನಾದ ಶ್ರೀಕೃಷ್ಣ, ಮಹದೇವ-ಶಿವ ಹಾಗೂ ಭಾಣಾಸುರರ ನಡುವೆ ನಡೆಯುವುದು.

15) ಕಾವ್ಯದ ಮುಕ್ತಾಯ ಭಾಗಗಳಲ್ಲಿ ಕವಿಯು ಭಗವಂತನಾದ ಕೃಷ್ಣನು ಬಾಣಾಸುರನ ಮೇಲೆ ಸಾಧಿಸುವ ಜಯ (ಸರ್ಗ VIII 91-93) ಮತ್ತು ಸರ್ಗ IX (1-5) ಗಳಲ್ಲಿ ವಿಸ್ತಾರಗೊಂಡಿದೆ. ಕೃಷ್ಣಪರಮಾತ್ಮನು ಬಾಣಾಸುರನ ಸಹಸ್ರ ಬಾಹುಗಳನ್ನು ತನ್ನ ಸುದರ್ಶನ ಚಕ್ರದಿಂದ ತುಂಡರಿಸಿ ಸಂಹಾರಗೈದಾಗ ಸಮಸ್ತ ದೇವತಾಗಣಗಳು ಹರ್ಷೋದ್ಗಾರ ಮಾಡುತ್ತಿರುತ್ತಾರೆ. ಅವರೆಲ್ಲರೂ ಶಿವ

ಹಾಗೂ ಶ್ರೀಕೃಷ್ಣರನ್ನು ಸಂದರ್ಶಿಸಿ ತಮ್ಮ ಭಕ್ತಿ ನಮನಗಳನ್ನು ಸಮರ್ಪಿಸುತ್ತಾರೆ. ಪುಷ್ಪಗುಚ್ಛಗಳನ್ನು ವೃಷ್ಟಿ ಮಾಡುತ್ತ ದೇವತೆಗಳು, ಗಂಧರ್ವರು ತಮ್ಮ ತಮ್ಮ ಸುಶ್ರಾವ್ಯ ಕಂಠದಿಂದ ಕೃಷ್ಣನ ಅಪ್ರಮೇಯತ್ವಗಳನ್ನು ಕೊಂಡಾಡುವರು.

परिमलमिलिताय ........ (Ibid VIII.93)

ಈ ಪರಿಗಳಿಂದ ಕವಿ ಮಹಾಶಯರು ''ಮಹಾಕಾವ್ಯ''ವು ಯಾವ ಪ್ರಕಾರದಲ್ಲಿ ಹೊಮ್ಮಬೇಕೆಂಬುದನ್ನು ತೋರಿಸಿಕೊಟ್ಟಿದ್ದಾರೆ. ಎಲ್ಲಾ ಯುದ್ಧರಂಗಗಳಲ್ಲಿ ಕೃಷ್ಣಪರಮಾತ್ಮನು ಯಾವರೀತಿಯಲ್ಲಿ ತನ್ನ ಪ್ರಭುತ್ವ, ಜಯಶೀಲತೆಗಳನ್ನು ಮೆರೆಯುತ್ತಾನೆಂಬುದನ್ನು ಈ ಕಾವ್ಯಭಾಗಗಳಲ್ಲಿ ಕಾಣಬಹುದಾಗಿದೆ. ಕೃಷ್ಣನು ''ಉಷಾಹರಣ'' ಕಾವ್ಯದ ಕಥಾನಾಯಕ, ಧೀರ, ಶೂರನಾಗಿ ಹೊರಹೊಮ್ಮುವುದನ್ನು ಸ್ಪಷ್ಟವಾಗಿ ಸ್ಪಂದಿಸಬಹುದಾಗಿದೆ.

ಈ ಉಷಾಹರಣ ಕಾವ್ಯವು ಸಾಕಷ್ಟು ವಿಸ್ತಾರಗೊಂಡ ಕಾವ್ಯವಾಗಿದೆ. ಇದು ಒಂಬತ್ತು ಸರ್ಗಗಳನ್ನು ಹೊಂದಿದ್ದು, ಬಹಳ ಹಿರಿದಾದದ್ದೂ ಅಲ್ಲ ಹಾಗೂ ಕಿರಿದಾದದ್ದೂ ಅಲ್ಲದೆ ಮಧ್ಯಮ ಕಾವ್ಯವಾಗಿರುವುದನ್ನು ನಾವು ಕಾಣಬಹು-ದಾಗಿದೆ. ಅತ್ಯಂತ ಹಿರಿದಾದ ಸರ್ಗವು I ಎಂಬುದು 114 ಶ್ಲೋಕಾತ್ಮಕವಾಗಿದ್ದು ಸರ್ಗ IV-57 ವು ಅತ್ಯಂತ ಕಿರಿಯ ಸರ್ಗವಾಗಿದೆ. ಈ ಕಾವ್ಯವು ಅತ್ಯಂತ ಶ್ರೀಮಂತವಾಗಿ ಭಾವನೆಗಳನ್ನು, ಕಥಾ ವಿಸ್ತರಣೆ, ವಾಕ್ಯ(ಕುಸುಮ) ಮಣಿಗಳನ್ನು ಹೊಂದಿರುವ ಶ್ರೇಷ್ಠ ಕಾವ್ಯವಾಗಿದೆ.

ಕಾವ್ಯದ ಛಂದಸ್ಸಿನ ಭಾಗವು ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರ ಅಗಾಧ ಪಾಂಡಿತ್ಯದ ಪ್ರೌಢಿಮೆಯನ್ನು ಬಿತ್ತರಿಸುತ್ತದೆ. ಪ್ರಮುಖವಾಗಿ ಇವರು ಕಟ್ಟ ಕಡೆಯ ಸರ್ಗಗಳಲ್ಲಿ ವಿವಿಧ ರೀತಿಯ ಛಂದಸ್ಸುಗಳನ್ನು ಅತ್ಯಂತ ಸೂಕ್ಷ್ಮವಾಗಿ ಬಳಸಿದ್ದು ಅತ್ಯಂತ ಮನೋಜ್ಞವಾಗಿರುವ ವಿಷಯ.

ಸ್ಪಷ್ಟವಾಗಿ ಗುರುತಿಸಲಾಗಿ ತಿಳಿಯುವ ವಿಚಾರವೇನೆಂದರೆ ಮೊದಲ ಸರ್ಗವು 'ಅನುಷ್ಟುಪ್' ಛಂದಸ್ಸಿನಿಂದ ಪ್ರಾರಂಭವಾಗಿ 'ಪುಷ್ಪಿತಾಗ್ರ' ಛಂದಸ್ಸಿನಲ್ಲಿ ಪೂರ್ಣಗೊಳ್ಳುತ್ತದೆ. ಅದೇ ಪ್ರಕಾರ ಎರಡನೆಯ ಸರ್ಗವು 'ಉಪಜಾತಿ' ಛಂದಸ್ಸಿನಿಂದ 'ಮಂಜುಭಾಷಿಣಿ' ಛಂದಸ್ಸಿನಲ್ಲಿ ಮುಕ್ತಾಯಗೊಳ್ಳುತ್ತದೆ. ಮೂರನೆಯ ಸರ್ಗವು ಉಪಜಾತಿ ಛಂದಸ್ಸಿನಿಂದ ಪ್ರಾರಂಭಗೊಂಡು 'ಮಾಲಿನಿ' ಛಂದಸ್ಸಿನಿಂದ ಕೊನೆಗೊಂಡರೆ ನಾಲ್ಕನೆಯ ಸರ್ಗ 'ರಥೋದ್ಧತ'-ದಿಂದ ಆರಂಭಗೊಂಡು 'ಮಾಲಿನಿ'ಯಿಂದ ಅಂತ್ಯಗೊಳ್ಳುವುದು. ಐದನೆಯ

ಸರ್ಗ 'ವಂಶಸ್ಥ' ಛಂದಸ್ಸಿನಿಂದ 'ಮಂಜುಭಾಷಿಣಿ'', ಆರನೆಯ ಸರ್ಗ 'ಉಪಜಾತಿ' ಛಂದಸ್ಸಿನಿಂದ 'ಪುಷ್ಪಿತಾಗ್ರ' ದಲ್ಲಿ ಅಂತ್ಯ . ಏಳನೆಯ ಸರ್ಗದಲ್ಲಿ ಛಂದಸ್ಸು, ಅನೇಕ ರೀತಿಯಲ್ಲಿ ಬದಲಾಗಿ 'ಮಂಜುಭಾಷಿಣಿಯಲ್ಲಿ ಅಂತ್ಯ-ಗೊಂಡರೆ, ಎಂಟನೆಯದು ಕೂಡ 'ಪುಷ್ಪಿತಾಗ್ರ' ಛಂದಸ್ಸಿನಲ್ಲಿ ಕೊನೆಗೊಳ್ಳುತ್ತದೆ. ಒಂಭತ್ತನೆಯದು ಕಡೆಯ ಸರ್ಗವಾಗಿ 'ವಸಂತತಿಲಕ' ಛಂದಸ್ಸಿನಲ್ಲಿ ಹೊರಟು 'ಮಾಲಿನಿ'ಯಲ್ಲಿ ಮುಕ್ತಾಯಗೊಳ್ಳುವುದು.

(ಭಗವಂತ ಕೃಷ್ಣನು 'ಉಷಾಹರಣ' ಮಹಾಕಾವ್ಯದ ಪ್ರಮುಖ ರೂವಾರಿ. ಕಥಾನಾಯಕನೆಂಬುದು ಸ್ಪಷ್ಟ ವಿದಿತ. ಕೃಷ್ಣನ ಗುಣೋತ್ಕರ್ಷಗಳು ಒಂದನೆಯ ಸರ್ಗದಲ್ಲಿ ವಿವರಿಸಿದ್ದು ಮುಂದೆ ಎರಡೆಯ ಸರ್ಗದಲ್ಲಿ ಕಂಸವಧೆ, ಜರಾಸಂಧ ಕಾಲಯವನರ ವಧೆಗಳು ವಿಸ್ತುತವಾಗುತ್ತದೆ, ಮುಂದೆ 3ನೇ ಸರ್ಗದಲ್ಲಿ ಕೃಷ್ಣನ ಅದ್ಭುತ ಹಾಗೂ ದೈವಿಕ ಲೀಲಾ ಶಕ್ತಿಗಳ ಪ್ರದರ್ಶನವಾದರೆ ರುಕ್ಮಿಯ ಮೇಲಿನ ಜಯಗಳು, ಮುಂದುವರಿದು 5ನೆಯ ಸರ್ಗದಲ್ಲಿ ನರಕಾಸುರವಧೆ, ಹಾಗೂ ಇಂದ್ರದೇವತೆಗಳ ಮೇಲೆ ಸಾಧಿಸುವ ಜಯಗಳು ವಿಸ್ತೃತಗೊಂಡಿದೆ. 9ನೆಯ ಸರ್ಗದಲ್ಲಿ ಕೃಷ್ಣನು ಶಿವ ಹಾಗೂ ಶಂಭಾಸುರರ ಮೇಲೆ ಸಾಧಿಸುವ ಜಯಗಳ ವಿವರಣೆಗಳು ಕಾಣಸಿಗುತ್ತವೆ.)

ಈ ಕಾವ್ಯವು 'ಉಷಾಹರಣ' ಕಥೆಯ ನಾಮಧೇಯವನ್ನು ಹೊಂದಿದೆ ಹಾಗೂ ಕಥೆಯು ಮೂರು ಭಾಗಗಳನ್ನು ಹೊಂದಿದೆ. ಪ್ರತಿಭಾಗವೂ ಕೃಷ್ಣ-ರುಕ್ಮಿಣಿ, ಪ್ರದ್ಯುಮ್ನ-ರುಕ್ಮಾವತಿ ಹಾಗೂ ಅನಿರುದ್ಧ-ಉಷೆಯರ ವಿವಾಹ ಸಮಾರಂಭಗಳನ್ನು ಬಿತ್ತರಿಸುತ್ತದೆ. ಅಂದರೆ 'ಉಷಾಹರಣ' ಶಬ್ದದಿಂದ 'ಉಷಾ'ದೇವಿಯ ಅಪಹರಣ ಅಥವಾ ಹರಣ ಕ್ರಿಯೆಯೆಂದು ತಿಳಿಯುವ ಅವಶ್ಯಕತೆಯಿಲ್ಲ. ಇದನ್ನು ಉಷಾ-ಹರಣಮ್ ಎಂಬ ಶಬ್ದ ಸಂಯೋಜನೆ-ಯಿಂದ ಹರಣಮ್ ಎಂಬ ಕೃದಂತ ಎಂಬುದರಿಂದ ವಿವಾಹಕ್ಕೆ ಒಪ್ಪಿಗೆ ಎಂಬ ಅರ್ಥವನ್ನು ಕಲ್ಪಿಸಬೇಕು.

मिथ्यैव श्री श्रीयमन्या ..........

ಮೇಲಿನ ಪದ್ಯದಲ್ಲಿ ಹರಂತಿ ಶಬ್ದದ ನಿಷ್ಪತ್ತಿಯ 'ಹ' ಶಬ್ದದ ಅರ್ಥವು 'ಹೊಂದುವುದು' ಎಂದು.

ಇಲ್ಲಿ 'ಹ' ಶಬ್ದದ ನಿಶ್ಪತ್ತಿಯಿಂದ ತಿಳಿಯುವುದೇನೆಂದರೆ ಉಷಾಹರಣ ಶಬ್ದವು 'ಉಷಾ' ಹಾಗೂ ಅನಿರುದ್ಧರ ವಿವಾಹವನ್ನು ಸೂಚಿಸುತ್ತದೆ. ಇದು

ಕಾವ್ಯದ ಕಡೆಯ ಭಾಗದಲ್ಲಿ ವಿವರಣೆಗೊಳ್ಳುತ್ತದೆ. ಉಷಾಹರಣವು ಅನಿರುದ್ಧ-ಉಷೆಯರ ವಿವಾಹದ ವಿಚಾರವನ್ನು ಕಡೆಯ ಭಾಗದಲ್ಲಿ ತಿಳಿಸಿದರೂ ಕಾವ್ಯವು ಒಂಬತ್ತನೇ ಸರ್ಗದ ತನಕ ಇತರ ಮೂರು ವಿವಾಹಗಳ ವಿವರಣೆಗಳನ್ನು 'ಹರಣ' ಎಂಬ ಸಂದರ್ಭದಲ್ಲಿ ಚಿತ್ರಣಗೊಂಡಿರುವುದು ಕಾವ್ಯದ ವಿಶೇಷ.

ಉಷಾಹರಣ ಮಹಾಕಾವ್ಯಕ್ಕೆ ಶ್ರೀ ರಾಘವೇಂದ್ರ ಮಠದ ಪರಂಪರೆಯಲ್ಲಿ ಬಂದಿರುವ ಶ್ರೀ ಸುಧೀಂದ್ರರ ಶಿಷ್ಯರಾದ ಶ್ರೀ ಸುಮತೀಂದ್ರಯತಿಗಳು ಸುಂದರ- ವಾದ ವ್ಯಾಖ್ಯಾನವನ್ನು ರಚಿಸಿದ್ದಾರೆ. ಶ್ರೀ ಸುಮತೀಂದ್ರರು ಪ್ರತಿಯೊಂದು ಶ್ಲೋಕವನ್ನು ವ್ಯಾಖ್ಯಾನಿಸುವಾಗಲೂ ವ್ಯಾಕರಣ ವಿಶೇಷಗಳನ್ನು ವಿಶೇಷವಾಗಿ ಬರೆಯುತ್ತಾರೆ.

ಈ ವ್ಯಾಖ್ಯಾನವನ್ನು ನೋಡಿದಾಗ ಶ್ರೀ ಸುಮತೀಂದ್ರತೀರ್ಥರಿಗೆ ವ್ಯಾಕರಣ ಶಾಸ್ತ್ರದಲ್ಲಿ ಅಗಾಧವಾದ ಪಾಂಡಿತ್ಯ ಇತ್ತು ಎಂದು ತಿಳಿಯುತ್ತದೆ. ಅವರ ವ್ಯಾಖ್ಯಾನಕ್ಕೆ 'ರಸಿಕ ರಂಜನೀ ಎಂದು ಹೆಸರು. ಸಾಹಿತ್ಯ ರಸಿಕರನ್ನು ರಂಜಿಸುವ ಈ ವ್ಯಾಖ್ಯಾನವು ಅನ್ವರ್ಥನಾಮ ಪಡೆದಿದೆ.

ವ್ಯಾಖ್ಯಾನಕಾರರಾದ ಸುಮತೀಂದ್ರತೀರ್ಥರು ಉಷಾಹರಣ ಕಾವ್ಯವನ್ನು ಕನ್ಯಾಹರಣೋತ್ಸವ ಎಂದು ಒಂಬತ್ತನೇ ಸರ್ಗದ ವಿಚಾರದಲ್ಲಿ ತಿಳಿಸುವಾಗ ಉಷಾಯಾಃ ಆಹರಣಮ್-ಉಷಾಹರಣಮ್ ಎಂಬುದಾಗಿ ಹೇಳಿ ಕನ್ಯಾಯಾಃ ಯದಾಹರಣಮನಿರುದ್ಧಕತೃಕಂ ಎನ್ನುವರು. ಹೀಗೆ ಎರಡು ರೀತಿಯಲ್ಲಿಯೂ ಶಬ್ದಪ್ರಯೋಗವನ್ನು ಹೇಳುವುದು ಕಾವ್ಯದ ಕೇಂದ್ರವಸ್ತುವಿಗೆ ಸಮಂಜಸ- ವಾಗಿಯೇ ತೋರುವುದನ್ನು ಮನಗಾಣಬಹುದು. ಈ ಕಾವ್ಯದಲ್ಲಿ 'ಪ್ರಧಾನನಾಯಕನ' ಪಾತ್ರದಲ್ಲಿ ಕೃಷ್ಣನೇ ಪ್ರತಿಗಾಣಿಸಿದರೆ ಪ್ರದ್ಯುಮ್ನ ಹಾಗೂ ಅನಿರುದ್ಧರು ಉಪನಾಯಕರಾಗಿ ಬಿಂಬಿಸುತ್ತಾರೆ. ಹೀಗೆ ಉಷಾಹರಣ- ಕಾವ್ಯದಲ್ಲಿ ಮೂವರು ಧೀರನಾಯಕರಾಗಿ ಕೃಷ್ಣ , ಪ್ರದ್ಯುಮ್ನ ಹಾಗೂ ಅನಿರುದ್ಧರು ಬಿಂಬಿಸಿದ್ದರೆ, ಕಥಾನಾಯಕಿಯರಾಗಿ (ಅವರ ಪತ್ನಿಯರು) ರುಕ್ಮಿಣಿಯರು 'ಪ್ರಧಾನ ನಾಯಿಕಾ' ಸ್ಥಾನದಲ್ಲಿ ಪ್ರದರ್ಶಿಸುತ್ತಾರೆ. ರುಕ್ಮಾವತಿ, ಉಷೆಯರು 'ಉಷಾನಾಯಿಕೆ'ಯಗಿ ಬಿಂಬಿಸಿರುವುದನ್ನು ಮನಗಾಣಬಹುದು.

ಈ ಮಹಾಕಾವ್ಯದಲ್ಲಿ 'ವೀರರಸ'ಕ್ಕೆ ಪ್ರಾಧಾನ್ಯವನ್ನು ಕೊಟ್ಟಿರುವುದು ವಿದಿತವಾದರೂ ಶೃಂಗಾರ ಹಾಗೂ ಅದ್ಭುತರಸಗಳು ಎರಡನೆಯ ಸ್ಥಾನಗಳನ್ನು ಅಲಂಕರಿಸಿವೆ. ಕಾವ್ಯದ ಭಾಷಾಲಂಕಾರವು ವಿಬುಧರಿಗೆ (ವಿದ್ವಜ್ಜನರಿಗೆ) ಸಹೃದಯ ವ್ಯಕ್ತಿಗಳಿಗೆ ಹರ್ಷೋಲ್ಲಾಸಗಳನ್ನು ಕೊಡುತ್ತದೆ.

**ಭಕ್ತ್ಯೈಕವಶ್ಯಃ ಪ್ರಭುಃ**

ತನ್ನ ಕಾವ್ಯಕ್ಕೆ ಭಕ್ತಿರಸವೇ ಪ್ರಧಾನತಮ ಎಂದು ಹೇಳುವ ಕವಿಯ ವಾಣಿ ಹೀಗಿದೆ.

**ತಸ್ಯಾಸ್ತು ದುರ್ಭಾಷಣದಸ್ಯುದೋಷವಿಧ್ವಂಸನೋ ಭಕ್ತಿರಸಃ ಸಖಾ ಮೇ ।**
**ಸಂಗಂತುಕಾಮಸ್ಯ ಪದಾರವಿಂದೇ ಪಾಪಾಪಹೇ ಪೂರ್ಣಸುಖಸ್ಯ ವಿಷ್ಣೋಃ ॥**
॥ 1 –7 ॥

ಸುಖಪೂರ್ಣನಾದ, ಪಾಪಗಳನ್ನು ನಾಶಪಡಿಸುವ ವಿಷ್ಣುವಿನ ಪಾದಾರವಿಂದಗಳನ್ನು ಹೊಂದಲು ಇಚ್ಛಿಸುವ ನನಗೆ, ಅಪಶಬ್ದಗಳೆಂಬ ಕಳ್ಳನಿಂದ ಉಂಟಾದ ದೋಷಗಳನ್ನು ಪರಿಹರಿಸುವ ವಿಷ್ಣು ಭಕ್ತಿಯು ಸಖನಾಗಿರಲಿ.

**ದೈವಂ ಚೈವಾತ್ರ ಪ್ರಥಮಂ (ಪಂಚಮಂ)**

ಪುರುಷ ಪ್ರಯತ್ನಕ್ಕಿಂತಲೂ ದೈವವೇ ಪ್ರಧಾನವಾದುದು ಎಂಬುದನ್ನು ಕವಿ ಹೀಗೆ ವರ್ಣಿಸಿದ್ದಾರೆ.

**ಮನ್ಯೆ ಪ್ರಯತ್ನಾದಪಿ ದೈವಮಗ್ರ್ಯಂ ಯತ್ಪ್ರೇರಿತೋ ವೈ ಯತತೇ ಕ್ರಿಯಾಸು ।**
**ಯಸ್ಮಾದಿಹಾಮುತ್ರ ಚ ಸಂಪದಾಪನ್ನಾನ್ಯನ್ನಿಮಿತ್ತಂ ಪ್ರವದಂತಿ ಸಂತಃ ॥**
॥ 2– 26 ॥

ಸಕಲ ಜೀವರೂ ಅವರವರ ದೈವಕ್ಕೆ ಅನುಗುಣವಾಗಿಯೇ ಪ್ರಯತ್ನಿಸುತ್ತಾರೆ. ಮತ್ತು ಕಾರ್ಯಪ್ರವೃತ್ತರಾಗುತ್ತಾರೆ. ಈ ಲೋಕದಲ್ಲಾಗಲೀ ಪರ ಲೋಕದಲ್ಲಾಗಲೀ ಸಂಪತ್ತು ಮತ್ತು ವಿಪತ್ತುಗಳಿಗೆ ದೈವವೇ ಕಾರಣ ಎಂಬುದಾಗಿ ಸಜ್ಜನರು ಹೇಳುತ್ತಾರೆ. ಆದ್ದರಿಂದ ಪುರುಷ ಪ್ರಯತ್ನಕ್ಕಿಂತ ದೈವವೇ ಪ್ರಧಾನ.

**ಹುಟ್ಟುಗುಣ ಸುಟ್ಟರೂ ಹೋಗಲ್ಲ**

'ಹುಟ್ಟುಗುಣ ಭಟ್ಟ ಹತ್ತಿದರೂ ಬಿಡದು' ಎಂಬ ಮಾತಿಗೆ ಅನುಕೂಲವಾದ ಕವಿಯ ಒಂದು ಮಾತು ಹೀಗಿದೆ.

**ಹೃದಯಂ ತು ಬಭೂವ ರುಕ್ಮಿಣೋ ದಮಿತಸ್ಯಾಪಿ ಬದ್ಧಮನ್ಯುಮತ್ ।**
**ಕುಶಲೈರಪಿ ಮಾರ್ಜಿತೋ ಜನೈರಪಿ ನಾಂಗಾರಮುಪೈತಿ ಪಾಂಡುತಾಮ್ ॥**
॥ 3 – 74 ॥

ರುಕ್ಮಿಯನ್ನು ಎಷ್ಟು ಸಮಾಧಾನ ಪಡಿಸಿದರೂ ಅವನ ಹೃದಯವು ಕೋಪ ಉಳ್ಳದ್ದೇ ಆಯಿತು. **ಅಂಗಾರಕವನ್ನು** (ಇಜ್ಜಲನ್ನು) ಎಷ್ಟು ಜನ ಬುದ್ಧಿವಂತರು ಸೇರಿ ತೊಳದರೂ ಅದು ಬಿಳಿ ಆಗುವುದಿಲ್ಲವಷ್ಟೇ !

ಹೀಗೆ ತ್ರಿವಿಕ್ರಮಪಂಡಿತಾಚಾರ್ಯರು ಇಡೀ ಕಾವ್ಯದಲ್ಲಿ ತಮ್ಮ ಕೌಶಲ-ವನ್ನು, ವರ್ಣನೆಯ ನೈಪುಣ್ಯವನ್ನು, ಪಾಂಡಿತ್ಯದ ಪರಿಪಾಕವನ್ನು ಪ್ರದರ್ಶಿಸಿ ಮೆರೆದಿದ್ದಾರೆ.

ಉಷಾಹರಣ ಮಹಾಕಾವ್ಯವು ತನ್ನ ಧಾರೆಯಲ್ಲಿ ಕೆಲವು ಸಂಗತಿಗಳನ್ನು ಉಪೇಕ್ಷೆ ಮಾಡಿದೆ. ಅವುಗಳೇ, ಋತುಕಾಲಚಕ್ರಗಳು, ರಾಯಭಾರಿಗಳನ್ನು ವಿವಾಹ ಪೂರ್ವಕಾರ್ಯಗಳಲ್ಲಿ ಕಳುಹಿಸುವುದು ಹಾಗೂ ಕಾವ್ಯದ ಸರಳ ಶೈಲಿಗಳು ಸಹೃದಯ ವಾಚಕರ ಮನಸ್ಸನ್ನು ಒಲಿಸಿರುವುದು ಕಾವ್ಯದ ಅಡಿಪಾಯ, ಕಟ್ಟಡಗಳನ್ನು ಸಮರ್ಥಿಸುತ್ತದೆ. 'ಮಹಾಕಾವ್ಯ'ದ ಹೆಗ್ಗಳಿಕೆಯ ಎಲ್ಲಾ ಸದ್ಗುಣಗಳನ್ನು ಈ ಕಾವ್ಯವು ಸಂಪಾದನೆ ಮಾಡುವಲ್ಲಿ ಯಶಸ್ವಿಯಾಗಿ ಉಷಾಹರಣ ಕಾವ್ಯ ಎಂಬ ನಾಮವು ಸಂಸ್ಕೃತ ಭಾಷಾ ಹಾಗೂ ಕಾವ್ಯ ಸಾಹಿತ್ಯಪ್ರಪಂಚದಲ್ಲಿ ಅತ್ಯಂತ ಯಶಸ್ವಿಯಾಗಿರುವುದು ಪ್ರಶಂಸನೀಯ.

ದಿನಾಂಖ :
ಸ್ಥಳ : ಬೆಂಗಳೂರು.

ಗುರುಪಾದರೇಣು
**ಡಾ|| ಎಲ್.ಎಸ್. ವಾದಿರಾಜಾಚಾರ್ಯ**
ಉಪ ನಿರ್ದೇಶಕರು
ವಿದ್ಯಾಧೀಶ ಸಂಸ್ಕೃತ ಸ್ನಾತಕೋತ್ತರ
ಶೋಧ ಕೇಂದ್ರ, ಬೆಂಗಳೂರು-04.

# विषयानुक्रमणिका

---

।। श्रीः ।।

।। श्रीगुरुभ्यो नमः ।।

।। श्रीगोपालकृष्णाय नमः ।।

महाकविश्रीत्रिविक्रमपण्डिताचार्येण विरचितम्

# उषाहरणम्

श्रीसुमतीन्द्रपरमहंसकृतया रसिकरञ्जनीटीकया सहितम् ।

## ।। अथ प्रथमः सर्गः ।।

श्रीमन्तो जानकीजानेः पदपङ्कजरेणवः ।
जयन्ति सीतावक्षोजकुङ्कुमश्रीविडम्बिनः ।। १ ।।

येनाखण्डि मुदैव खण्डपरशोरुद्दण्डकाण्डासनं
भूदेवीतनयाप्यलाभि सरसैरङ्गैरपाङ्गैरपि ।
सद्धर्मद्युतिहर्म्यनिर्मितलसन्नर्मोत्थशर्मोदयः
श्रीरामो मम मानसे विलसतात्सीतासहायः सदा ।। २ ।।

सज्जनाम्भोरुहपुषे वेदव्यासाभिधाजुषे ।
तमस्तोममुषे तस्मै परस्मै ज्योतिषे नमः ।। ३ ।।

आमोदं यो व्यतानीद्रघुकुलतिलके सेवया श्रीहनूमान्
भीमात्मा कृष्णदेवे प्रबलधरणिपव्याजवैरीन्द्रहत्या ।
मध्वाख्यो ब्रह्मसूत्रप्रभृतिकृतिकृतान्योक्तिभाष्यादिकृत्या
श्रीवेदव्यासदेवे प्रदिशतु सुदृशं श्रीमदानन्दतीर्थः ।। ४ ।।

जगन्ति न त्रीण्यपि यत्पदत्रयप्रयोगपर्याप्तफलानि जज्ञिरे ।
तमाननूषेय लसत्पदाकृतिं कथाप्रबन्धारममुं त्रिविक्रमम् ।। ५ ।।

हरेश्चरित्रं निबबन्ध चित्रं चित्रायमाणैः सरसैर्वचोभिः ।
त्रिविक्रमाचार्यसुधीरहं च तत्सूक्तिसंशीलनतः कृतार्थः ॥ ६ ॥

भूरिमनीषागमचितकरणान् श्रीजयतीर्थव्रतिकृतिशरणान् ।
सन्ततमीडे सुचरितवरणान्वेङ्कटनारायणगुरुचरणान् ॥ ७ ॥

यतिः स सुमतीन्द्रराडहमनर्घ्यपद्यक्रम-
त्रिविक्रमकवेः कृपामुपचयं जगत्यां नयन् ।
उषाहरणदीपिकां रसिकरञ्जनीनामिकां
तनोमि सुमनोमनोधनविनोदभावोदयाम् ॥ ८ ॥

पार्श्वद्वयप्रवहदच्छकवेरकन्या-
मुक्ताग्र्यदामतरलः सरलैर्वचोभिः ।
व्याख्याननैपुणमुषाहरणप्रबन्धे
दद्यादपाङ्गधनिनो मम रङ्गनाथः ॥ ९ ॥

श्रीमान् त्रिविक्रमपण्डिताचार्यवर्यः उषाहरणाख्यं महाकाव्यं चिकीर्षुः तदादौ 'आशीर्नमस्क्रिया वस्तुनिर्देशो वाथ तन्मुखम्' इति कविसमय सिद्धान् आशीर्नमस्क्रियावस्तुनिर्देशान् लक्ष्मीत्यादित्रिश्लोक्या करिष्यन्नादौ आशीर्वचनरूपं मङ्गलमातनोति-

**लक्ष्मीलावण्यपीयूषपानपात्रायितेक्षणः ।**
**सनीरनीरदश्यामः पातु वो भगवान्हरिः ॥ १ ॥**

**लक्ष्मीलावण्येति** ॥ लक्ष्म्याः लावण्यं 'मुक्ताफलेषु छायायास्तरलत्व-मिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' इत्येकावल्युक्तं कान्ति-तरलत्वं पीयूषममृतं तस्य पानपात्रमिवाचरतः पानपात्रायिते । ततो

गत्यर्थाकर्मकेत्यादिना कर्तरि क्तः । नीरेण जलेन सहितः सनीरः स चासौ नीरदो मेघ इव श्यामः । भगवान् समग्रैश्वर्यादिषड्गणसम्पन्नः । हरिः वः व्याख्यातृश्रोतॄन् । पातु रक्षतु । इति क्रियाकारकयोजना । अत्र एतत्काव्यप्रतिपाद्यं श्रीकृष्णरूपं परब्रह्मेति सूचयता कविना 'अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत् । स्मृत्वा प्रारभतो ग्रन्थं करोतीशो महत्फलम् ।।' इति भगवत्पादोदाहृतवचनसिद्धं भगवदनुग्रहापादनीयम् ऐहिकामुष्मिकं च फलमस्तीति विभावितम् । तथा च वराहपुराणे 'भारतीयकथाबन्धं मद्भक्तैरेव निर्मितम् । तत्काव्यं यः पठेत्प्राज्ञो दशांशं फलमाप्नुयात् ।।' इति । तेन च 'काव्यं यशसेऽर्थकृते व्यवहार विदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।।' इति यत्कविसमयसिद्धं यशआद्यर्थत्वं तन्नान्तरीयकमिति विज्ञायते । 'काव्यालापांश्च वर्जयेत्' इति निषेधस्तु अभद्रविषयकाव्यपर इति भावः । तथा च वराहपुराणे 'य करोति स्वयं काव्यं कल्पयित्वा वृथा कथाम् । तच्छ्रमो व्यर्थतामेति तदध्यायी च दोषभाक् ।।' इति । अत्र श्रीदेव्यां भगवतो विभावानुभावसात्विकव्यमिचारिभिः परिपोषिताया रतेरुपनिबन्धनात्सम्भोगात्मा शृङ्गारो रसः लावण्येत्यादिना व्यज्यते । लावण्यमेव पीयूषं लावण्यपीयूषं तस्य पानमित्युक्तपानक्रियां प्रति लावण्यस्य स्वरूपतः कर्मतयान्वयासम्भवेन पीयूषतया आरोपितस्य तत्वसम्भावनाय परिणामाभ्युपगमात्परिणामालङ्कारः । यदाह वीरनारायणः साहित्यचिन्तामणौ 'विषयो विषयित्वेन तस्मिन्परिणमेद्यदि । प्रकृतार्थोपयोगाय परिणामः स च द्विधा' इति । कविसम्बन्धिनो लक्ष्मीरमणगोचरस्य रतिभावस्य शृङ्गारोऽङ्गमिति रसवदलङ्कारश्च । 'रसौ यत्रापरस्याङ्गं रसवत्तत्प्रकीर्तितम्' इति हि

तद्विदः । लक्ष्मीलावण्येत्यत्र लकारस्य पीयूषपानेत्यत्र पकारस्य चासकृदा-वृत्तेर्वृत्त्यनुप्रासः । समीरनीरेत्यत्र शब्दार्थयोरभेदेऽपि तात्पर्यभेदाल्लाटानुप्रासश्च शब्दालङ्कारः । तदुक्तं 'वृत्त्यनुप्रास एकस्याप्यावृत्तिरसकृद्यदा । लाटपूर्वस्तु शब्दार्थाभेदे तात्पयभेदतः' इति । लक्ष्मीलावण्येत्यत्र काव्यमुखे मगणो निबद्ध इति 'वर्णं गणं च काव्यस्य मुखे कुर्यात्सुशोभनम्' इति कवि-समयोऽनुगृहीतः । तस्य क्षेमश्रीपाप्तिः व्याख्यातृश्रोतृणां च फलम् । यदाहुः 'क्षेमं सर्वगुरुदत्ते मगणो भूमिदैवतः' इति । पिङ्गलनागोऽपि 'सर्वगुर्मो भूः श्रीः' इत्याह । 'मो भूमिस्त्रिगुरुः श्रियं वितनुते' इति पिङ्गलनाग-सूत्रार्थः । यद्यपि शृङ्गारतिलके 'व्यसनं लवौ' इति लकारस्य व्यसन-फलत्वमुक्तं तथापि तत्रैव 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा' इति समाहितम् । लक्ष्मीशब्दश्च मङ्गलदेवतावचन इति सर्वमवदातम् ।। १ ।।

आशीर्नमस्क्रियेत्यत्र समुच्चयाप्रतिषेधाद्गुरुनमस्काररूपं मङ्गलमाचरति-

**यत्पादपद्मयुगरेणुनिषेवणेन सद्यः**
**प्रभूतमतयो भविनो भवन्ति ।**
**स्कन्दाभिधानगदितं गुरुमद्य मूर्ध्ना**
**ज्ञानामृतोपनिधिभूमिममुं नमामि ।। २ ।।**

**यत्पादेति** ।। यस्य गुरोः पादौ पद्मे इव 'उपमितं व्याघ्रादिभि-स्सामान्याप्रयोगे' इति समासः । पादपद्मे तयोर्युगं युगलं 'युग्मं तु युगलं युगम्' इत्यमरः । तस्य रेणु पांसुः 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना नद्वयो रजः' इत्यमरः । तस्य निषेवणं भजनं 'परिनिविभ्यः सेवसितसयसिवु-सहसुट्स्तुस्वञ्जाम्' इति नेः परस्य सेवतेः सस्य षत्वं सद्यस्तत्क्षणे 'सद्यः

सपदि तत्क्षणे' इत्यमरः । भविनः जन्मवन्तः । प्रभूता मतिर्येषां ते प्रचुर-मतयः । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इत्यमरः । भवन्ति अमुं तमित्यर्थः । स्कन्दाभिधानगदितं स्कन्दस्य षण्मुखस्य यदभिधानं सुब्रह्मण्य इति नामधेयं तेन गदितः स्पष्टं परिभाषितः तम् । 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः । ज्ञानामृतोपनिधिभूमिं ज्ञानमेव अमृतं तस्य उपनिधिर्न्यासः तस्य भूमिं आश्रयं 'पुमानुपनिधिर्न्यासः' इत्यमरः । 'भूमिः क्ष्मास्थानमात्रयोः' इति केशवश्च । गुरुं पितरं 'सुब्रह्मण्याख्यसूरेः सुतः' इति कविरन्यत्राप्यवादीत् । 'गुरुः स्याद्गीष्यतौ श्रेष्ठे गुरुः पितरि दुर्भरे' इति विश्वः । अद्य ग्रन्थारम्भाभ्युदयसमये । मूर्ध्ना शिरसा साष्टाङ्ग-मिति यावत् । नमामि 'णमु प्रह्वत्वे शब्दे च' इति धातोर्लट् । ज्ञानामृतोपनिधिभूमिमित्यनेन पाण्डित्यातिशयलक्षणं चरित्रं भविनः प्रभूतमतय इत्यनेनोपलक्षितं वर्णितमित्युदात्तालङ्कारः । 'उदात्तमृद्धेश्चरितं श्लाघ्यं वान्योपलक्षणम् । सानौ यत्राभवद्युद्धं तद्धूर्जटिकिरीटिनोः ।।' इति तल्लक्षणोदाहरणे । वसन्ततिलकावृत्तं 'वसन्ततिलका तभौ जौ गौ' तगणभगणौ जगणद्वयं गुरुद्वयं च चेत्तद्वृत्तं वसन्ततिलकेति सूत्रार्थः । यदाह केदारः– 'उक्ता वसन्ततिलका तभजाजगौ गः' इति ।। २ ।।

कविश्चिकीर्षितं वस्तु निर्दिशति–

**विज्ञानपाथेयवतां विपश्चिदागन्तुकानामहमात्मशक्त्या ।**
**आतिथ्यकार्याय फलं रसार्द्रं काव्याभिधानं लिकुचः**
**प्रसोष्ये ।। ३ ।।**

**विज्ञानेति** ।। विज्ञानं विशिष्टज्ञानमेव पाथेयं पथिन्शब्दात्तत्र साधुरित्यर्थे 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ्प्रत्ययः । तदेषामस्तीति पाथेयवन्तः ।

अत्र रूपकाश्रयणेनोत्तरपदार्थप्राधान्यस्य अभिसंहिततया अन्यपदार्थप्रधान-बहुव्रीहिर्नाभिप्रेत इति । मतुबुत्पत्तौ 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मकारस्य वकारः । विपश्चितो विद्वांस एव आगन्तुकाः अतिथयः तेषाम् । 'स्यादावेशिक आगन्तुरतिथिर्ना गृहागते' इत्यमरः । आगन्तु-शब्दादौणादिकतुन्प्रत्ययान्ततया निष्पन्नात्संज्ञायां कन्प्रत्ययः । आतिथ्यं अतिथिसत्कारः । तच्च तत्कार्यं च तस्मै । अतिथिभ्य इदमित्यर्थे 'अतिथेर्ञ्यः' इति ञ्यप्रत्ययः । लिकुचः लिकुचकुलसमुद्भूतः । अहं त्रिविक्रमपण्डिताचार्यः । आत्मशक्त्या काव्याभिधानं काव्यमित्यभिधानं यस्य तत् रसार्द्रं शृङ्गारादिभिः सरसम् । फलपक्षे रसेन द्रवेणार्द्रं क्लिन्नम् । अस्मिन्पक्षे लिकुचो लिकुचवृक्षः । 'लिकुचो लकुचो डहुः' इति जम्बीरलताविशेषस्याभिधानम् । प्रसोष्ये उत्पादयिष्यामि । 'षूङ् प्राणिप्रसवे' इत्यस्माद्धातोर्लृट् । 'स्वरतिसूति' इत्यादिनेड्विकल्पः । अत्र विज्ञानविपश्चित्कविकाव्यानां क्रमेण पाथेयत्वागन्तुकत्वलिकुचत्वफलत्वा-रोपात्सावयवरूपकालङ्कारः । 'उपमानतावच्छेदकस्योपमेयतावच्छेदकधर्मेण सह आरोपितसामानाधिकरण्यं रूपकम्' इति हि तल्लक्षणम् । वृत्त्यनुप्रासः शब्दालङ्कारश्च स्वयमूह्यः । इन्द्रवज्रा वृत्तम् । तथा च पिङ्गलनागः । 'ततजा गङ्गेन्द्रवज्रा स्यात्' इति । 'स्यादिन्द्रवज्रा ततजाश्च गो गः' इति वृत्तरत्नाकरश्च । तगणद्वयं जगणः गुरुद्वयं च यत्र तदिन्द्रवज्रेति तदर्थः । काव्याभिधानमित्यत्र सरसशब्दार्थसङ्घटनात्मकं कवेः कर्म काव्यं 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति कविशब्दात् ष्यञ् ।

ननु कथमेतत् यावता सूत्रे कर्मशब्दः क्रियावचनो व्याख्यातो वृत्तौ । नह्यत्र क्रियाभिधीयते । किं तर्हि तत्कृतो ग्रन्थ इति चेदत्राहुः ।

'क्रियाकर्मण्येव प्रत्ययविधानं औपचारिकस्तु तत्कृतौ प्रयोगः' इति । हरदत्तस्तु सूत्रे 'यः कर्मशब्दः यश्च वृत्तौ क्रियाशब्दः तदुभयमपि कर्मसाधनं कर्मक्रियाकार्यमित्यर्थः । तेन वृत्तिव्याप्यकर्मण्येव प्रत्ययः' इति ॥ ३ ॥

सन्तः सहृदया एव मम कृतिमङ्गीकुर्युरित्याह-

**न प्रौढशब्दाऽपि न चार्थपुष्कला**
**नवाऽप्यलङ्कारशुभा कृतिर्मम ।**
**न श्राव्यवृत्ता रसिकैरुपेक्षिता**
**नवेति कैश्चिद्व्रियते वधूरिव ॥ ४ ॥**

**न प्रौढशब्देति** ॥ प्रौढः प्रवृद्धः शब्दो यस्याः सा प्रौढशब्दा विटजनानुकूलविदग्धवचना न तादृशी । कृतिपक्षे परुषसन्दर्भा न । किन्तु नववधूरिव मधुरसुकुमारशब्दा । अर्थैर्धनैस्सम्भृता पुष्कला न च । कृतिपक्षे अर्थैः अभिधेयैः पुष्कला गहनापि च न । अर्था व्यक्ता इति भावः । अलङ्कारैर्हारादिभिरेव शुभा आकृतिर्विग्रहो यस्याः सा । तथा कृतिपक्षे अलङ्कारैरुपमारूपकोत्प्रेक्षादिभिरेव शुभा न । किन्तु निसर्गत एव शोभावती 'निरलङ्कृति वा क्वचित्' इति कविवचनादिति भावः । श्राव्यमवश्यं श्रोतव्यं 'ओरावश्यके' इति ण्यत् । वृत्तं धनिकपल्लविकावर्जनादिरूपं यस्याः सा तादृशी च न । कृतिपक्षे वृत्तमुपेन्द्रवज्रावसन्ततिलकादिरूपम् । रसिकैस्तत्कालरसज्ञैः । 'रसादिभ्यश्च' इति ठञ् । उपेक्षिता अनीहिताऽपि मम कृतिः । कैश्चिदन्यैः रसिकैः स्थिरतररसाभिलाषिभिः । नववधूरिव नवा नूतनेति हेतोः । व्रियते सम्भज्यते अङ्गीक्रियते । 'वृङ् सम्भक्तौ' इति धातोः कर्मणि लट् । न प्रौढशब्देति काका योजने प्रौढशब्दत्वमर्थ-

पुष्कलत्वमलङ्कारशुभाकृतित्वं श्राव्यवृत्तत्वं च कृतेर्लभ्यते । अत्र उपमानोपमेयसाधारणधर्मवाचकशब्दानां चतुर्णामप्युपादानात् कृतिनववध्वोः सादृश्यवर्णनाच्च पूर्णोपमालङ्कारः । तथाचालङ्कारमञ्जरीकृतः 'उपमा साम्यनिष्पत्तिरुभयोरनुरूपयोः । पूर्णा वर्ण्योपमाधर्मेवादीनां प्रतिपादने ।।' इति । अर्थालङ्कारः शब्दनानार्थत्वेन श्लेषानुप्राणितश्च । इन्द्रवंशोपेन्द्र-वंशानामकयोर्वृत्तयोर्मिश्रणादुपजातिः । 'स्यादिन्द्रवंशा ततजैरसंयुतैः । 'उपेन्द्रवंशा जतजैरसंयुतैः' इति लक्षणात् । अस्ति च प्रथमतृतीयपादयो-रिन्द्रवंशालक्षणं द्वितीयतुर्यपादयोरुपेन्द्रवंशालक्षणमिति भवत्युपजातिः । तथा च वृत्तरत्नाकरः 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति । 'इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम' इति च ।। ४ ।।

प्रौढशब्दत्वाद्यभावेन नैर्गुण्यप्राप्त्या प्रेक्षावदनुपादेयत्वं स्यादित्यतः स्वचिकीर्षितकाव्ये प्रतिपाद्यस्य भगवतो लोकोत्तरगुणोत्तरत्वेन तन्महिम्ना कविसमयसिद्धाः गुणा एव पुष्कलास्सम्भवेयुरिति भावेनाह–

**न चात्र नैर्गुण्यकथा मुकुन्दपादाम्बुजस्मारकवाक्यबन्धे ।**
**यदृच्छयाऽपि क्षिणुयाद्धि दोषान्नाम्नां सकृत्कीर्तनमच्युतस्य**
**।। ५ ।।**

**न चात्रेति** ।। मुकुन्दस्य मोक्षदातुर्भगवतः यत्पादाम्बुजं तस्य स्मारको वाक्यबन्धः पदकदम्बसङ्घटना यस्मिन्काव्ये तस्मिन् । पादाम्बुजस्मारकेति शेषषष्ठ्या समासः । तत्प्रयोजको हेतुश्चेति निदर्शनात् । अत्र काव्ये नैर्गुण्यकथा च न नैवास्ति । हि यतः अच्युतस्य 'अनित्यत्वं

देहहानिर्दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधो ज्ञेयः' इति शास्त्रोक्तचतुर्विधनाशरहितस्य हरेर्नाम्नाम् अच्युतानन्तगोविन्दरामकृष्णाद्यभिधानानां मध्ये यस्य कस्यापि यदृच्छया स्वैरतया अवशेनेति यावत् । सकृदेकवारम् । कीर्तनं संशब्दनमपि । दोषान् गुणविपर्ययात्मनः अप्रौढशब्दादिरूपान्काव्यदोषान् भ्रमप्रमाददुरितादिकर्तृदोषांश्च । क्षिणुयात् हिंस्यात् परिहरेत् । 'क्षिणु हिंसायाम्' इति धातोर्लिङ् । अत्र सर्वदोषपरिहारसमर्थस्य भगवन्नामसङ्कीर्तनस्य हेतोः पूर्वार्धोक्तकाव्यनैगुण्याभावरूपहेतुमता सह वर्णनाद्धेतुरलङ्कारः । 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति तल्लक्षणात् । मुकुन्देत्यादिविशेषणस्य साभिप्रायकत्वात्परिकरालङ्कारो हेत्वलङ्कारस्याङ्गमिति तयोरङ्गाङ्गिभावेन सङ्करः । नैर्गुण्यकथेत्यत्र निर्गता गुणा यस्मात्स प्रबन्धो निर्गुणः तस्य भावो नैगुण्यं तस्य कथेति हि व्युत्पत्तिः । तत्र गुणशब्देन समवायवृत्त्या रसोत्कर्षहेतवो माधुर्यादयो ग्राह्याः । तथा च भूपालीये 'माधुर्यमोजः प्रसादश्चार्थव्यक्तिरुदात्तता । औदार्यसुकुमारत्वसमत्वश्लेषकान्तयः ।। सौक्ष्म्यविस्तरसङ्क्षेपसौशब्दौर्जित्यभाविकम् । प्रेयः समाधिगाम्भीर्यगतिप्रौढ्युक्तिरीतयः । सम्मितत्वमिति प्रोक्तास्तेषामालोच्यते स्थितिः ।।' इति काव्यगुणान् गणयित्वा 'गुणांश्चतुर्विंशतिमाह भोजो वदन्ति चैतान्दश वामनाद्याः । आचक्षते त्रीनथ भामहाद्या युक्तं मतं तत्र हि भामहीयम् ।।' इति तत्र विशेषोऽप्युक्तः । क्षिणुयाद्धि दोषानित्यत्र दोषाः काव्यापकर्षापादका अप्रयुक्तत्वादयो विवक्षिताः । यदाह विद्यानाथः- 'अप्रयुक्तमपुष्टार्थमसमर्थं निरर्थकम् । नेयार्थं च्युतसंस्कारं सन्दिग्धं चाप्रयोजकम् ।। क्लिष्टं गूढार्थकं ग्राम्यमन्यार्थं चाप्रतीतकम् । अविमृष्टविधेयांशं विरुद्धमतिकृत्तथा ।। अश्लीलं परुषश्चेति दोषाः सप्तदश स्मृताः ।।' इति ।। ५ ।।

कविरिदानीं स्वचिकीर्षितकाव्ये स्वप्रवृत्तिप्रकारं दर्शयति–

**वैदर्भमार्गानुगताः कवीन्द्राः केचित्परे गौडपथप्रवीणाः ।**
**प्रायेण तेषामनुवृत्त्यभावाद्द्वयानभिज्ञस्त्वपथेन यामि ।। ६ ।।**

**वैदर्भेति** ।। केचित्कवीन्द्राः पण्डितश्रेष्ठाः विदर्भदेशे भवाः कवयो वैदर्भाः तेषां मार्गो रीतिर्वैदर्भरीतिरित्यर्थः । तमनुगताः । द्वितीयाश्रितेति समासः कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाद्भवति । श्रितादिषु गम्यादीनामुपसङ्ख्यानाद्वा । वैदर्भमार्गेण अनुगता इति वा । अपरे अन्ये कवीन्द्राः । गौडानां पन्थाः गौडपथः 'ऋक्पूरब्धूः पथामानक्षे' इति समासान्तोऽप्रत्ययः । तस्मिन्प्रवीणाः 'सप्तमी शौण्डैः' इति समासः । निपुणाः । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः । गौडीयायां रीतौ निष्णाता इत्यर्थः । अहं तु तेषां वैदर्भाणां गौडानां च । प्रायेण बाहुल्येन । 'प्रायो भूम्नि' इत्यमरः । अनुवृत्त्यभावात् यथा तेषां तेषां कवीनामस्माकं वैदर्भी रीतिरेव अस्माकं गौडीया रीतिरेवेत्यभिनिवेशः । तथा नियतरीत्यनुसरणाभावात् द्वयानभिज्ञः द्वयस्य उक्तरीतिनियमद्वयस्य अनभिज्ञः । अगणयितेति यावत् स सन् । अपथेन 'नास्तत्पुरुषात् पथो विभाषा' इति विकल्पेन समासान्तनिषेधः । अमार्गेण अनियतरीतिमार्गेणेत्यर्थः । यामि गच्छामि । क्वचिद्वैदर्भीं रीतिमाश्रित्य क्वापि गौडीयां रीतिमनुसृत्य कुत्रचित्त् पाञ्चालीरीतिमवलम्ब्य काव्यं रचयामि । यथा देशान्तरं जिगमिषुः पथिकः वैदर्भमार्ग एव गौडीयपथ एव पाञ्चालपद्धतिरेवेति नियममनभिसन्धाय यथारुचि सुपथा याति तथा अहमपीति भावः । अत्रेतरकाव्यापेक्षया तुशब्देन स्वस्यानुवृत्त्यभावादिविशेषस्फोरणात् व्यतिरेकालङ्कारः 'शब्दे वार्थे तथाक्षिप्ते औपम्ये वस्तुनोर्द्वयोः । यद्भेदकथनं सोऽयं व्यतिरेक इति स्मृतः ।।' इति

वीरनारायणेन तल्लक्षणकथनात् । वैदर्भमार्गो वैदर्भी रीतिरित्याद्युक्तं तत्र 'रीतिर्नाम गुणाश्लिष्टपदसङ्घटना मता' । यदाह वामनः– 'रीतिरात्मा काव्यस्य । विशिष्टा पदरचना रीतिः । सा त्रिधा वैदर्भी गौडीया पाञ्चाली च ।' 'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता । विपञ्चीस्वरसौभाग्या वैदर्भीरीतिरिष्यते ।। समस्तात्युद्भटपदामोजःकान्तिगुणान्विताम् । उदाहरन्ति गौडीयां रीतिमेतां विचक्षणाः ।। आश्लिष्टश्लथभावां तु पुराणच्छाय-यान्विताम् । मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ।।' इति । तत्र वैदर्भी यथा– 'लक्ष्मीलावण्यपीयूषपानपात्रायितेक्षणः । सनीरनीरदश्यामः पातु वो भगवान्हरिः ।।' इति । यथा वा– 'स्कन्धारोपितरेवतीरतिरमाकान्तं समन्तादमुं दृष्ट्वा दृष्टिविघातकृद्द्युतिचयं खे खेचराणां भ्रमः । नानारत्ननगं सुमेरुशिखरं प्रायः प्रभावाद्विभोर्बाणस्योपवनस्थलीं स्वयमलङ्कर्त्तुं प्रयातीत्यभूत्' इत्यादि सप्तमसर्गे । गौडीया यथा तत्रैव– 'लीलालोलगतिस्तनूरुह-परिप्रोद्धूननाचूर्णितप्रायःप्रान्तपयोदपांसुपटलीप्रस्तावितप्रस्थितिः । प्रायासीद्बहुयोजनोपरिमितस्थानं तदस्थायुषः कालेनाल्पतरेण काश्यपसुतः कार्श्यङ्करः शत्रुषु ।।' इत्यादि । पाञ्चाली यथा- 'श्रीमन्तः श्रीपतिं देवं देवाः सेन्द्रा दिदृक्षवः' इत्यादि । अत्र काव्ये स्वप्रतिज्ञानुसारात् प्रायेण पाञ्चालीरीतिरनुसन्धेया ।। ६ ।।

अपथेन यातुस्तव दस्युकृतदोषः कस्मान्न भवेत्? । न भवेदेव सहायसम्पत्तेरित्याह–

**तस्यास्तु दुर्भाषणदस्युदोषविध्वंसनो भक्तिरसः सखा मे ।**
**सञ्जन्तुकामस्य पदारविन्दे पापापहे पूर्णसुखस्य विष्णोः**
**।। ७ ।।**

**तस्येति** ।। पूर्णं निरवधिकं सुखं यस्य स तथा तस्य पूर्णसुखस्य । विष्णोः पापापहे पापमपहन्तीति पापापहं 'डप्रकरणे अन्यत्रापि दृश्यते' इति हन्तेर्डः । तस्मिन्पदारविन्दे पदमरविन्दमिवेत्युपमितसमासः । सङ्गन्तु कामः इच्छा यस्य स तथा 'तुङ्काममनसोरपि' इति मकारलोपः । तस्य अपथेन यातो मे मम । निन्दितं भाषणं दुर्भाषणं शब्दादिगतं तदेव दस्युश्चोरः । 'दस्युतस्करमोषकाः' इत्यमरः । तस्य दोषास्तत्कृता दोषाः अपुष्टार्थत्वादयः तेषां विध्वंसनः । विपूर्वकाद् ध्वंसयतेः नन्द्यादित्वात्कर्तरि ल्युः । भक्तिरसो मधुररूपभक्तिरसः । सखा मित्रं सहायो वा अस्तु । अत्र दुर्भाषणविध्वंसनोक्त्या अयशःपरिहारेण कीर्तिः दोषविध्वंसनोक्त्या सकलापशब्दासंस्पर्शितव्यवहारज्ञानम् । अत एव कान्तासम्मिततया रम्य उपदेशश्च । पापापह इत्यनेन शिवेतरक्षतिः सर्वानिष्टपरिहारः । सङ्गन्तुकामस्येत्यनेन भगवत्पदारविन्दप्राप्तिलक्षणेष्टावाप्तिरूपार्थप्राप्तिः । पूर्णसुखस्य पादसङ्गत्यभिधानेन परनिर्वृतिश्चाभिसंहितेति 'काव्यं यशसेऽर्थकते व्यवहारविदे' इत्यादिकविसमयसिद्धप्रयोजनषट्कमपि सिद्ध्यतीति वस्तु ध्वनितम् । अत्र दुर्भाषणस्य दस्युत्वेन भक्तिरसस्य सखित्वेन चारोपाद्रूपकालङ्कारः । 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकम्' इति तल्लक्षणात् ।। ७ ।।

एवं सप्तश्लोक्या स्वचिकीर्षितस्य काव्यस्य अनितरसाधारणमहिमानम् अभिधाय इदानीं विवक्षितं वस्तु प्रस्तुवन् आदौ पञ्चभिः श्लोकैः कुलकेन तद्वर्णयति–

**श्रीमन्तः श्रीपतिं देवं देवाः सेन्द्रा दिदृक्षवः ।**
**क्षीरोदधिमुपाजग्मुः पुरोधाय प्रजापतिम् ।। ८ ।।**

**श्रीमन्त इति** ।। श्रीः शोभा सम्पत्तिर्वा । 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिति भण्यते' इति यादवः । सैषामस्तीति नित्ययोगे मतुप् । शोभावन्तः सम्पत्तिमन्तो वा । सेन्द्रा इन्द्रेण सह वर्तन्त इति सेन्द्राः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिसमासः । 'वोपसर्जनस्य' इति सहस्य सभावः । देवाः श्रीपतिं देवं क्रीडादिगुणं हरिं दिदृक्षवो द्रष्टुमिच्छवस्सन्तः प्रजापतिं ब्रह्माणं पुरोधाय पुरस्कृत्य । क्षीरोदधिं क्षीरसमुद्रम् । उपाजग्मुः । उपाङ्-पूर्वाद् गमेर्लिट् । उपगतवन्तः । अत्र काव्यादौ क्षीरशब्दो मगणश्च कविना निबद्धः । तेन 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते आयुष्मत्पुरुषवीरपुरुषकाणि भवन्ति' इति महाभाष्योक्तं प्रयोजनमनेन भवतीति सचितम् । काव्यस्य चासावादिः लक्ष्मीलावण्येत्यादेः काव्य-गमनिकारूपत्वान्न काव्यत्वम् । अत्र हेतुदीपकमलङ्कारः । 'हेतुदीपक-मेकस्मिन्क्रमिकानेकगुम्फनम् । गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति' इति लक्षणोदाहरणे । अस्ति चात्र दिदृक्षव इति पुरोधायेति उपाजग्मुरिति क्रमिकक्रियागुम्फनम् । वृत्त्यनुप्रासः शब्दालङ्कारः ।। ८ ।।

श्रीपतिं विशिनष्टि–

**यत्तत्वं योगिभिः सूक्ष्मं प्रत्यक्षमनुभूयते ।**
**विशदे हृदयाम्भोजे मुखवन्मणिदर्पणे ।। ९ ।।**

**यत्तत्वमिति** ।। योगिभिः समाधिमद्भिः पुरुषैः । मणेर्दर्पणो मणिदर्पणः मणिमयादर्शः तस्मिन् । मुखवत् मुखेन तुल्यं यथा तथा । विशदे निर्मले । हृदयमम्भोजं पद्ममिव हृदयाम्भोजं तस्मिन् । हृदयस्य अम्भोजं हृदयाम्भोजं हृत्पद्मं तस्मिन्निति वा । सूक्ष्ममतीन्द्रियम् । यत्तत्त्वं यस्य तत्वमनारोपितं स्वरूपम् । यदिति भिन्नं वा पदम् । प्रतिगतमक्षं प्रत्यक्षं सत् ।

'कुगतिप्रादयः' इति समासः । अनुभूयते ज्ञायते । श्रीपतिमिति पूर्वेण सम्बन्धः । अत्र मणिदर्पणहृदयकमलयोः मुखतत्वयोश्च बिम्बप्रतिबिम्बभावेन सादृश्यवर्णनादुपमालङ्कारः ।। ९ ।।

**यः साक्षात्कुरुते नित्यं जन्तूनां वृत्तिमान्तरीम् ।**
**बाह्यां चाब्रह्मगुल्मान्तं स्वातन्त्र्यादिगुणात्मकः ।। १० ।।**

**य इति** ।। स्वातन्त्र्यादिगुणात्मकः स्वसत्ताप्रवृत्तिप्रतीतिषु परानपेक्षत्वं स्वातन्त्र्यं तदादिर्येषां गुणानां सर्वज्ञत्वसर्वशक्तित्वसर्वैश्वर्यादिरूपाणां ते स्वातत्र्यादयः । ते गुणाः आत्मा देहो यस्य स स्वातन्त्र्यादिगुणात्मकः । 'आत्मा देहे धृतौ बुद्धौ स्वभावे परमात्मनि' इत्यमरः । 'शेषाद्विभाषा' इति कप्रत्ययः । यः श्रीपतिः । आब्रह्मगुल्मान्तं ब्रह्मा चतुर्मुखः गुल्मः स्तम्बः । 'गुल्मारुक्स्तम्बसेनाश्च' इत्यमरः । अन्तः चरमो येषां ते गुल्मान्ताः । 'अन्तो जघन्यचरमः' इत्यमरः । ब्रह्मा च गुल्मान्ताश्च प्रपञ्चाः तानभिव्याप्य । 'आङ्मर्यादाभिविध्योः' इति अभिविध्यर्थकस्याङः गुल्मान्तपदेन समासोऽव्ययीभावः । जन्तूनां प्राणिनां 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः' इत्यमरः । आन्तरीम् अन्तरे अन्तरात्मनि मनसि भवाम् । बाह्यां च बहिर्भवाम् । 'बहिषष्टिलोपे यञ् च' वृत्तिं व्यापारम् । नित्यं साक्षात्कुरुते । 'साक्षात्प्रभृतीनि च' इति गतिसंज्ञायां 'ते प्रागधातोः' इति पूर्वप्रयोगः । प्रत्यक्षमनुभवति । तं श्रीपतिमित्यन्वयः ।। १० ।।

**यन्माया जगतः सृष्टिस्थितिसंहारकारिणी ।**
**रजः सत्वं तम इति त्रिभिरेतैरलङ्कृता ।। ११ ।।**

**यदिति** ।। रजः रजोगुणः । सत्वं सत्वगुणः । तमः तमोगुण इति एवं शब्दवाच्यैरेतैः । 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिश्रुतौ 'सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' इति स्मृतौ च प्रसिद्धैर्गुणैरिति शेषः । अलङ्कृता । यन्माया यस्य श्रीपतेर्माया 'जीवनी मोहिनी सूक्ष्मा लक्ष्मीः पुष्टिरनञ्जना । आचारा वैष्णवी माया नवैता विष्णुशक्तयः' इति शब्द-रत्नाकरोक्ता शक्तिः । स्वेच्छाधीना प्रकृतिरिति यावत् । जगतः सृष्टिः सर्जनं च स्थितिरवस्थानं रक्षणं च संहारो विलापनं च तान् कर्तुं शीलमस्या अस्तीति ताच्छील्ये णिनिः । सृष्टिस्थितिसंहारकारिणी। तमित्यन्वयः । रज आदीनां कारणानां सृष्ट्यादिक्रियाणां च क्रमेणान्वयाभि-सन्धानात् यथासङ्ख्यमलङ्कारः । तथा चालङ्कारमञ्जर्यां 'यथासङ्ख्यं क्रमजुषां क्रमेणैवान्वयो यदि । दयते स्मरतीष्टे श्रीजयीन्द्रोऽर्थीशशास्त्रिणाम्' इति । ननु रजस्सत्वतमोभिरिति वक्तव्यं त्रिभिरित्यनेन समानाधिकरणत्वात् सृष्ट्यादौ करणत्वाच्च करणे च तृतीया 'कर्तृकरणयोस्तृतीया' इति सूत्रेणानुशिष्टा । अतः कथं प्रथमेति चेत् उच्यते निपातेन इतिशब्दे-नाभिहितत्वान्नात्र तृतीया । तिङाद्युपसङ्ख्यानस्योपलक्षणत्वात् । यदाह वामनः 'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः । परिगणनस्य प्रायिकत्वात्' इति । अत्रापि कर्मग्रहणमुपलक्षणमिति प्रातिपदिकार्थलिङ्ग-परिमाणवचनमात्रे प्रथमेति प्रथमा युक्ता ।। ११ ।।

**नीलोत्पलदलश्याममिन्दिरा यमनिन्दिता ।**
**सेवते सुन्दरी वन्द्या क्षणद्युतिरिवाम्बुदम् ।। १२ ।।**

**नीलोत्पलेति** ।। अनिन्दिता अदुष्टा । वन्द्या ब्रह्मादिभिरप्यभिवन्दनीया स्तोतव्या च । 'यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्गविमृग्यमाणया'

इति हि भागवतम् । सुन्दरी सौन्दर्यशालिनी । गौरादित्वात् ङीष् । इन्दिरा लक्ष्मीः । क्षणद्युतिः विद्युत् । 'विद्युत्सौदामिनीचम्पाचपलाक्षणरोचिषः' इति रत्नाकरः । अम्बुदं मेघमिव । नीलं च तदुत्पलं च नीलोत्पलम् । 'विशेषणं विशेष्येण बहुलम्' इति समासः । तस्य दलमिव श्यामः । 'उपमानानि सामान्यवचनैः' इति समासः । तं नीलोत्पलदलश्यामम् । यं श्रीपतिं सेवते तं दिदृक्षव इति पूर्वेणान्वयः । उपमालङ्कारः । पुराणच्छायानुकरणात् माधुर्यात्सौकुमार्याच्च पाञ्चाली रीतिः । लक्षणं तूक्तम् । श्रीमन्त इत्यादिपञ्चश्लोकी कुलकं नाम काव्यविशेषः । तथा च चिन्तामणौ वीरनारायणः– 'मुक्तकं सान्दानितकं कलापकविशेषकम् । ततः कुलकसङ्घातकोशपद्यकदम्बकम्' इति काव्यं नवधा विभज्य प्रत्येकं लक्षणमुक्तवान् ।। १२ ।।

द्विजराजोद्भवमित्याद्या रतिप्रत्यूहेत्यन्ता षोडशश्लोकी कुलकं नाम काव्यम् । तदाह स एव । 'छन्दोभिर्यत्र पञ्चाद्यैः काव्यार्थस्तु समाप्यते । चतुर्दशान्तैः कुलकं तथैतान्यपि पूर्ववत्' इति । चतुर्दशान्तैरिति वचनं प्रायिकमिति व्याख्यातत्वादियं षोडशश्लोक्यपि कुलकमेव–

**द्विजराजोद्भवं वेगाद्विजरा ददृशुस्तदा ।**
**महेन्द्रप्रमुखाः सिन्धुमहीन्द्रप्रतिशोभितम् ।। १३ ।।**

**द्विजराजेति** ।। महेन्द्रो देवेन्द्रः प्रमुखः प्रधानं येषां ते तथोक्ताः । विजरा निर्जरा देवाः । यदोपजग्मुः तदा द्विजराजोद्भवं उद्भवत्यस्मा-दित्युद्भवः । 'ऋदोरप्' इत्यप्प्रत्ययः । द्विजराजस्य चन्द्रस्य उद्भवो द्विजराजोद्भवः तम् । 'द्विजराजः शशधरः' इत्यमरः । अहीन्द्रेण शेषेण ।

प्रतिशोभितं प्रकाशितम् । सिन्धुं प्रकरणात्क्षीरसागरम् । वेगात् क्षिप्रम् । ददृशुः 'दृशिर् प्रेक्षणे' लिट् । दृष्टवन्तः । द्विजराद्विजरा ददृशुरिति यमकस्य महेन्द्रप्रमुखा महीन्द्रप्रतीति छेकानुप्रासस्य च संसृष्टिः । तत्र यमकं नाम बहुवर्णानां साच्कानां द्विस्समीरणमिति । नियताच्काना-मित्यर्थः । छेकानुप्रासो नाम द्वयोस्त्रयाणां वावृत्तौ छेकानुप्रासः । अत्र हलामेव नियमः इति च लक्षितौ । तथा चोदाहरणम् । 'मनोभवाद्धीनमना न मनागपि यद्भुवि । धत्ते क्षेमङ्करे करे' इति । 'गलोद्गलदसृग्भारेण भूरेणवः' इति च ।। १३ ।।

**सदाभ्यस्तमहानादमन्तरा धृतमाधवम् ।**
**वृद्धिह्रासजितायासं स्फुरन्तमिव योगिनम् ।। १४ ।।**

**सदेति** ।। सदा सर्वस्मिन्काले । अभ्यस्त आवृत्तः । सिन्धुपक्षे परिचितः महान्नादो घोषः । योगिपक्षे मन्त्रशास्त्रसिद्धहृदयसमुदितशब्दविशेषः येन तं तथा । अन्तरा धृतमाधवं मध्ये धृतो माधवो लक्ष्मीपतिर्येन । योगिपक्षे अन्तः हृदि आधृतः विधृतः माधवो येन तम् । वृद्धिह्रासयोः उपचयापचययोः आप्यायनानाप्यायनयोश्च जितः आयासस्तत्कृतविकारः श्रमश्च येन तम् । स्फुरन्तं दीप्यमानम् । योगिनमिव समाधिमन्तमिव विद्यमानम् । सिन्धुं ददृशुरिति विशेष्यक्रियाभ्यामन्वयः । उपमालङ्कारः ।। १४ ।।

**वेलालीलावतीलोलं विविधोत्कलिकाशतैः ।**
**अश्रान्तजृम्भणोद्युक्तं भुजङ्गमिव चाकुलम् ।। १५ ।।**

**वेलेति** ।। वेला समुद्रतटः । 'समुद्रतीरे मर्यादा वेला वृद्धिश्च वारिणः'

इत्यमरः । सैव लीलावती विलासिनी । तस्यां लोलं चलम् । 'लोलश्चलसतृष्णयोः' इत्यमरः । भुजङ्गपक्षे वेला अवसरः । 'तरङ्गेऽवसरे काले व्यवस्थायामपि स्त्रियाम् । वेला' इति केशवः । तस्याः लीलावती अवसरं प्रतीक्षमाणा विलासिनीत्यर्थः । तस्यां लोलं सतृष्णम् । विविधा नानाप्रकाराः उत्कलिकाः कल्लोलाः । पक्षे उत्कण्ठाः । 'स्यात्कल्लोलेप्युत्कलिका' इत्यमरशेषः । 'उत्कण्ठोत्कलिके समे' इत्यमरश्च । तासां शतैः सुबहुभिः आकुलं पूर्णम् । 'आकुलं भरितं पूर्णम्' इति हलायुधः । अश्रान्तजृम्भणे अश्रान्ते अनायस्ते जृम्भणे वृद्धौ । अन्यत्र विचेष्टिते । 'जृम्भितं स्याद्विचेष्टितम्' इति केशवः । रोमाञ्चादिरूपगात्रविनामे उद्युक्तम् उत्सुकम् । 'सप्तमी' इति योगविभागात्समासः । भुजङ्गं विटमिव । 'वेश्यापतिर्भुजङ्गः स्यात् षिद्गः पल्लविको विटः' इत्यमरः । पूर्वोक्तयोगिसमुच्चयार्थश्चशब्दः । श्लेषानुप्राणितोपमालङ्कारः ।। १५ ।।

**विवृत्तशफरीचारुकटाक्षापातगौरवात् ।**
**स्खलन्तं जडवत्स्त्रीभिर्निम्नगाभिस्समागमे ।। १६ ।।**

**विवृत्तेति** ।। निम्नगाभिः नदीभिः । 'अथ नदी सरित् । स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगापगा' इत्यमरः । ताभिरेव स्त्रीभिस्समागमे सङ्गमे विवृत्ता उल्ललिताः शफर्यो मत्स्याः मीनजातिविशेषाः । 'नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः' इत्यमरः । ता एव चारवो रुचिराः कटाक्षाः अपाङ्गालोकाः । जडपक्षे विवृत्तशफर्य इव शफरीविवृत्तानीवेति व्याख्येयम् । तेषामापातः प्रसारः तस्य गौरवादतिशयात् । जडवत्प्राकृतपुरुषेण तुल्यं यथा तथा । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । स्खलन्तं सञ्चलन्तं सिन्धुं ददृशुरित्यन्वयः । अत्र रूपकोपमयोरङ्गाङ्गिभावेन सङ्करः । 'ग्राह्ये भेदे तु संसृष्टिरग्राह्ये सङ्करो मतः' इति ह्यालङ्कारिकाः ।। १६ ।।

**पयसां निधिरित्येतदब्धिसामान्यगोचरम् ।**
**अप्यनायस्य तन्वानमर्थवत्पदमात्मनि ।। १७ ।।**

**पयसां निधिरिति** ।। अब्धिसामान्यगोचरम् अधीनां जलधीनां सामान्यं जातिः 'जातिर्जातं च सामान्ये' इत्यमरः । तदेव गोचरो विषयो यस्य तत्तथोक्तम् । पयसां निधिरित्येतत्पदं नामधेयम् । अनायस्यापि यत्नं विनापि । ''यसु प्रयत्न'' इति धातोर्ल्यप् । आत्मनि स्वस्मिन् । अर्थवत् सार्थमन्वर्थकम् । तन्वानं कुर्वन्तम् । सिन्धुं ददृशरित्यन्वयः । पयोनिधिरित्यभिधानं सर्वसमुद्रवाचकमपि क्षीराणां निधितया स्वस्मिन्नसाधारणं कुर्वाणमिति भावः । अत्र निरुक्तिरलङ्कारः । 'निरुक्तिर्योगतो नाम्नामपरार्थप्रकल्पनम्' इति तल्लक्षयित्वा 'ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्' इति तदुदाहरणात् ।। १७ ।।

**अन्तस्थेन्द्रमणिश्रेणिश्रिया श्यामलितेऽम्बरे ।**
**प्रावृडाशङ्कया नृत्यद्वेलावनकलापिनम् ।। १८ ।।**

**अन्तस्थेति** ।। समुद्रस्य रत्नाकरतया अन्तस्तिष्ठन्तीत्यन्तस्थाः । 'सुपि स्थः' इति तिष्ठतेः कः । ते च ते इन्द्रमणयः इन्द्रनीलाश्च तेषां श्रेणिः पतिः तस्याः श्रीः शोभा तया अम्बरे श्यामलिते । श्यामलयतेः कर्मणि क्तः । श्यामलीकृते नैल्यं प्रापिते सति । प्रावृडाशङ्कया वर्षर्तोः भ्रमेण । नृत्यन्तः नर्तनं कुर्वन्तः वेलायास्तीरस्य यद्वनं तस्य कलापिनो मयूराः 'कलापी तु प्लक्षबर्हिणयोरपि' इति विश्वः । यस्य तं नृत्यद्वेलावनकलापिनं सिन्धुं ददृशुः । सामुद्रोदरगतेन्द्रनीलमणिपङ्क्तिकान्त्या अम्बरस्य नीलिमायोगेऽपि तद्योगकल्पनात्सम्बन्धातिशयोक्तिरलङ्कारः । 'सम्बन्धातिशयोक्तिः

स्यादयोगे योगकल्पना' इति तल्लक्षणात् । प्रावृडाशङ्कयेति भ्रान्तिमानलङ्कारश्च । स चोक्तातिशयोक्त्याङ्गभूतयाङ्गिभावेन सङ्कीर्यत इत्युभयोः सङ्करः । शकारलकारादेरसकृदावर्तनाद्वृत्त्यनुप्रासः शब्दालङ्कारश्च ॥१८॥

**अम्बुच्छायाभिरच्छायाहंसानुकरणास्पदम् ।**
**पततां सन्निकृष्टानां सन्तः संश्रितवत्सलाः ॥ १९ ॥**

**अम्बुच्छायाभिरिति** ॥ अम्बुनः पयसः छायाभिः धवलिमालक्षणकान्तिभिः । 'छाया सूर्यप्रभा कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । 'विभाषा सेनासुराच्छायाशालानिशानाम्' इति विकल्पितत्वात्स्त्रीत्वम् । सन्निकृष्टानां सन्निधिवर्तिनाम् । पततां पक्षिणाम् । अच्छायाहंसानुकरणास्पदं छायाहंसाः कृत्रिमहंसा न भवन्तीत्यच्छायाहंसाः तेषामनुकरणं विडम्बनं तस्यास्पदं स्थानम् । 'आस्पदं त्ववलम्बेऽपि स्थाने कृत्येऽपि कथ्यते' इति कविदर्पणः । 'आस्पदं प्रतिष्ठायाम्' इति निपातनात्साधुः । स्वतीरसञ्चरत्पक्षिकर्तृकाकृत्रिमहंससादृश्यसम्पत्तिसम्पादकमिति भावः । तं सिन्धं ददृशुः । तथाहि । सन्तः सज्जनाः । संश्रितेषु वत्सलाः प्रीतिमन्तः । 'वत्सांसाभ्यां कामबले' इति मत्वर्थीयो लच्प्रत्ययः । समुद्रवेलावनसञ्चारिकाकपिकादिपतत्रिणां कार्यादिस्वगुणत्यागेन अन्यदीयधवलिमगुणभणनात्तद्गुणालङ्कारः । 'तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः । पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥' इति सोदाहरणं तल्लक्षणाभिधानात् । अर्थान्तरन्यासालङ्कारश्च तेन संसृज्यते । 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः । हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥' इति तल्लक्षणोदाहरणे ॥ १९ ॥

**कमलासनतां प्राप्तं सरस्वत्याः परं पदम् ।**
**हिरण्यगर्भमतुलं विधातारमिवापरम् ॥ २० ॥**

**कमलेति** ॥ आस्तेऽस्मिन्नित्यधिकरणे ल्युट् आसनं कमलायाः श्रीदेव्याः आसनं कमलासनं तस्य भावस्तत्ता तां कमलासनताम् । चतुर्मुखपक्षे कमलं पद्मं तदासनं यस्य तस्य भावस्तत्ता तामित्यर्थः । सरस्वत्याः सरस्वतीनामिकायाः नद्याः नदीमात्रस्य वा । 'सरस्वती नदीभेदे नदीमात्रे च कथ्यते' इति यादवः । कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती' इत्यमरश्च । जातावेकवचनम् । नदीनामित्यर्थः । परं पदमुत्तम-माश्रयम् । हिरण्यानि कपर्दाः । 'हिरण्यं मानभेदे च धने चापि कपर्दके' इति केशवः । अन्यत्र हिरण्यस्य गर्भो हिरण्यगर्भः तम् । 'तदण्डमभवद्धैमं सहस्रांशसमप्रभम् । यस्मिञ्जज्ञे स्वयं ब्रह्मा' इति वचनात् । अतुलं न विद्यते तुला उपमा यस्य तम् । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । अपरम् अन्यं विधातारं चतुर्मुखमिव । सिन्धुं ददृशः । श्लेषानुप्राणितोप-मालङ्कारः ॥ २० ॥

**जुह्वतं गव्यमौर्वाग्नावनवानस्वनं क्वचित् ।**
**धृतकूर्मपुरोडाशमध्वर्युमिव संस्तरे ॥ २१ ॥**

**जुह्वतमिति** ॥ गव्यं गवामुदकानां विकारम् । 'गोपयसोर्यत्' इति यत्प्रत्ययः । गोविकारो गव्यं आज्यपयआदि । और्वाग्नौ वाडवानले । 'और्वस्तु वाडवो वडवानलः' इत्यमरः । जुह्वतं प्रक्षिपन्तम् । 'नाभ्यस्ता-च्छतुः' इति जुह्वच्छब्दान्न नुम् । क्वचित्प्रदेशविशेषे । अनवानस्वनं वानः शुष्कः न वानः अवानः स न भवतीत्यनवानः । 'वानं शुष्कफले शुष्के'

इति केशवः । अनवानः स्वनो ध्वनिर्यस्य स तम् । यागविशेषे उपांशुस्वरयुक्तं मन्त्रम् उच्चारयन्तमित्यर्थः । धृतकूर्मपुरोडाशं कूर्म एव पुरोडाशः कूर्मपुरोडाशः । मयूरव्यंसकादयश्च' इति समासः । धृतः कूर्मपुरोडाशो येन तं तथोक्तम् । अध्वर्युपक्षे कूर्मसदृशः पुरोडाशः कूर्मपुरोडाशः । शाकपार्थिवादिवन्मध्यमपदलोपी समासः । संस्तरे यज्ञे । 'संस्तरौ प्रस्तराध्वरौ' इत्यमरः । अध्वर्युमिव अध्वरं यातीति अध्वर्युः ऋत्विग्विशेषः । 'मृगय्वादयश्च' इत्युणादावध्वर्युशब्दो निपातितः । अध्वरं याति यौति वा । मितद्वादित्वात् डुरिति अमरव्याख्याने अध्वर्यु-शब्दव्युत्पत्तिर्दर्शिता । तमिव सिन्धुं ददृशुः । अत्र रूपकानुप्राणितोप-मालङ्कारः । वनवानेत्यव्यवहिततया द्विरभिधानाच्छेकानुप्रासश्च । नवर्णस्यासकृदावृत्तेर्वृत्त्यनुप्रासो वा ।। २१ ।।

**दत्तश्रियं श्रियः पत्ये हराय विषदायिनम् ।**
**स्वरूपप्रौढिहरणप्रापितादिव मत्सरात् ।। २२ ।।**

**दत्तश्रियमिति** ।। श्रियः पत्ये लक्ष्मीपतये विष्णवे । दत्तश्रियं दत्ता श्रीर्येन तम् । स्वरूपप्रौढिहरणप्रापितात् स्वस्य समुद्रस्य रूपं धवलिमा तस्य प्रौढिः प्रवृद्धिः । अतिशय इति यावत् । तस्य हरणेनापहरणेन प्रापितात् समापातितात् । मत्सरात् अन्यशुभद्वेषात् । 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः । हराय उमापतये । विषदायिनं विषं ददातीति 'साधुकारिणि च' इति णिनिः । आतो युक् चिण्कृतोः' इति युगागमः । विषस्य दातारं सिन्धुं ददृशुः । कन्याप्रदानपात्रताभिप्रायगर्भं श्रियःपत्ये इति विशेष्य-पदमिति परिकराङ्कुरालङ्कारः । 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः' इति सोदाहरणं तल्लक्षणाभिधानात् ।

मत्सरादिवेत्यहेतोर्हेतुत्वेनोत्प्रेक्षणात् । असिद्धविषयहेतूत्प्रेक्षणालङ्कारश्चेति संसृष्टिः । 'सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना' इति हि तल्लक्षणाभिधानात् ।। २२ ।।

**मौक्तिकैरुज्जिहानानां शुक्तीनां मुखनिर्गतैः ।**
**मणिभिश्चारणस्त्रीणां विदधानं प्रसाधनम् ।। २३ ।।**

**मौक्तिकैरिति** ।। उज्जिहानानां उद्गच्छन्तीनां शक्तीनां मुक्तास्फोटानाम् । 'मुक्तास्फोटः स्त्रियां शुक्तिः' इत्यमरः । मुखनिर्गतैः मुखादुद्गतः । देवदत्तस्य गुरुकुलमितिवन्नित्यसापेक्षत्वात्समासः । मौक्तिकैः मणिभिः मुक्तामणिभिः । चारणस्त्रीणां प्रसाधनमलङ्करणम् । 'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः । विदधानं कुर्वन्तम् । सिन्धुं ददृशुः । मुक्तामणिभिश्चारणस्त्रीणां प्रसाधनायोगेऽपि तद्योगकल्पनात् सम्बन्धातिशयोक्तिरलङ्कारः ।। २३ ।।

**उच्चलत्सलिलास्फालैर्विपानेषु ज्वलत्सु खे ।**
**स्फुटस्फटिकसङ्घट्टसम्भ्रमप्रतिपादकम् ।। २४ ।।**

**उच्चलदिति** ।। खे नभसि । ज्वलत्सु दीप्यमानेषु । विमानेषु वैमानिकानामिति योग्यतया सम्बध्यते । उच्चलत्सलिलास्फालैः उच्चलन्ति उद्गच्छन्ति च तानि सलिलानि च तेषामास्फालैः सञ्चलनैः । 'स्फुल सञ्चलने' इति धातोर्घञि 'स्फुरतिस्फुलत्योर्घञि' इति एच आत्वे स्फालैरिति रूपम् । स्फुटस्फटिकसङ्घट्टसम्भ्रमप्रतिपादकं स्फुटानां स्पष्टानाम् । 'स्पष्टे व्याप्ते च फुल्ले च स्फुटः' इति कविदर्पणः । स्फटिकानां सङ्घट्टः सङ्घर्षः सम्बन्धः तस्य सम्भ्रमः विभ्रमः भ्रान्तिः तस्य प्रतिपादकम् । कारकमिति यावत् । सिन्धुं ददृशुः । सम्भ्रमप्रतिपादकमिति शेषषष्ठ्या

समासः । तेन 'तृजकाभ्यां कर्तरि' इति न समासप्रतिषेधशङ्का । अत्र विमानेषु पयस्तरङ्गाघातासम्बन्धेऽपि तत्सम्बन्धकल्पनादतिशयोक्तिरलङ्कारः । सा च पश्यतां स्फाटिकखचितत्वभ्रमापादनस्याङ्गमित्यतिशयोक्तिभ्रान्तिमदलङ्कारयोरङ्गाङ्गिभावेन सङ्करः ।। २४ ।।

**हरिगाढपरिष्वङ्गादलसां विलसन्मुखीम् ।**
**लालयन्तं रमां हृद्यैरूर्मिभिश्चामरोपमैः ।। २५ ।।**

**हरिगाढेति** ।। हरेर्गाढः दृढः परिष्वङ्गः आलिङ्गनम् । 'गाढबाढदृढानि च । परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्' इति चामरः । तस्मात् हरिगाढपरिष्वङ्गात् । अलसां मन्दाम् । आलस्यशालिनीमित्यर्थः । विलसत्कान्तिमच्छोभमानं मुखं यस्याः सा तथा विलसन्मुखीम् । 'स्वाङ्गाच्चोपसर्जनात्' इति ङीष् । रमां लक्ष्मीम् । चामरोपमैः हृद्यैः हृदयप्रियैः । ऊर्मिभिः तरङ्गैः । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियाम्' इत्यमरः । लालयन्तं उपलालयन्तम् । सिन्धुं ददृशुः । अत्रालस्यशान्तिर्विलसन्मुखीपदसूचितहर्षप्रत्यङ्गमिति समाहितमलङ्कारः । 'भावशान्तिर्यत्र भावस्याङ्गं स समाहितालङ्कारः' इति चिन्तामाणौ तल्लक्षणाभिधानात् । अन्ये तु सत्यप्यालस्यलक्षणप्रतिबन्धके मुखविलासलक्षणकार्योत्पादनवर्णनात् विभावनाविशेषोऽलङ्कारः । 'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके' विभावनेत्यनुवर्तते । 'नरेन्द्रानेव ते राजन् दशत्यसिभुजङ्गमः' इति तल्लक्षणोदाहरणे इत्यप्याहुः ।। २५ ।।

**तीरकान्तारसन्तानपद्मिनीपद्मरेणुभिः ।**
**वाताकीर्णैः परिस्तीर्णं जम्बूनद्येव सङ्गतम् ।। २६ ।।**

**तीरेति** ।। वाताकीर्णैः पवनविक्षिप्तैः । तीरस्य कान्ताराणि वनानि । 'अरण्यमटवी सत्रं कान्तारं काननं वनम्' इति हलायुधः । तेषां सन्तानः सन्ततिः पतिः तस्याः पद्मिन्यो नलिन्यः तासां पद्मानि तेषां रेणुभिः परागैः । तीरकान्तारसन्तानाः वेलावनसमुद्भवदेवतरवश्च पद्मिनी पद्मानि च तेषामुभयेषां रेणभिरिति वा । परिस्तीर्णम् आच्छन्नम् । जम्बूनद्या 'जम्ब्वा वा लुप् च' इति लुपि' इति 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृतिलिङ्गत्वे । जम्ब्वः जम्बूफलानि तेषां नदी तद्रसनदी तया सङ्गतमिवेति । उक्तविषयस्तूत्प्रेक्षालङ्कारः । इवशब्दस्य सादृश्यवाचकत्वेऽपि अस्त्युत्प्रेक्षावाचित्वम् । यदाहुः 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' इति । सिन्धुं ददृशुः ।।२६।।

**उदये मुदितं राज्ञः कृशमस्तमयेऽनिशम् ।**
**पुत्रोन्नतिवशाः प्रायो महतामपि सम्पदः ।। २७ ।।**

**उदय इति** ।। राज्ञश्चन्द्रस्य । 'राजा मृगाङ्के क्षत्रिये नृपे' इत्यमरः । उदये प्रादुर्भावे । मुदितं हृष्टं प्रवृद्धम् अस्तमये 'अस्तमदर्शने' इत्यमरः । इण्गतावित्यत एरच् । अस्तगमने । अनिशम् अन्वहम् । कृशं क्षीणम् । सिन्धुं ददृशुः । तथाहि । महतामपि । प्रायो भूम्ना । 'प्रायो भूम्न्यद्भुते शनैः' इत्यमरः । सम्पदः समृद्धयः पुत्रोन्नतिवशाः । पुत्रस्य उन्नतिरभ्युदयः तस्य वशा अधीनाः । 'आयत्तेऽपि वश' इति केशवः । अर्थान्तर-न्यासोऽलङ्कारः । उदयास्तमयाभ्यां कारणाभ्यां सह कार्ययोर्वृद्धिह्रासयोः सारूप्यवर्णनात्समालङ्कारश्चेत्युभयोः संसृष्टिः । 'सारूप्यमपि कार्यस्य कारणेन समं विदुः । नीचप्रवणता लक्ष्मि जलजायास्तवोचिता' इति सोदाहरणं तल्लक्षणाभिधानात् ।। २७ ।।

**रतिप्रत्यूहमन्दाक्षकारिणीः फणिनो दृशः ।**
**पिदधानं स्ववीचीभिस्तनयाप्रीतये मुहुः ॥ २८ ॥**

**रतिप्रत्यूहेति** ॥ रतेः सुरतस्य प्रत्यूहो विघ्नः स च मन्दाक्षं लज्जा च ते कर्तुं शीलमासामिति ताच्छील्यविशिष्टे कर्तरि णिनिः । ताः । 'विघ्नोऽन्तरायः प्रत्यूहः । मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्युभयत्रामरः । रतिप्रत्यूह एव मन्दाक्षमिति विग्रह इत्यादि केचित् । फणा अस्य सन्तीति फणी शेषः तस्य दृशः नयनानि । तनयाप्रीतये तनयायाः स्वसुताया लक्ष्म्याः प्रीतये मुहुः पुनः पुनः स्ववीचीभिः 'कृदिकारादक्तिनः' इति ङीष् । स्वतरङ्गैः पिदधानम् । 'वष्टि भागुरिरल्लोपम्' इत्यपेरल्लोपः । आच्छादयन्तं ददृशुरित्यन्वयः । अत्र स्ववीचीनां शेषनेत्रपिधानासम्बन्धेऽपि तत्कथन-रूपातिशयोक्तिः पिधानस्य तनयाप्रीतिफलकत्वोत्प्रेक्षायां गम्यमानाया-मङ्गमिति अतिशयोक्त्युत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ २८ ॥

**विस्मयाद्विस्मृतस्वर्गविभ्रमेणान्तरात्मना ।**
**तमिमं जलधिश्रेष्ठं ददृशुस्त्रिदशा मुहुः ॥ २९ ॥**

**विस्मयादिति** ॥ त्रिदशाः देवाः । विस्मयात् आश्चर्यात् । विस्मयोऽ-द्भुतमाश्चर्यं चित्रम्' इत्यमरः । विस्मृतः स्वर्गस्य विभ्रमो विलासो येन स तथा तेन । 'विभ्रमो भ्रान्तिशोभयोः । विलासे संशये च' इति दर्पणः । अन्तरात्मना मनसा तमिमं पूर्वं सकृद्दृष्टमपि इमं महाविस्मयास्पदं जलधिश्रेष्ठं जलधीनां प्रशस्ततमं क्षीराब्धिम् । मुहुः पुनः पुनः ददृशुः । यद्यपि 'द्वितीयाटौस्स्वेनः' इति एनादेशानुशासनात् एनमिति वक्तव्यं तथापि किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेश इति

अन्वादेशशब्दार्थं विवक्षित्वा 'अनेन व्याकरणमधीतमेनं छन्दोऽध्यापय' इत्युदाहरणात् 'एतमातं ङितं विद्यात्' । 'नक्तं भीरुरयं त्वमेव तमिमं राधे गृहं प्रापय' इत्यादिप्रयोगाच्चातापीदंशब्दोऽनुवाद इत्यभ्युपगमात् तमिममिति प्रयोगः साधुः । अत्राश्चर्यविस्मृत्योर्मेलनोक्तेर्भावसन्धिरलङ्कारः । तथा च वीरनारायणः– 'भावोदयभावसन्धिभावशबलताः पृथगलङ्कारानाहुः' इत्यादि । कुलकादौ सकृद्वीक्षणं वर्णितम् । अत्र तु विस्मयेनासकृद्दर्शनं वर्णितमिति न पौनरुक्त्यम् । अत्र कविना कृतमर्णववर्णनं महाकाव्यस्याङ्गमिति । यदाह दण्डी– 'नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः । विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः । मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि । अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् । सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैस्सुसन्धिभिः । सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम् । काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति' इति ।। २९।।

**अवतीर्य विमानेभ्यो बिम्बेभ्य इव भास्वतः ।**
**विद्योतितद्युदेशेभ्यः प्रपातं ते प्रपेदिरे ।। ३० ।।**

**अवतीर्येति** ।। ते त्रिदशाः विद्योतितद्युदेशेभ्यः विद्योतिताः प्रकाशिताः द्युदेशाः दिवोऽन्तरिक्षस्य प्रदेशाः यैस्तानि तेभ्यः । भास्वतः सूर्यस्य 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः । बिम्बेभ्यो मण्डलेभ्य इव विमानेभ्यः अवतीर्य अवरुह्य । प्रपातं समुद्रतीरम् । 'प्रपातस्तु प्रपतने तथा सौप्तिकरोधसोः' इति केशवः । उत्प्लवनरूपं भूसंयोगं वा । प्रपेदिरे पद गताविति धातोर्लिट् । प्राप्तवन्तः । अत्रोपमानोपमेयसाधारणधर्मवाचकशब्दानां चतुर्णामुपादानात्पूर्णोपमालङ्कारः । तथाचालङ्कारमञ्जरी– 'पूर्णा वर्ण्योपमाधर्मेवादीनां प्रतिपादने' इति ।। ३० ।।

**समवेतास्ततस्सर्व उदग्रेषु महोर्मिषु ।**
**स्पष्टदृष्टप्रतिच्छाया द्विगुणां श्रियमूहिरे ॥ ३१ ॥**

**समवेता इति** ॥ तदा तीरप्रपतनसमये । समवेता मिलिताः । सर्वे ते त्रिदशाः । उदग्रेषु उत्तुङ्गेषु 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः । महोर्मिषु महत्सु तरङ्गेषु । स्पष्टा व्यक्ता दृष्टा प्रतिच्छाया प्रतिबिम्बो यैस्ते स्पष्टदृष्टप्रतिच्छायाः । 'प्रतिबिम्ब प्रतिच्छाया प्रतिमा प्रतियातना' इत्यमरः । द्विगुणां श्रियं शोभाम् । 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिति कथ्यते' इति वैजयन्ती । ऊहिरे । 'वह प्रापणे' लिट् । प्राप्तवन्तः । क्षीरोधितीरमिलिता देवाः समुद्रप्रतिबिम्बितस्वप्रतिमास आम्रेडितां शोभां लब्धवन्त इति भावः । अत्र प्राक्सिद्धदेवगतशोभायाः प्रतिबिम्बसन्निधानेनातिशयवर्णनात् अनुगुणालङ्कारः । 'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः । नीलोत्पलानि दधते कटाक्षरतिनीलताम् ॥' इति सोदाहरणं तल्लक्षणाभिधानात् ॥ ३१ ॥

**लक्ष्मीकुचद्वयावाप्तकुङ्कुमामोदपेशलः ।**
**किरन्बिन्दूनपां वायुर्विबुधेभ्यो मुदं ददौ ॥ ३२ ॥**

**लक्ष्मीति** ॥ लक्ष्म्याः कुचौ लक्ष्मीकचौ तयोर्द्वयं तेन अवाप्त कुङ्कुमस्यामोदः गन्धः तेन पेशलश्चारुः । 'आमोदो हर्षगन्धयोः । चारौ दक्षे च पेशलः' इति चामरः । लक्ष्मीकुचद्वयावाप्तकुङ्कुमामोदपेशलः । अपां बिन्दून् कणान् । किरन् विक्षिपन् । वायुः विबुधेभ्यो देवेभ्यः । मुदं हर्षं ददौ । ददातेर्लिट् दत्तवान् । शैत्यमान्द्यसौरभ्याणां वायुगुणानामत्र वर्णनात्स्वभावोक्तिरलङ्कारः । 'स्वभावोक्तिरसौ चारु जात्यादिस्थस्य वर्णनम्' इति तल्लक्षणात् ॥ ३२ ॥

**अस्यैव वारिधेः कामं मेनिरे योग्यताममी ।**
**अनन्यादृशभावस्य वासार्थं पीतवाससः ॥ ३३ ॥**

**अस्यैवेति** ॥ अमी ते देवाः । अन्य इव पश्यतीत्यत्र समानान्ययोश्चेति वक्तव्यत्वात् कर्तुः 'आ सर्वनाम्नः' इत्यात्वम् अन्यादृशः न अन्यादृशः अनन्यादृशः अनितरसाधारणः भावः स्वभावो यस्य स तथा तस्य पीतवाससः पीतं वासो वस्त्रं यस्य तस्य पीताम्बरस्य हरः । वासार्थं निवासाय । अस्यैव उक्तगुणशालिनो वारिधेः । प्रस्तावात् क्षीरसागरस्य । काम स्वाच्छन्द्येन । योग्यताम् उचितता मेनिरे । 'मन ज्ञाने' लिट् । ज्ञानवन्तः । अत्र समालङ्कारः । 'समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः' इति तल्लक्षणात् ॥ ३३ ॥

**एकाग्रमनसः स्तोतुं भगवन्तं दिदृक्षवः ।**
**उपचक्रमिरे देवाश्चक्रिणं पृथुविक्रमम् ॥ ३४ ॥**

**एकाग्रेति** ॥ एकाग्रमनन्यवृत्ति । 'एकतानोऽनन्यवृत्तिरे काकायनावपि' इत्यमरः । मनश्चित्तं येषां ते एकाग्रमनसः । देवाः पृथुर्महान् विक्रमः शक्तिः सम्पत्तिर्यस्य तं पृथुविक्रमम् । 'कान्तौ च विक्रमः । तथैव शक्तिसम्पत्त्योः' इति केशवः । भगवन्तं ऐश्वर्यादिषङ्गुणसम्पन्नम् । चक्रिणम् चक्रं सुदर्शनं अस्यास्तीति चक्री तं चक्रपाणिं हरिं दिदृक्षवो द्रष्टमिच्छवस्सन्तः स्तोतुमपचक्रमिरे । 'क्रमु पादविक्षेपे इत्यतो लिट् । 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् । अनेकार्थत्वन्यायेन सम्प्रत्यारब्धवन्तः । अत्र देवानां हरिविषयरतिभावं प्रति दिदृक्षुपदोक्तमौत्सुक्यमङ्गमिति प्रेयोऽलङ्कारः । 'यत्र रसभावं प्रति रतिभावोऽङ्गं तत्र प्रेय' इति लक्षणात् ॥ ३४ ॥

**अथ ब्रह्ममुखाद्वाचां निरियाय परम्परा ।**
**पौर्णमास्यामिवांशूनामोषधीपतिमण्डलात् ।। ३५ ।।**

**अथेति** ।। अथ सर्वदेवानां स्तवनोद्योगानन्तरम् । ओषधीपतेश्चन्द्रस्य मण्डलात् बिम्बात् । यद्यपि 'कर्मण्यधिकरणे च' इति किप्रत्ययान्तः शब्दः पुल्लिङ्गः । तथा च लिङ्गानुशासनम् । 'क्यन्तो घुः' इति । ओषधिशब्दश्च किप्रत्ययान्तः । तथापि 'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति विधाय 'ओषध्यः फलपाकान्ताः' इति विशेषाभिधानात् 'कृदिकारादक्तिनः' इति ङीषि स्त्रीलिङ्गो युक्तः । पौर्णमास्याम् अंशूनां किरणानामिव ब्रह्ममुखात् चतुर्मुखमुखात् । वाचा परम्परा सन्ततिः । 'परम्परा तु सन्ताने वस्तूनां स्त्री द्वयोः पुनः । पुत्रपौत्रादिमालायाम्' इति केशवः । परम्पराशब्दोऽव्युत्पन्नसमुदाय इति शाब्दिकाः । निरियाय निरुपसृष्टादिणो लिट् निर्गतवती । अत्रोपमालङ्कारः । विस्मयादित्याद्या अथ ब्रह्ममुखादित्यन्ता षट्श्लोकी प्रत्येकं मुक्तकं नाम काव्यं प्रबन्धगतम् । तथा च वीरनारायणः– 'छन्दसैकेन वाक्यार्थसमाप्तिर्यत्र मुक्तकम् । तच्च । द्विविधं केवलं प्रबन्धगतं चेति' इति ।। ३५ ।।

तामेव स्तुतिवाचं दर्शयति–

**वन्दामहे वयं देवमिन्दीवरसमप्रभम् ।**
**सुरासुरेन्द्रसन्दोहवन्दनीयपदाम्बुजम् ।। ३६ ।।**

**वन्दामह इति** ।। इन्दीवरेण नीलोत्पलेन समा सदृशी प्रभा कान्तिर्यस्य सः तथा तम् । 'गोत्रियोरुपसर्जनस्य' इति ह्रस्वः । सुरासुरेन्द्राः शचीपतिप्रह्लादादयः तेषां सन्दोहः समूहः । 'समूहनिवहव्यूहसन्दोह-

निकरव्रजाः' इत्यमरः । तेन वन्दनीयं नमस्करणीयं स्तवनीयं च पदमम्बुजमिव पदाम्बुजं यस्य तं तथा ।। ३६ ।।

**देवदेवं जगद्बीजममेयं पुरुषोत्तमम् ।**
**आदिमध्यान्तरहितं परस्याः प्रकृतेः परम् ।। ३७ ।।**

**देवेति** ।। देवदेवं देवाधिराजम् । 'देवः सुरे राज्ञि तथा देवमाख्यातमिन्द्रियम्' इति विश्वः । नरदेव इत्यादौ देवशब्दमीश्वरार्थं प्रयुञ्जते च । जगतो बीजं कारणम् । अमेयं मातुमियत्तया परिच्छेत्तुमशक्यम् । पुरुषोत्तमं पुरुषेषु उत्तमम् । 'सप्तमी' इति योगविभागात्समासः । यद्वा क्षराक्षरपुरुषेभ्य उत्तमम् । 'पञ्चमी' इति योगविभागात्समासः । आदिमध्यान्तरहितमुत्पत्तिसहितमध्यावस्थाविनाशाभ्यां शून्यम् । परस्याः प्रकृतेः महालक्ष्म्याः परम् अत्यन्तविलक्षणम् । क्षराक्षरशब्दितजीवजातश्रीतत्वोत्तमस्य जडप्रकृतिविदूरत्वं वक्तुं वा परस्याः अक्षरादन्यस्याः प्रकृतेर्जडप्रकृतेः परं विदूरमित्युक्तम् । देवं क्रीडादिगुणविशिष्टम् । हरिं वन्दामहे । अभिवादयामः स्तुमश्च । 'वदि अभिवादनस्तुत्योः' लट् । अत्रेन्दीवरसमप्रभमित्यत्रोपमानस्येन्दीवरस्योपमेयस्य देवस्य प्रभायाः साधारणधर्मस्य तदुपस्थापकसमशब्दस्य चोपादानादार्थी पूर्णोपमा । 'सदृशसङ्काशादिशब्दानां प्रयोगे आर्थी' इत्यालङ्कारिकोक्तेः । वन्दामह इत्यादिद्विश्लोकी सन्दानितकं नाम काव्यं 'सन्दानितकमेकार्थपरत्वे छन्दसोर्द्वयोः' इति साहित्यचिन्तामणौ तल्लक्षणाभिधानात् ।। ३७ ।।

अथेदानीं कविः निहत्येत्याद्यैः षड्विंशत्या श्लोकैः ब्रह्मकृतस्तुतिमेव सङ्घातककाव्यभङ्ग्या प्रपञ्चयति । उक्तकुलके एकक्रियान्वयेनैव

वाक्यार्थसमाप्तिः । सङ्घाते तु प्रतिपाद्यबहुक्रियानुबन्धेऽपि मिथोऽन्वयात् एकप्रघट्टकतात्पर्यकत्वमिति भेद इति तद्विदः । किञ्च कुलके पञ्चाद्यै-श्चतुर्दशान्तैरिति नियमः । सङ्घाते तु ततोऽधिकपद्यकत्वं मेघसन्देशा-युदाहरणम् । लक्षणं तु 'एकप्रघट्टकश्लोकसमुदायो मिथोऽन्वितः । प्रथितः कविनैकेन सङ्घात इति कथ्यते' इति चिन्तामणावुक्तम्–

**निहत्य कैटभं दैत्यं समधुं योगनिद्रया ।**
**दन्दशूकेन्द्रपर्यङ्कमारूढः स्वपितीव यः ॥ ३८ ॥**

**निहत्येति** ॥ समधुं मधुनामकदैत्यसहितम् । कैटभं कैटभनामकं दैत्यम् । 'मधुसूदनः कैटभजित्' इत्यादिप्रयोगात् । निहत्य । दन्दशूकेन्द्र-पर्यङ्कं दन्दशूकानां सर्पाणामिन्द्रः स्वामी दन्दशूकेन्द्रः शेषः स एव पर्यङ्कः मञ्चः शय्या । 'दन्दशूको बिलेशयः । उरगः । शयनं मञ्चपर्यङ्कपल्यङ्काः खट्या समाः' इत्युभयत्रामरः । आरूढः प्राप्तः 'गत्यर्थाकर्मक' इत्यादिना आङ्पूर्वात् रुहेः कर्तरि क्तः । योगनिद्रया । योगो निद्रेवेत्युपमितसमासः । तया स्वपितीव निद्रातीवेत्युपात्तनिमित्ता क्रियास्वरूपोत्प्रेक्षालङ्कारः । 'ञिष्वप् शये' इत्यतो लिटि 'रुधादिभ्यस्सार्वधातुके' इति वलादेरिट् । तमिमं शरणं प्राप्ता इति वक्ष्यमाणेनान्वयः ॥ ३८ ॥

**यस्य वक्षस्थले रम्ये रमते सततं रमा ।**
**तत्त्वविद्येव सच्चित्ते शास्त्राब्धिमथनोत्थिता ॥ ३९ ॥**

**यस्येति** ॥ शास्त्राब्धिमथनोत्थिता शास्त्रमब्धिरिव शास्त्राब्धिः तस्य मथनं पर्यालोडनं तेनोत्थिता समुत्पन्ना । सतश्चित्ते । तत्त्वस्य विद्या तत्त्वविद्या सेव । यस्य रम्ये रुचिरे । वक्षस्थले वक्षसः प्रदेशे ।

शाखाकराब्धिमथनोत्थिता अपारतया शास्त्रसमता समुद्रस्यात्र विवक्षिता । 'बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम्' इति वामनः । बिम्बाधर इत्येवमादिषु मध्यमपदलोपिनं समासमाह । रमा लक्ष्मीः । सततं निरन्तर-मिति क्रियाविशेषणम् । रमते 'रमु क्रीडायाम्' इत्यतो लट् । तमिति सम्बन्धः । उपमालङ्कारः ।। ३९ ।।

**उज्जहार पुरा योऽपि मात्स्यभावमधिश्रितः ।**
**अन्तर्हितानि छन्दांसि रत्नानीव महोदधेः ।। ४० ।।**

**उज्जहारेति** ।। पुरा पूर्वकाले कल्पादौ । मात्स्यं मत्स्यस्यायं मात्स्यः तम् । 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति सूत्रप्राप्तोऽपि मत्स्य-शब्दयकारलोपः 'मत्स्यस्य ङ्याम्' इति कात्यायनेन नियमित इति न यकारलोपः । भावं लीलाम् । 'भावो लीलास्वभावयोः' इति दर्पणः । अधिश्रितः श्रयते कर्तरि क्तः । मत्स्यावतारमापन्नवानित्यर्थः । अन्तर्हितानि तिरोहितानि । छन्दांसि वेदान् । 'छन्दःश्रुतीच्छापद्येषु' इति दर्पणः । महोदधेः समुद्रात् । रत्नानीव उज्जहार उद्धृतवान् तमिति सम्बन्धः । अत्राप्युपमैवालङ्कारः ।। ४० ।।

भगवतः कूर्मावतारमभिष्टौति–

**यद्बलस्तम्भिताहार्यमथितादर्णवोदरात् ।**
**उद्धृतममृतं येन जीवन्त्यद्यापि देवताः ।। ४१ ।।**

**यद्बलेति** ।। यस्य भगवतः कूर्मरूपस्य बलेन शक्त्या । 'बलं स्याच्छक्तिरेतसोः' इति दर्पणः । स्तम्भितो निश्चलीकृतः । स्वस्थानाद-प्रच्यावित इत्यर्थः । स चासावहार्यः पर्वतो मन्दरः । 'अहार्यधरपर्वताः'

इत्यमरः । तेन मथितात् विलोडितात् । अर्णवस्योदरात् 'जनिकर्तुः' इत्यपादानत्वम् । अमृतमद्भुतं उत्पन्नं तमिममिति सम्बन्धः । येनामृतेनाद्यापि अस्मिन्नहन्यपि । देवता इन्द्राद्याः जीवन्ति । 'जीव प्राण-धारण' इत्यतो लट् । तदुद्भूतमिति पूर्वेणान्वयः । अत्र मन्दराचल-स्तम्भनादिना कूर्मरूपस्य हरगम्यमानत्वात्पर्यायोक्तमलङ्कारः । 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् । नमस्तस्मै कृतौ येन मुधा राहु-वधूकुचौ ॥' इति सोदाहरणं तल्लक्षणाभिधानात् ॥ ४१ ॥

**उद्धृता लीलया पृथ्वी दंष्ट्रिणा येन दंष्ट्रया ।**
**मृणाली कुञ्जरेणेव दन्तेन जलमध्यगा ॥ ४२ ॥**

**उद्धृतेति** ॥ जलमध्यगा जलमध्यं गच्छतीति जलमध्यगा । गमेर्डः । मृणाली अल्पं मृणालं मृणाली बिसं 'स्त्री स्यात्कचिन्मृणाल्यादिर्विवक्षापचये यदि' इत्यमरः । कुञ्जरेण दन्तिना 'कुञ्जो दन्तेऽपि न स्त्रियाम्' इत्यमरः । 'नखमुखकुञ्जेभ्यो र' इति मत्वर्थीयो रप्रत्ययः । दन्तेनेव येन दंष्ट्रिणा वराहरूपेण । 'वराहः सूकरो घृष्टिः कोल पोत्री किरिः किटिः । दंष्ट्री घोणी स्तब्धरोमा' इत्यमरः । दंष्ट्रास्यास्तीति विगृह्य व्रीह्यादिलक्षण इनि-रुत्पाद्यः । दंष्ट्रया 'कर्तृकरणयोस्तृतीया' । पृथ्वी भूमिः लीलया 'इत्थम्भूतलक्षणे' इति तृतीया । अनायासत्वादिप्रकारं प्राप्तो भगवान् तल्लक्षणं हि लीला । उद्धृता तमिममिति सम्बन्धः । उपमालङ्कारः ॥ ४२ ॥

नृसिंहभावं स्तौति–

**व्यभिनद्यो महादैत्यं नखरैर्नखरायुधः ।**
**कमलाकबरीभारप्रणयप्रवणीकृतेः ॥ ४३ ॥**

**व्यभिनदिति** ।। नखरायुधः नखराणि नखानि आयुधानि यस्य तथा । 'नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । हरिः कमलायाः श्रियः । कबरी केशवेशः । 'कमला श्रीर्हरिप्रिया' इति 'कबरी केशवेशः स्यात्' इति चामरः । तस्या भारः अतिशयः । पृथुकबरीत्यर्थः । तस्य प्रणयः परिचयः । 'प्रणयः स्नेहयाच्ञयोः । स्याद्विश्वासे परिचये' इति दर्पणः । प्रसाधनमित्यर्थः । तस्मिन् प्रवणीकृतैः प्रह्वीकृतैः 'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति च्विप्रत्यये 'च्वौ' इति दीर्घः । 'प्रवणं क्रमनिम्नोर्व्यां प्रह्वे' इत्यमरः । मार्दवान्नम्रतां प्राप्तैः । नखरैर्महादैत्यं हिरण्यकशिपुम् । व्यभिनद्व्यदारयत् । 'भिदिर् विदारण' इत्यतो लङ् । विदारितवानित्यर्थः । तमिममित्यन्वयः । अत्र नखराणां मार्दवेन तैक्ष्ण्यवैधुर्येऽपि महारक्षोविदारणवर्णनाद्विभावनालङ्कारः । 'हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता । अस्त्रैरतीक्ष्णकटिनैर्जगज्जयति मन्मथः ।।' इति तल्लक्षणाभिधानात् । उक्तलक्षणपर्यायोक्तमलङ्कारश्चेत्यनयोः समप्राधान्येन सङ्करः । अत्र पूर्वोत्तरार्धयोरसंलक्ष्यक्रमौ वीरशृङ्गारौ व्यज्येते । अत एव पूर्वार्धे गौडीया रीतिरारभटी वृत्तिश्चोत्तरार्धे वैदर्भी रीतिः कैशिकी वृत्तिश्च । तत्र गौडीया वृत्तिः प्रागुक्तलक्षणा । आरभटी वृत्तिस्तु 'अत्युद्धतार्थसन्दर्भा वृत्तिरारभटी मता' इति लक्षिता । वैदर्भी रीतिरपि प्रागुक्तलक्षणा । कैशिकी वृत्तिस्तु 'अत्यन्तसुकुमारार्थसन्दर्भा कैशिकी मता' इति लक्षिता दशरूपके । द्वितीयपादादौ छेकानुप्रासः । उत्तरत्र वृत्त्यनुप्रासश्च शब्दालङ्कारौ संसृज्येते ।। ४३ ।।

वामनावतारव्यापारं वर्णयितुं प्रस्तौति–

**लब्धवृद्धश्रवस्तोका जननीभावमिच्छती ।**
**ऋषेः सहचरी यस्य तपो दुश्चरमाचरत् ।। ४४ ।।**

**लब्धेति** ।। ऋषेः कश्यपस्य सहचरी पत्नी । 'पत्नी सहचरी समे' इत्यमरशेषः । लब्धं प्राप्तं वृद्धश्रवा इन्द्रः । 'वृद्धश्रवाः सुनासीर पुरुहूतः' इत्यमरः । स एव तोकमपत्यं यया सा लब्धवृद्धश्रवस्तोका । अदितिः सपुत्रापीत्यभिसन्धिः । यस्य जननीभावं मातृत्वमिच्छती । 'आच्छीनद्योर्नुम्' इति नुम्विकल्पः । अभिलषन्ती सती दुश्चरं दुष्करं तपः कायक्लेशादि-व्रतमाचरत् । 'चर गति भक्षणयोः' इति धातोर्लङ् । अकरोत् पर्यायोक्त-मलङ्कारः ।। ४४ ।।

**आदित्यमुदरं भेजे पुरुषो यः परात्परः ।**
**जगतामुपकारार्थमादित्यस्येव मण्डलम् ।। ४५ ।।**

**आदित्यमिति** ।। परात्परः परादव्यक्तादितत्त्वादपि पर उत्तमः । यः पुरुषः जगतामुपकारार्थम् । आदित्यस्य सूर्यस्य मण्डलमिव आदित्य-मदितेरिदमित्यर्थे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्ययः । उदरं भेजे । भज सेवायामित्यतो लिट् । प्राप्तवान् । अभिन्नधर्मिकोपमालङ्कारः ।। ४५ ।।

**सुषुवे मुषितोत्कीर्णपद्मरागरुचं च यम् ।**
**अदितिर्दितिजाचार्यगर्वकक्षाशुशुक्षणिम् ।। ४६ ।।**

**सुषुव इति** ।। अदितिर्देवमाता दितिजानां दैत्यानामाचार्यो गुरुश्शुक्रः तस्य गर्वोऽहङ्कार एव कक्षो गुल्मः । 'अथ कक्षःस्याद्दोर्मूले तृणगुल्मयोः' इति कविदर्पणः । तस्याशुशुक्षणिः अग्निः । 'शिखावानाशशुक्षणिः' इत्यग्निपर्याये अमरः । मुषितोत्कीर्णपद्मरागरुचं उत्कीर्ण उल्लिखितः । 'उत्कीर्ण इत्ययं भवेदुल्लिखितः' इति केशवः । शाणोल्लीढ इत्यर्थः । स

चासौ पद्मरागः कुरुविन्दमणिः तस्य रुक् कान्तिः मुषिता अपहृता उत्कर्णपद्मरागरुक् येन तं य च भगवन्तं सुषुवे । 'षूङ् प्राणिप्रसव' इत्यतो लिट् । प्रसूतवती । तमिमम् । अत्र मुषितोत्कीर्णेत्युपमायाः गर्वकक्षेति रूपकस्य च संसृष्टिः । दितिर्दितीति छेकानुप्रासः । उत्तरत्र वृत्त्यनुप्रासश्च शब्दालङ्कारः ।। ४६ ।।

**ववृधे वर्धयन्नब्धिमेखलां मेखलादिमान् ।**
**वर्णी वर्णितवृत्तो यः शुश्रूषाभिरतो गुरोः ।। ४७ ।।**

**ववृध इति** ।। गुरोः पितुः कश्यपस्य । 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः । शुश्रूषायां परिचर्यायाम् । 'वरिवस्या तु शुश्रूषा परिचर्या-प्युपासनम्' इत्यमरः । अभिरतः आसक्तः । वर्णितं स्तुतं वृत्तं चरित्रं यस्य स वर्णितवृत्तः । 'वृत्तं पद्ये चरित्रे च' इत्यमरः । वर्णी 'वर्णाद्ब्रह्म-चारिणि' इति णिनिः । ब्रह्मचारी मेखलादिमान् मेखला मौञ्जी आदिर्यस्य दण्डादेः तन्मेखलादि तद्वान् । अब्धिः समुद्रो मेखला काञ्ची यस्यास्सा अब्धिमेखला भूमिः तां वर्धयन् । हर्षयन्निति यावत् । यो ववृधे वर्धते स्म वृद्धिं प्राप्तवान् । 'वृधु वृद्धौ' इत्यतो धातोर्लिट् । अत्र गुरु-शुश्रूषामेखलाजिनादेर्वर्णनात् स्वभावोक्तिरलङ्कारः । अब्धिमेखलामिति विशेषणगतस्त्रीलिङ्गेन वर्णितवृत्त इत्यादिविशेषणेन कन्यामुद्विवक्षोः कुलशीलादिगुणसम्पन्नस्य समावृत्तस्य वर्णिनो वृत्तान्तस्य परिस्फूर्तेः समासोक्तिश्चालङ्कारः । 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् । अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इति सोदाहरणं तल्लक्षणाभि-धानात् । तथा चोभयसन्देहसङ्करः । ववृधे वर्धयन्नब्धीति वृत्त्यनुप्रासः । मेखलां मेखलादीति लाटानुप्रासः । वर्णी वर्णितेति छेकानुप्रासश्च

शब्दालङ्कारः । अत्र श्लोके आरोहस्यावरोहेणार्थप्रतिपादनरूपः समाधिर्नाम पदरचनारूपकाव्यगुणः । यदाह वामनः– 'आरोहावरोहक्रमः समाधिः' इति । उदाजहार च स एव । 'निरानन्दः कौन्दे मधुनि परिपीतोज्झितरसे' इति । परिपीतोज्झितरसे कौन्दे मधुनि निरानन्द इति अवरोहेणार्थप्रत्यायनं क्रमेणार्थानवबोधात् ।। ४७ ।।

**मुनिरध्यापयामास काश्यपोऽयं धृतव्रतम् ।**
**त्रयीं त्रयीमयगिरामाकरं करुणाकरम् ।। ४८ ।।**

**मुनिरिति** ।। काश्यपो मुनिः त्रयीमयगिरां त्रयी वेदाः । 'वेदास्त्रयस्त्रयी' इत्यमरः । तत्प्रचुरास्त्रयीमय्यः । 'तत्प्रकृतवचने मयट्' इति मयट् प्रत्ययः । ताश्च ता गिरश्च अङ्गोपाङ्गप्रचुरा वेदवाचः तासामाकरं खनिम् । विषयमिति यावत् । करुणाकरं दयानिधिम् । धृतं व्रतं गुरुपरिचर्यादिनियमरूपं येन तम् । तथा यं भगवन्तं त्रयीं त्रीन् वेदान् । 'गतिबुद्धिप्रत्यवसानार्थशब्द-कर्माकर्मकाणामणि कर्ता स णौ' इति कर्मणि कर्तुर्वामनस्य कर्मत्वम् । त्रयीमिति ईप्सिततमत्वात्कर्मत्वम् । तमिमं शरणं प्राप्ताः । अत्र त्रयीमय-गिरामाकरस्य भगवतोऽध्याप्यत्वं समर्थनीयं करुणाकरमिति पदार्थेन समर्थ्यत इति काव्यलिङ्गमलङ्कारः । 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति तल्लक्षणात् । 'जितोऽसि मन्दकन्दर्प मच्चित्तेऽस्ति त्रिलोचनः' इति तदुदाहरणम् । पूर्ववदेव शब्दालङ्कारत्रयं च ।। ४८ ।।

**जगाम भगवान्योऽपि मन्दिरं देववैरिणः ।**
**तायमाने महायज्ञे तमसीवोदयं रविः ।। ४९ ।।**

**जगामेति** ।। यो भगवान् । महायज्ञे महत्यध्वरे तायमाने विस्तार्यमाणे

अङ्गोपाङ्गसहिततया प्रवर्त्यमाने सति तमसि । उदयं पूर्वपर्वतं रविरिव । देववैरिणो दैत्यस्य बलेः । मन्दिरं जगामापि प्राप च । 'गम्लृ गतौ' लिट् । उपमालङ्कारः ।। ४९ ।।

**पुरोधाय सुमेधा यः पितरं जगतः पिता ।**
**प्रविवेश वशी तस्य वेदिं वेदविदावृताम् ।। ५० ।।**

**पुरोधायेति** ।। वशी वशीकृतेन्द्रियः । जगतः पिता । सुमेधाः शोभना मेधा यस्य स तथा । 'नित्यमसुच् प्रजामेधयोः' इति समासान्तोऽसुच् प्रत्ययः । पितरं कश्यपं पुरोधाय । 'पुरोऽव्ययम्' इति गतित्वात् गतिसमासे क्त्वो ल्यबादेशः । पुरस्कृत्य । तस्य बलेः । वेदविदावृतां वेदविद्भिः ऋत्विगादिभिः आवृतां वेदिं परिष्कृतां भूमिम् । 'वेदिः परिष्कृता भूमिः' इत्यमरः उत्तरवेदिमित्यर्थः । प्रविवेश । 'विश प्रवेशने' लिट् । प्रविष्टवान् । जगतः पिता पितरमिति वचनादागमालङ्कारः । पिता पुत्रेण पितृमानित्यागमप्रत्यायनात् । अनुप्रासः शब्दालङ्कारश्च ।। ५० ।।

**सदर्भास्तरणात्पीठादुत्थायोशनसा सह ।**
**दीक्षितः पूजयामास भक्त्या यं भक्तवत्सलम् ।। ५१ ।।**

**सदर्भेति** ।। दर्भाणामास्तरणं परिस्तरणं तेन सहितात् सदर्भास्तरणात् । पीठादासनात् । उत्थाय उशनसा शुक्रेण सह । 'शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः' इत्यमरः । दीक्षितः दीक्षां प्राप्तः बलिः । यं भक्तवत्सलम् । 'वत्सांसाभ्यां कामबले' इति मत्वर्थीयो लच्प्रत्ययः । भक्तेषु प्रीतिमन्तं भगवन्तं पूजयामास तमिमं शरणं प्राप्ताः । दीक्षितस्वभाववर्णनात् स्वभावोक्तिरलङ्कारः ।। ५१ ।।

**यं वीक्ष्य मुमुदे दैत्यो नष्टलब्धमिवात्मजम् ।**
**पदव्याः साधुसेव्याया हीयते न हि बुद्धिमान् ।। ५२ ।।**

**यं वीक्ष्येति** ।। दैत्यो बलिः । नष्टः अदर्शनं गतश्चासौ लब्धश्च नष्टलब्धः 'पूर्वकालैकसर्व...' इत्यादिना समानाधिकरणसमासः । आत्मजं पुत्रमिव । यं वीक्ष्य मुमुदे । 'मुद हर्षे' इति धातोर्लिट् । हृष्टवान् । तथाहि– बुद्धिमान् साधुसेव्यायाः पदव्याः मार्गात् । न हीयते न स्वलति । 'ओहाक् त्यागे' इत्यतः कर्मकर्तरि लट् । यद्वा दिवादेराकृतिगणत्वस्य वृत्करणाभावेन स्थितत्वात् क्षीयत इतिवत्कर्तर्येव श्यन् । पूर्वार्धे उपमाया उत्तरार्धे अर्थान्तरन्यासस्य च उपबन्धात्संसृष्टिः ।। ५२ ।।

**यस्य गात्रं यशःपात्रं नयनैश्चषकैरिव ।**
**पिबन्त इव पीयूषं मुदा नेमुर्महर्षयः ।। ५३ ।।**

**यस्येति** ।। महर्षयः महान्तश्च ते ऋषयश्च ते तथोक्ताः । यशसः कीर्तेः पात्रं भाजनं यशःपात्रम् । यस्य भगवतो गात्रं शरीरम् । चषकाणि पानपात्राणि 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । तैरिव विद्यमानैर्नयनैः लोचनैः । पीयूषमिव पिबन्तः सादरमवलोकयन्तस्सन्त इत्यर्थः । मुदा हर्षेण । नेमुः । 'णमु प्रह्वत्वे शब्दे च' इति धातोर्लिट् । नमस्कृतवन्तः । तमिमं शरणं प्राप्ताः । अत्रानेकेवशब्दघटितोपमालङ्कारः । तथाच दण्डी– 'एकेवोपमानेकेवोपमेति द्वैविध्यमपमायामभिसन्धाय' 'वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते । एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा' इति लक्षणमुक्त्वा उदाजहार 'त्वदाननमधीराक्षमाविर्दशनदीधिति । भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम्' इत्येकेवोपमा 'नलिन्या इव तन्वङ्ग्यास्तस्याः

पद्ममिवाननम् । मया मधुव्रतेनेव पायंपायमरम्यत ।।' इत्यनेकेवोपमां च ।। ५३ ।।

**आह्लादितद्युधामा यः प्राह्लादितनयं व्रती ।**
**आत्मावासभुवं श्लक्ष्णं ययाचे त्रिपदावधिम् ।। ५४ ।।**

**आह्लादितेति** ।। यो व्रती वर्णी भगवान् आह्लादिताः सन्तोषिताः द्युधामानो देवाः येन स आह्लादितद्युधामा । प्राह्लादितनयं प्रह्लादस्यापत्य-मित्यर्थे 'अत इन' इति इञ् प्रत्यये प्राह्लादिर्विरोचनः । तस्य तनयो बलिः तम् । त्रिपदावधि त्रीणि पदानि अवधिः परिच्छेदो यस्यास्सा ताम् आत्मावासभुवम् आत्मनः स्वस्य अवस्थानभूमिम् । लक्षणं मिताक्षरं यथा तथा । 'श्लक्ष्णमल्पे च सुन्दरे मसृणे च' इति केशवः । ययाचे । 'टुयाचृ याच्ञायाम्' इति धातोर्लिट् । याचितवानित्यर्थः । 'दुह्याच्पच्दण्ड्रुधि-प्रच्छिचिब्रूशासुजिमथ्मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्' इति परिगणितत्वात् 'अकथितं च' इति याचेर्द्विकर्मत्वम् । त्रिपदावधिमिति विशेषणं त्रिदशसन्तोषानुगुणत्रैलोक्याक्रमणाभिप्रायगर्भमिति परिकरालङ्कारः । स च यमकालङ्कारेण संसृज्यते । तमिमं शरणं प्राप्ताः ।। ५४ ।।

**यस्यार्थसिद्धिसमये व्यवधिं विदधत्स्वयम् ।**
**बभूव भार्गवः काणः सत्सु दोषाय वामता ।। ५५ ।।**

**यस्येति** ।। यस्य भगवतोऽर्थसिद्धिसमये अर्थस्य प्रयोजनस्य सिद्धिः निवृत्तिः तस्याः समये । व्यवधिं व्यवधानम् । अन्तरायमिति यावत् । स्वयमात्मना विदधत् कुर्वन् सन् । भार्गवः शुक्राचार्यः । काणः एकेनाक्ष्णा हीनः । 'काणः काकैकचक्षुषोः' इति विश्वः । बभूव । शुक्राचार्यस्य काणत्वं

च 'इत्येवमुक्तो देवेन वामनेन तदा बलिः । सजलं हेमकलशं गृहीत्वोत्थाय भक्तितः । यावत्स वामनकरे तोयं दातुमुपस्थितः । तावच्छुक्रस्सकलश-जलधारां रुरोध च । ततस्तु वामनः क्रुद्धः पवित्राग्रेण सत्तम । तत्रोदक-लशद्वारे तच्छुक्राक्षमवेधयत् । ततो व्यपगतः शुक्रः विद्धैकाक्षो नरोत्तम ।।' इति नृसिंहपुराणे । उक्तमर्थमर्थान्तरन्यासेनाह । **सत्स्विति** ।। तथाहि । सत्सु साधुषु विषये । वामता वक्रता 'वाम तु त्रिष दक्षिणे । वक्रसुन्दरयो-श्चापि' इति कविदर्पणः । दोषाय भवति । इष्टप्रापणायोद्यतस्य शुक्रस्य काणत्वरूपानिष्टावाप्तेर्वर्णनाद्विषमालङ्कारः । 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थ-समुद्यमात् । भक्ष्याशयाऽहि मञ्जूषां दष्ट्वाखुस्तेन भक्षितः' इति सोदाहरणं तल्लक्षणाभिधानात् । अर्थान्तरन्यासश्च तेन संसृज्यते । तमिमं शरणं प्राप्ताः ।। ५५ ।।

**वामनो नामतोऽर्थाच्च सन्नपि प्रागतो महान् ।**
**दृष्टिसिद्धान्तसिद्धो[१] यः किमशक्यं महात्मनाम् ।। ५६ ।।**

वामन इति ।। यो नामतः सञ्ज्ञातः अर्थाच्च ह्रस्वत्वाच्च । प्राग्वामन-स्सन्नपि । अतः प्रतिग्रहानन्तरम् । महान् महत्परिमाणः दृष्टिसिद्धान्तः दृष्टिर्दर्शनं श्रुतिः 'यतस्ता हरिणा दृष्टा श्रुता एवाखिलैर्जनैः । श्रुतयो दृष्टयश्चेति तेनोच्यन्ते पुरातनैः ।।' इति वचनात् । तस्यास्सिद्धान्तः अबाधितनिर्णयः तेन निश्चितः 'अणोरणीयान्महतो महीयान्' इत्यादिश्रुतिनिर्णयनिष्कृष्टः । तमिमं शरणं प्राप्ताः । तथाहि । महात्मनामशक्यं किम् । न किमपि । सर्वं सुकरमेवेत्यर्थः । 'कृत्यानां कर्तरि वा' इति महात्मनामिति षष्ठी । अत्र अणुत्वमहत्त्वयोः ऐकाधिकरण्यस्य समर्थनीयस्य दृष्टिसिद्धान्तसिद्ध इति

१. 'दृष्टसिद्धान्तसिद्धः' इति पाठान्तरम् ।

समर्थनात्काव्यलिङ्गमलङ्कारः अर्थान्तरन्यासेन संसृज्यते । दृष्टसिद्धान्तेति पाठे दृष्टं दर्शनम् । भावे निष्ठा । वेदादीति पूर्ववदेवार्थः ।। ५६ ।।

**यत्पादतलयोः पांसूनसेवन्त सुरासुराः ।**
**स्फुरदुत्फुल्लदलयोर्भृङ्गा इव सरोजयोः ।। ५७ ।।**

**यत्पादतलयोरिति** ।। स्फुरन्ति प्रकाशमानानि उत्फुल्लानि विकसितानि दलानि ययोस्ते स्फुरदुत्फुल्लदले तयोः 'उत्फुल्लसम्फुल्लयोरुपसंख्यानम्' इति निष्ठानत्वम् । सरोजयोः पद्मयोः भृङ्गाः भ्रमरा इव । सुरासुराः देवाः प्रह्लादाद्याश्च । यत्पादतलयोः यस्य भगवतः पादयोस्तले अधरप्रदेशौ । 'तलं स्वरूपाधरयोः' इति विश्वः । पादतले तयोस्तथोक्तयोः । पांसून् धूली असेवन्त । 'षेवृ सेवने' लङ् । अभजन्त । उपमालङ्कारः । तमिमं शरणं प्राप्ताः ।। ५७ ।।

**सकलं व्यापयन्विश्वं त्रिभिरेव हि विक्रमैः ।**
**चक्रे स्वं चक्रपाणिर्यः शुक्रानुचरशासने ।। ५८ ।।**

**सकलमिति** ।। यस्तु चक्रपाणिः त्रिभिरेव विक्रमैः पादविक्षेपैः । शुक्रानुचरस्य बलेः । शासने निग्रहे सति । यद्वा शासनं निदेशः तस्मिन् 'अथ शासनम् । निग्रहे निष्करग्रामे निदेशे गमनेऽपि च' इति कविदर्पणः । सकलं विश्वं जगत् । व्यापयन् व्याप्तवतः विक्रमान्प्रेरयन् । यद्वा 'आप्लृ लम्भने' इति चौरादिकात् स्वार्थे णिजन्तात् शतृप्रत्ययः । लब्ध्वेत्यर्थः । स्वं स्वकीयं चक्रे 'डुकृञ् करणे' लिट् । तमिमं शरणं प्राप्ताः ।। ५८ ।।

**यो बलिं बलिनं भुक्तादूर्ध्वलोकान्न्यपातयत् ।**
**दत्तभोगो यथा पूर्वो धर्मो जीवमनुष्ठितः ।। ५९ ।।**

**यो बलिमिति** ।। अनुष्ठितः आचरितः । पूर्वः प्राचीनः । दत्तो भोगः सुखानुभवो येन स तथा । धर्मस्सुकृतम् । जीव जन्तुं प्राणिनं यथा जीवमिव । बलिनं बलमस्यास्तीति बली तम् । बलिं बलिचक्रवर्तिनम् । मुक्तात् उपभुक्तात् । ऊर्ध्वलोकात् उत्तमस्थानात् स्वर्गादिरूपात् न्यपातयत् । 'पत्लृ गतौ' इत्यतो णिजन्ताल्लङ् । निपातितवानित्यर्थः । तमिमं शरणं प्राप्ताः । अत्र बिम्बप्रतिबिम्बभावापन्नधर्मिका श्रौती पुर्णोपमा ।।५९।।

**व्यसनैर्योज्यमानोऽपि यत्र भक्तिमयं स्थिराम् ।**
**न जहौ प्रत्युतादत्त ज्वालामग्निरिवेन्धनैः ।। ६० ।।**

**व्यसनैरिति** ।। व्यसनैर्विपद्भिः । 'व्यसनं विपदि भ्रंशे' इत्यमरः । योज्यमानः योगं प्राप्यमाणोऽप्ययं बलिर्भगवति । स्थिरां भक्तिम् अचञ्चलां सेवां न जही न त्यक्तवान् । 'ओहाक् त्यागे' लिट् । प्रत्युत अतिशयेन इन्धनैः अग्निर्ज्वालामिव भक्तिमादत्त । 'डुदाञ् दाने' इत्यतः आङ्पूर्वात्कर्तरि लङ् । 'आङोदोऽनास्यविहरणे' इत्यात्मनेपदम् । गृहीतवानित्यर्थः । इन्धनाधिक्ये ज्वालाधिक्यमिव व्यसनाधिक्येऽपि भक्त्याधिक्यमेवासीदिति भावः । अत्र व्यसनैरित्यादिना करणे सत्यपि भक्तित्यागलक्षणकार्यानुदयवर्णनात् विशेषोक्तिरलङ्कारः । प्रत्युतादत्तेति सत्यपि प्रतिबन्धके भक्तिलक्षणकार्योत्पत्तिवर्णनात् विभावनालङ्कारः संसज्यते । 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे । हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि ।।' इति सोदाहरणं विशेषोक्तिर्लक्षिता । 'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके । नरेन्द्रानेव ते राजन् दशत्यसिभुजङ्गमः ।।' इति विभावनाविशेषोऽपि सोदाहरणं लक्षितः । उपमालङ्कारस्तु स्फुट एव । तमिमं शरणं प्राप्ता इत्यन्वयः ।। ६ ।।

**ततस्त्रिजगदैश्वर्यमदिशद्यो बलद्विषे ।**
**आधिपत्यं च दैत्याय नागलोकस्य भूयसः ।। ६१ ।।**

**तत इति** ।। ततो बलिनिग्रहानन्तरम् । यो भगवान् त्रिजगदैश्वर्यं त्रयाणां जगतां समाहारस्त्रिजगत् तस्यैश्वर्यमाधिपत्यम् । बलद्विषे बलनामकदैत्यद्वेषिणे इन्द्रायादिशत् । 'दिश अतिसर्जने' लङ् । अतिसृष्टवान् । दैत्याय च बलये । भूयसो बहुतरस्य नागलोकस्य पातालस्य । आधिपत्यमधिपतित्वं स्वामित्वम् अदिशत् । तमिमं शरणं प्राप्ताः । अत्रेन्द्रे त्रिजगदैश्वर्यस्य बलौ पातालाधिपत्यस्य च वर्णनीयत्वात् अदिशदित्येकधर्मान्वयाच्च तुल्ययोगितालङ्कारः । 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता । सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च ।।' इति सोदाहरणं तल्लक्षणाभिधानात् । यद्वा । 'वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः । मदेन भाति कलभः प्रतापेन महीपतिः ।।' इति वचनात् वर्ण्यावर्ण्ययोस्त्रिजगदैश्वर्यनागलोकाधिपत्ययोर्वर्णनाद्दीपकालङ्कारः ।। ६१ ।।

**यो जगत्प्रीतिमातन्वन्यशोभिरमृतोपमैः ।**
**भेजे पूर्णं निजं तेजः शरदीव हिमद्युतिः ।। ६२ ।।**

**यो जगदिति** ।। यो भगवान् । अमृतं उपमा येषां तैरमृतोपमैः धवलिमादिना अमृतेन तुल्यैः । यशोभिः कीर्तिभिः । जगतां प्रीतिं हर्षं जगत्प्रीतिम् । आतन्वन् कुर्वन् । शरदि शरत्काले हिमद्यतिः चन्द्र इव । पूर्णं निजं तेजः प्रभावं दीप्तिं च । 'तेजः प्रभावे दीप्तौ च' इत्यमरः । भेजे । 'भज सेवायां' लिट् । प्राप्तवानित्यर्थः । पूर्णोपमालङ्कारः ।। ६२ ।।

**कुब्जनाम्नः कथाऽद्यापि पुंसो यस्य गुणाधिका ।**
**रमयत्यनुभूतेव रमणी रोमहर्षिणी ।। ६३ ।।**

**कुब्जनाम्न इति** ।। यस्य कुब्जो निखर्व इत्यर्थः । 'कुब्जस्तु गडुलेऽपि स्यान्निखर्वे' इति केशवः । तन्नाम्नः वामनस्येति यावत् । पुंसो गुणाधिका त्रैलोक्याक्रमणादिगुणरुन्नता । अनुभूता अनुभूयमाना । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तप्रत्ययः । रमणीव रोमहर्षिणी रोमाणि हर्षयितुं शीलमस्या इति तथोक्ता सती रमयति सन्तोषयति । अत्र वामनस्यापि गुणाधिकलोकाक्रमणादिकार्यवर्णनात् विषमालङ्कारः । 'विरुद्धकार्यस्योत्पत्तिरपरं विषमं मतम् । कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका ।।' इति तल्लक्षणात् । तेन चाङ्गभूतेन सङ्कीर्यते .....मसङ्कीर्णो नामालङ्कारः । अनेन च समेन........ कविः स्ववृत्तान्तमपि स्फोरयतीत्यपि भाति । कुब्जस्य प्रकृतस्य वामनस्य नाम यस्य तत्समाननाम्नः त्रिविक्रमस्य कवेः । वामनस्यैव त्रिविक्रमत्वादिति भावः । गुणैरोजःप्रभृतिभिः अधिका कथा वाक्यप्रबन्धरूपकाव्यात्मा इत्याद्यप्रस्तुतसूचनात् ।। ६३ ।।

**तमिमं शरणं प्राप्ता वयमादिममादरात् ।**
**भवन्तं भवसम्भीतिभिदं भुजगशायिनम् ।। ६४ ।।**

**तमिममिति** ।। वयं देवैस्सहितत्वाद्बहुवचनम् । यद्वा 'अस्मदो द्वयोश्च' इति शास्त्रात् वयं ब्रूम इतिवदहमिति वक्तव्येऽपि बहुवचनम् । भुजगशायिनं भुजगे (शयितुं?) शेतुं शीलमस्येति तथोक्तम् । भवः संसार 'भवस्तु प्राप्तिसत्तयोः । शम्भौ जन्मनि संसारे' इति केशवः । तत्सम्भीतिः भिनत्तीति भिदेः क्विप् । भवसम्भीतिमिदम् । आदौ सृष्टिकाले भवम् । ('आदेश्च' इति शैषिको मप्रत्ययः?) 'अग्रादिपश्चाड्डिमच्' । तम् उक्तगुणविशिष्टं इमं साक्षात्कृतम् । एनादेशाभावनिमितमुक्तं प्राक् । भवन्तं पूज्यं त्वाम् । आदरात् बहुमानात् । शरणं रक्षितारं 'शरणं गृहरक्षित्रोः'

इत्यमरः । प्राप्ताः कर्तरि निष्ठा । प्राप्तवन्तः । अत्र भवसम्भीतिभिदमिति विशेषणस्य साभिप्रायकत्वात् परिकरालङ्कारः । अनुप्रासश्च शब्दालङ्कार इति तयोस्संसृष्टिः ।। ६४ ।।

**इति वाग्वारिधाराभिर्वर्षति ब्रह्मवारिदे ।**
**अदर्शि भगवान्विष्णुर्विद्युतामिव विभ्रमः ।। ६५ ।।**

**इतीति** ।। इति पूर्वोक्तप्रकारेण । ब्रह्मवारिदे ब्रह्मैव वारिदो मेघः तस्मिन् । वाग्वारिधाराभिः वाच एव वारिधाराः उदकधाराः 'धारासम्पात आसारः' इत्यमरः । अभिवर्षति सिञ्चति सति । विद्युतां तडितां 'तडित्सौदामिनी विद्युच्चञ्चला चपला अपि' इत्यमरः । विभ्रमः विलास इव । भगवान् विष्णुः । अदर्शि दृष्टः । देवैरिति शेषः । मेघश्यामस्यापि भगवतो दुरालोकतेजोभूयिष्ठत्वेन विद्युद्विभ्रमसादृश्यवर्णनं युक्तम् । पीताम्बरधरणाद्वा । अत्र रूपकानुप्राणितोपमालङ्कारः । ब्रह्मवारिद इत्यत्र ब्रह्मैव वारिद इत्यन्यरूपेण रूपवतः करणात् विभ्रम इवेतीवशब्दोपादानाच्च ।। ६५ ।।

**वैष्णवं तत्परं ज्योतिर्दुनिरीक्ष्यं निरीक्ष्य ते ।**
**प्रणमन्तो न नाम्नैव जाताः सुमनसोऽर्थतः ।। ६६ ।।**

**वैष्णवमिति** ।। वैष्णवं विष्णोरिदमित्यर्थे अण्प्रत्ययः । तत् प्रसिद्धं परमुत्कृष्टम् । ज्योतिर्दीप्तिः 'ज्योतिरात्मनि सूर्येऽग्नौ हविर्होमार्चिर्दीप्तिषु' इति केशवः । प्रकाशमित्यर्थः । दुर्निरीक्ष्यं कृच्छ्रादीक्षणीयं 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल् प्रत्ययः । निरीक्ष्य दृष्ट्वा ते देवा प्रणमन्तः प्रणामं कुर्वन्तः । नाम्नैव न सुमनसो जाता किन्त्वर्थतोऽपि

अवयवार्थसंयोगादपीत्यर्थः । सुमनसः सम्पन्नाः । सुमनस इति पदं देवेष्वेतावन्तं कालं सञ्ज्ञामात्रमासीत् । अथेदानीं शोभनमानसा इति अन्वर्थाभिधानं सम्पन्नमिति भावः । अत्र निरुक्तिरलङ्कारः ।। ६६ ।।

**उत्थाप्य ताञ्जगन्नाथो वितथेतरकीर्तनः ।**
**ब्रूते ब्रह्ममुखान्देवान्सुस्मितेन स्म हर्षयन् ।। ६७ ।।**

**उत्थाप्येति** ।। वितथेतरकीर्तनः वितथादसत्यादितरत् कीर्तनं भाषणं यस्य स तथा । फलाव्यभिचारिवचन इत्यर्थः । जगन्नाथो हरिस्तान् प्रणतान् ब्रह्ममुखान् देवान् । उत्थाप्य उत्थितान्विधाय । सुस्मितेन शोभनेन मन्दहासेन । हर्षयन् सन्तोषयन् । ब्रूते स्म 'लट् स्मे' इति लिडर्थे लट् । उवाचेत्यर्थः । वितथेतरकीर्तन इति विशेषणस्य देवताकार्यनिष्पत्त्यादि-रूपफलाव्यभिचारित्वाभिप्रायगर्भत्वात्परिकरालङ्कारः ।। ६७ ।।

**कथयन्तु महाभागा भवन्तस्तं मनोरथम् ।**
**यस्मादियं स्तुतिर्देवाः स्ताविता तुष्टिवर्धिनी ।। ६८ ।।**

**कथयन्त्विति** ।। हे महाभागाः महान् भागो भाग्यं येषां ते तथोक्ताः । 'भागो भाग्ये चतुर्थांश' इति वैजयन्ती । देवाः । तुष्टिं सन्तोषं वर्धयितुं शीलमस्या अस्तीति तुष्टिवर्धिनी । मम सन्तोषणशीला । स्तूयते अनयेति व्युत्पत्त्या स्तुतिसाधने षड्विंशतिश्लोकसङ्घातात्मके काव्ये स्तुतिशब्दो वर्तते । 'श्रुयजदृशिस्तुभ्यः करणे' इति करणे क्तिन्प्रत्ययस्मरणात् । यस्मात् यन्मनोरथाद्धेतोः । 'विभाषा गुणे' इति हेतौ पञ्चमी । स्ताविता । स्तोतेः जल्पतिप्रभृतित्वादणिकर्तुः कर्मत्वम् । स्तवनकीकृता । करणत्वेऽपि अवान्तरव्यापारप्राधान्याभिप्रायेण कर्तृत्वोक्तिः । युष्माभिरिति शेषः तं

मनोरथं वाञ्छाम् । 'वाञ्छा लिप्सा मनोरथः' इत्यमरः । भवन्तः पूज्याः यूयमिति यावत् । कथयन्तु वदतेत्यर्थः । 'कथा वाक्यप्रबन्धे' इत्यतो लोट् । अत्र देवविषयरतिभावं प्रति तुष्टिवर्धिनीत्युक्तहर्षस्याङ्गत्वात् भावोदयोऽलङ्कारः । 'भावस्योद्गमावस्था भावोदयः' इति तल्लक्षणात् ।। ६८ ।।

**चरिताञ्जलिमूर्धाऽथ[१] चराचरगुरुं प्रति ।**
**विचारचतुरो वाचमुवाच चतुराननः ।। ६९ ।।**

**चरिताञ्जलीति** ।। अथ भगवद्वचनानन्तरम् । चराचरगुरुं चराश्च अचराश्च चराचराः । जङ्गमस्थावरात्मका लोकाः । 'चरिष्णु जङ्गमचरम्' इत्यमरः । तेषां गुरुं प्रभुम् । हरिं प्रति । चरितः आचरितः कृतः अञ्जलिः पाणिः 'पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्' इत्यमरः । संहतौ पाणी इत्यर्थः । यस्मिन्स मूर्धा यस्य स तथोक्तः । रचितेति पाठेऽप्यय-मेवार्थः । विचारे चिन्तने । विमर्श इति यावत् । 'विचारश्चिन्तने गतौ' इति दर्पणः । चतुरो दक्षः । 'चतुरौ दक्षधीमन्तौ' इति दर्पणः । विचारे चतुर 'सप्तमी शौण्डैः' इति समासः । चत्वारि आननानि मुखानि यस्य सः विधाता तथोक्तः । 'पूर्वपदात्सञ्ज्ञायामगः' इति प्राप्तमपि णत्वं 'क्षुभ्नादिषु च' इति शास्त्रान्न भवति । वाचमुवाच । वच परिभाषणे लिट् । उक्तवान् । अत्र विचारचतुर इति विशेषणस्य प्रभुसन्निधिसम्भाषणानुकूल-चातुर्यशालीत्यभिप्रायगर्भत्वात् परिकरालङ्कारः ।। ६९ ।।

**त्वां गोचरयितुं स्वामिन्नागमोऽपि न हि प्रभुः ।**
**बोभवीमि भवत्पार्श्वे वावदूकस्तथाऽप्यहम् ।। ७० ।।**

---

१. 'रचिताञ्जलिमूर्धाऽथ' इति पाठान्तरम् ।

**त्वामिति** ।। भो स्वामिन् सर्वे लोकाः स्वमस्येति स्वामी 'स्वामिन्नैश्वर्ये' इति स्वशब्दादामिनच्प्रत्यये स्वामीति निपात्यते । सर्व-लोकेश्वरेत्यर्थः । त्वां गोचरयितुं विषयीकर्तुम् । आगमो वेदादिसद्ग्रन्थोऽपि प्रभुः समर्थो न हि । वेदवेदानुसारिशास्त्रानवगाह्यमाहात्म्यं तवेत्यर्थः । 'यतो वाचो निवर्तन्ते' इति श्रुतेरिति भावः । तथापि वागगोचरत्वेऽपि । अहं भवतः पार्श्वे सन्निधाने भवत्पार्श्वे वावदूकः । वदेर्यङन्तादूकप्रत्ययः । 'वावदूकश्च वक्तरि' इत्यमरः । कुर्वादिगणे पठितो वावदूकशब्दः । एवमेव व्युत्पादितो वैयाकरणैः । बोभवीमि पुनः पुनः भृशं वा भवामि भवते-र्यङ्लुगन्ताल्लट् । 'हुश्नुवोस्सार्वधातुके' इत्यत्र हुश्नुग्रहणात् ज्ञापकात् भाषायामपि यङ्लुगन्तप्रयोगः साधुरिति हरदत्तादयः । भवत्सन्निधानाहितं मम वक्तृत्वमिति भावः । अत्र वेदाद्यगोचरे वावदूकत्वस्य समर्थनीयस्य भगवत्पार्श्व इति पदार्थेन समर्थनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।। ७० ।।

वावदूकत्वमेव विशदयति–

**समरेषु महीयस्सु त्रिदिवे ये पराजिताः ।**
**ते दैत्यसत्तमा भूमौ बभूवुर्भूभुजां सुताः ।। ७१ ।।**

**समरेष्विति** ।। ये दैत्यसत्तमाः दैत्यश्रेष्ठाः । त्रिदिवे स्वर्गे । महीयस्सु अतिशयेन महत्सु । समरेषु 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः । पराजिताः पराभूताः । ते भूभुजां राज्ञां सुतास्सन्तो बभूवुरुत्पन्नाः । पराजयप्रतिकारायेति भावः ।। ७१ ।।

तमेव प्रति(प्र)कारं पञ्चभिः श्लोकैराह–

**अभिषिक्ताश्च राज्येषु सप्रभावास्तरस्विनः[1] ।**
**सुवेषा इव ते योषाः सर्वतो गृह्णते श्रियम् ॥ ७२ ॥**

**अभिषिक्ताश्चेति** ॥ ते राजपुत्राः । राज्येषु राजकर्मसु विषये । अभिषिक्ताश्च कृतपट्टाभिषेकाश्च न केवलं बभूवुरिति चशब्दः । अत एव तरस्विनो बलवन्तो वेगवन्तो वा । 'तरसी बलरंहसी' इति वैजयन्ती । तपस्विन इति केचित्पठन्ति । उभयत्रापि 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । सप्रभावाः प्रभावेण कोशजतेजसा सहिताः । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः । सुवेषाः शोभनो वेषोऽलङ्क्रियाजन्यशोभा यासां तास्तथोक्ताः । योषा इव स्त्रिय इव 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः । सर्वतः सर्वेभ्यः । श्रियं सम्पदम् । गृह्णते अपहरन्ति । 'ग्रह उपादान' इति धातोस्स्वरितेत्त्वाल्लडात्मनेपदम् । अत्रोपमालङ्कारः ॥ ७२ ॥

**मोहापादकसम्पातैः सुदुर्दर्शजवैः शरैः ।**
**युगपत्सकलं लोकं वशीकुर्वन्त्यनङ्गवत् ॥ ७३ ॥**

**मोहेति** ॥ मोहस्य मूर्छायाः । 'मूर्छा तु कश्मलं मोहः' इत्यमरः । अन्यत्र चित्तविप्लवस्य । 'मुह वैचित्त्ये' इति धातुः । आपादकः प्रापकः । शेषषष्ट्या समासः । सम्पातः पतनं येषां ते तथोक्तास्तैः । सुतरां दुर्दर्शः दुःखेन द्रष्टव्यः । 'ईषदुस्सुषु' इत्यादिना खल् । स जवो वेगो येषां तैः । शरैर्बाणैः । युगपदेककाले । सकलं लोकं जनम् । अनङ्गवत्

---

१. 'तपस्विनः' इति पाठान्तरम् ।

मन्मथेन तुल्यं यथा तथा । वशीकुर्वन्ति । वश आयत्तः । स्वाधीनं कुर्वन्ति । अत्र आर्थी तद्धितगता पूर्णोपमा ।। ७३ ।।

**क्रतूंस्तपांसि दानानि क्रियमाणानि नित्यशः ।**
**अन्त्यैरेव महोपायैः साम्प्रतं वारयन्ति नः ।। ७४ ।।**

**क्रतूनिति** ।। नित्यशः दिनं दिनं संख्यैकवचनाच्च वीप्सायाम्' इति नित्यशब्दाच्छस् । क्रियमाणानि नः अस्माकम् । क्रतून् यज्ञान् । 'सप्ततन्तुर्मखः क्रतुः । यज्ञः' इत्यमरः । तपांसि कृच्छ्रचान्द्रायणादीनि । दानानि तुलापुरुषादीनि । क्रियमाणानीत्यस्य क्रतुं प्रत्यपि विशेषणस्यापि 'नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्' इति हि नपुंसकत्वम् । साम्प्रतम् अधुना 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' इत्यमरः । अन्त्यैश्चतुर्थैर्दण्डरूपैर्महोपायैः । वारयन्ति प्रतिषेधयन्ति । 'वृञ् वरण' इति धातोश्चौरादिकाल्लट् । अत्रान्त्यैरित्युक्तः पर्यायोक्तमलङ्कारः ।। ७४ ।।

**आनृशंस्यं परित्यज्य परं धर्मममी बत ।**
**यज्ञादीनसुरोद्देश्यान्मन्वते बद्धमन्यवः ।। ७५ ।।**

**आनृशंस्यमिति** ।। अमी राजसुताः । परमुत्तमं धर्मम् । आनृशंस्यं नृशंसो घातुकः न नृशंसः अनृशंसः तस्य कर्म आनृशंस्यं सौम्यताम् । परित्यज्य । 'न नञ्पूर्वात्तत्पुरुषात्' इत्यादिनोत्तरभावप्रत्ययनिषेधेऽपि ब्राह्मणादिगणे अनृशंसशब्दस्य पाठात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ्प्रत्ययो भवत्येव । बद्धमन्यवः कृतद्वेषाः । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । तथाविधास्सन्तो यज्ञादीन् धर्मान् । असुराः उद्देश्याः त्यज्यमानहविस्स्वामितया अभिसन्धेयाः येषां तान् असुरोद्देश्यान् मन्वते ।

'मनु अवबोधने' लट् । अवबुध्यन्ते कांक्षन्तीत्यर्थः । बतेत्यव्ययं खेदे वर्तते । 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इत्यमरः । अत्रानृशंस्यं सौम्यतां परित्यज्येति सौम्याभावशान्तेः बद्धमन्यव इत्युक्तक्रोधं प्रति अङ्गत्वाभिसन्धानात् समाहितमलङ्कारः । लक्षणं तूक्तम् ।। ७५ ।।

**आलोडयन्ति ते पृथ्वीं भगवन्बलगर्विताः ।**
**निदाघसमये यद्वन्मदान्धाः कुञ्जरा नदीम् ।। ७६ ।।**

**आलोडयन्तीति** ।। किञ्च हे भगवन् । बलेन शक्त्या गर्विताः दृप्ताः । ते राजपुत्राः । निदाघसमये ग्रीष्मकाले । 'निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः' इत्यमरः । मदेन अन्धा मूढाः मदान्धाः । कुञ्जराः नदीं यद्वत् नदीमिव । पृथ्वीं भूमिं आलोडयन्ति । 'लोडृ उन्माथे' उन्मथन्ति । स्वार्थे णिच् । उपमालङ्कारः । समरेष्वित्यादौ आलोडयन्तीत्यन्ते सन्दर्भे एकवाक्यतया सङ्घातकाव्ये प्रत्यनीकालङ्कारः । त्वया पराभूताः त्वां जेतुं न शक्नुवन्तः त्वदीयान् भूयिष्ठान् जनान् परिभवन्तीति वर्णनात् । 'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः । जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ ।।' इति सोदाहरणं तल्लक्षणमुक्तं चन्द्रालोके ।। ७६ ।।

एवं परिवेदनीयं निवेद्य आत्मीयरक्षणमर्थयते ब्रह्मा–

**तदिमां जगतीमेभ्यः परित्रातुं त्वमर्हसि ।**
**अचिरेणैव कालेन व्याघ्रेभ्य इव रोहिणीम् ।। ७७ ।।**

**तदिमामिति** ।। हे भगवन् । तत्तस्मात्त्वमचिरेणैव कालेन न तु विलम्बेन । व्याघ्रेभ्यो रोहिणीं गामिव । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यात्' इत्यमरः । एभ्यो

दैत्यराजपुत्रेभ्यः 'भीत्रार्थानां भयहेतुः' इत्यपादानसञ्ज्ञायां पञ्चमी । इमां जगतीं भूमिम् । 'जगती रत्नगर्भा च' इति भूमिपर्याये अमरः । परित्रातुं रक्षितुम् । 'शकधृष–' इत्यादिना अर्हार्थे तुमुन् । अर्हसि योग्यो भवसि । अर्हपूजायामिति धातोर्लट्, उपमालङ्कारः ।। ७७ ।।

**यदुवंशमधिष्ठाय दह दुष्टमयं तमः ।**
**लीलयाऽग्निरिव ध्वान्तं सस्नेहः स्वच्छवर्तिकः ।। ७८ ।।**

**यदुवंशमिति** ।। हे भगवन् त्वं यदुवंशमधिष्ठाय यदुवंशे प्रादुर्भूय । 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मत्वम् । सस्नेहस्वच्छवर्तिकः सस्नेहा सप्रेमा सतैला च स्वच्छा निर्मला वर्तिका वर्तनं दशा च यस्य स तथोक्तः । 'शेषाद्विभाषा' इति वर्तिपक्षे कप् । 'स्नेहस्तैलेऽपि सौहृदे' इति विश्वः । 'वर्तिर्दीपदशा गात्रलेपयोर्मणिरञ्जने' इति रत्नमाला । अग्निर्लीलया ध्वान्तमन्धकारमिव । दुष्टमयं दुष्टेभ्य आगतः 'तत आगतः' इत्यर्थे 'मयट् च' इति हेतोर्मयट् प्रत्ययः । तमः शोकम् । 'तमोऽन्धकार स्वर्भानौ तमः शोके गुणान्तरे' इति विश्वः । दह भस्मीकुरु । समूल-मपनयेत्यर्थः । 'दह भस्मीकरण' इति धातोर्लोट् । अत्र श्लेषानु-प्राणितोपमालङ्कारः ।। ७८ ।।

**तत्रापि वसुदेवस्य दयिता या तपोमयी ।**
**भवतो भरणायैषा योग्येति प्रतिभाति नः ।। ७९ ।।**

**तत्रापीति** ।। हे भगवन् । तत्रापि यदुवंशेऽपि । तपोमयी तपःप्रचुरा । 'तत्प्रकृतवचने मयट्' इति मयट् प्रत्ययः । 'टिड्ढाणञ्' इत्यादिना ङीप् । या वसुदेवस्य दयिता प्रिया सैषा भवतो भरणाय गर्भे धारणाय योग्या

अनुरूपेति नोऽस्मान् । 'अभितः परितः' इत्यादिना प्रतियोगे द्वितीया । प्रतिभाति स्फुरति । 'भा दीप्तौ' इत्यतो लट् । अत्र वसुदेवभार्यायाः देवक्या तपोमयीति विशेषणेन भवतः पूज्यस्येति कृष्णस्य चानुरूप्यं वर्णितमिति समालङ्कारः । 'समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः । स्वानुरूपं कृतं सद्म हारेण कुचमण्डलम् ।।' इति सोदाहरणं तल्लक्षण-मभिहितम् ।। ७९ ।।

**इति पद्मासने वाणीं ब्रुवाणे धरणीधरः ।**
**करुणार्द्रमनास्तत्र तथेत्युक्त्वा तिरोदधे ।। ८० ।।**

**इतीति** ।। पद्ममासनं यस्यासौ पद्मासनः तस्मिन् ब्रह्मणि । इति अथ ब्रह्ममुखाद्वाचामित्याद्युक्तप्रकाराम् । वाणीं वचनम् । ब्रुवाणे सति । 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । धरणीधरः धरतीति धरः । पचाद्यच् । धरण्याः धरः भूधरः श्रीहरिः । करुणार्द्रमनाः सन् । दयापूरितमानसस्सन् । तत्र सिन्धुतीरे । तथास्त्वित्युक्त्वा तिरोदधे अन्तर्हितवान् । 'डुधाञ् धारणपोषणयोः' लिट् । अत्र पद्मासनदैन्यस्य सञ्चारिभावस्य कारुण्यभावं प्रत्यङ्गत्वात् भावोदयोऽलङ्कारः । ब्रह्मवचनस्य करुणां प्रति हेतुत्वात् हेतुरलङ्कारश्च । 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति तल्लक्षणात् । तयोस्समप्राधान्यात्सङ्करः ।। ८० ।।

**नमस्कृत्य हृषीकेशमारूढं मानसौकसम् ।**
**पुरस्कृत्य विधातारं विबुधास्त्रिदिवं ययुः ।। ८१ ।।**

**नमस्कृत्येति** ।। हृषीकेशं हृषीकाणीन्द्रियाणि 'हृषीकं विषयीन्द्रियम्' इत्यमरः । तेषामीशं प्रेरकम् । नमस्कृत्य । मानसौकसं मानसं सरः ओको

निवसनं यस्य स तथा तं हंसम् । 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः' इत्यमरः । आरूढं प्राप्तं 'गत्यर्थाकर्मक' इत्यादिना रुहेः कर्तरि क्तः । विधातारं ब्रह्माणम् । पुरस्कृत्य अग्रतः कृत्वा । विबुधाः देवाः । त्रिदिवं नाकलोकं ययुः । 'या प्रापणे' लिट् । प्राप्तवन्तः । अत्र देवानां हृषीकेशनमस्कारस्य हंसारूढविधिपुरस्कारस्य त्रिदिवयानस्य च प्रकृतार्थस्य क्रमेण विन्यासात् रत्नावल्यलङ्कारः । 'क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः' इति तल्लक्षणात् ।। ८१ ।।

**तत्र भारसहे भूमिर्भारमावेद्य भर्तरि ।**
**कुर्वती स्वैरमाश्वासं दुर्बला निर्ववार सा ।। ८२ ।।**

**तत्रेति** ।। दुर्बला सहत इति सहः पचाद्यच् । भारस्य सहः भारसहः तस्मिन् भारसहे । तत्र भर्तरि हरौ भारमावेद्य निवेद्य । स्वैरं स्वच्छन्दं यथा तथा । आश्वासं विश्रमम् । 'अथाश्वासो विश्रमे तथा । ग्रन्थावच्छेदभेदे स्यात्' इति केशवः । मनसः पर्यवस्थापनमित्यर्थः । कुर्वती सती । करोतेः शतरि 'उगितश्च' इति ङीप् । निर्ववार निर्वृतिं सुखं प्राप्तवती । वृणोतेर्लिट् । अत्र दौर्बल्यादेर्यथान्वयमुत्तरोत्तरकारणत्वा-त्कारणमालालङ्कारः । 'गुम्फः कारणमाला स्याद्यथा प्राक्प्राप्तकारणैः । नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः' इति सोदाहरणं तल्लक्षणाभिधानात् ।। ८२ ।।

**भगवानप्यथांशेन भुवि कार्यस्य सिद्धये ।**
**आविर्भवितुमुद्युक्तो द्रुहिणोक्तिमनुस्मरन् ।। ८३ ।।**

**भगवानिति** ।। अथ देवानां भूमेश्च स्वस्थानप्राप्तिनिर्वृतिसम्पत्त्य-

नन्तरम् । भगवान् अव्याहतषड्गुणैश्वर्यसम्पन्नो विष्णुः । देवानामिति शेषः । कार्यस्य प्रयोजनस्य सिद्धये निष्पादनाय । द्रुहिणस्य विरिञ्चस्य । उक्तिं अवतरणप्रार्थनावचनम् । अनुस्मरन् । अंशेन भुवि भूम्याम् । आविर्भवितुं लोकप्रत्यक्षगोचरतां प्राप्तुम् । उद्युक्तः उद्योगवान् । अभवदिति शेषः । देवप्रार्थनभगवदाविर्भावयोः समुच्चयेऽपिशब्दः । अत्र ब्रह्मवाक्यानुस्मरणस्य आविर्भावोद्योगं प्रति हेतुत्ववर्णनाद्धेतुरलङ्कारः ।। ८३ ।।

**देवकस्य सुता साध्वी तापसैरभिनन्दिता ।**
**अधत्त पुण्डरीकाक्षमुदरे हृदये यथा ।। ८४ ।।**

**देवकस्येति** ।। देषक इति कश्चिद्यादवः । तस्य सुता । साध्वी पतिव्रता । तापसैः तपः एषामस्तीति तापसाः । 'अण् च' इति तपःशब्दात् मत्वर्थीयोऽण् प्रत्ययः । तपश्शालिनः । तैरभिनन्दिता श्लाधिता । हृदये यथा मनसीव । उदरे गर्भे । पुण्डरीकमिव । नलिनमिव 'कमलं नलिनं पद्मं पुण्डरीकं महोत्पलम्' इति धनञ्जयः । अक्षिणी यस्य स तथा । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति अक्ष्यन्तबहुव्रीहेष्षच् । यद्यपि इवशब्दस्य न समासप्रवेशलोपौ प्रापकाभावात् । तथापि घनश्याम इत्यत्र पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यन इति वैयाकरणवचनात् इवशब्दस्य लौकिकविग्रहवाक्ये अस्माभिः प्रयोगः कृतः । अधत्त धृतवती । 'डुधाञ् धारणपोषणयोः' लङ् । अत्र अभिन्नधर्मिकोपमालङ्कारः । 'जयति श्रिया सह चिरं मनसि तव श्रीसुधीन्द्रयोगिपते । उदर इव वासुदेवः स्वच्छतरे दौग्धसैन्धवे देवः ।।' इति ।। ८४ ।।

**अमुष्या गर्भपाविष्टः शुशुभे श्यामलाकृतिः ।**
**अप्रमेयद्युतिर्यद्वद्भागीरथ्या हरिन्मणिः ॥ ८५ ॥**

**अमुष्या इति** ॥ भागीरथ्याः भगीरथेन निर्वृत्ता भागीरथी तस्याः गर्भं हरिन्मणिर्यद्वत् मरकतमणिरिव 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इत्यमरः । अमुष्याः देवक्याः गर्भमाविष्टः प्रविष्टः । 'गर्भस्तु कुक्षौ कुक्षिस्थजन्तौ पनसकण्टके' इति रत्नाकरः । अप्रमेयद्युतिः अप्रमेया प्रमातुमयोग्या द्युतिः कान्तिर्यस्य स तथोक्तः । श्यामला आकृतिर्विग्रहो यस्य स तथा भगवान् शुशुभे दिदीपे उल्ललास । 'शुभ दीप्तौ' इत्यतः कर्तरि लिट् । उपमालङ्कारः ॥ ८५ ॥

**वासुदेवमसूताऽसौ देवकी वसुदेवतः ।**
**गृह्यसंसारवैराग्यात्तत्त्वबोधमिव त्रयी ॥ ८६ ॥**

**वासुदेवमिति** ॥ गृह्यसंसारवैराग्यात् गृह्येऽस्वैरिणि अस्वात्माधीने 'पदास्वैरिबाह्यापक्ष्येषु च' इति ग्रहे क्यप् प्रत्ययः । संसारे वैराग्यात् । त्रयी त्रयो वेदाः । तत्त्वबोधं तत्त्वस्य अनारोपितरूपस्य ईश्वरस्य । बोधमवगमं 'तत्त्वं विदविदीशेषु स्वरूपे' इति कविदर्पणः । वसुदेवतः वसुदेवात् । 'अपादाने चाहीयरुहोः' इत्यपादाने तसिः । असौ आविष्टभगवद्गर्भा । देवकी देवकपुत्री । देवकशब्दात् 'पुंयोगादाख्यायाम्' इति ङीष् । तर्हि पुंयोग एवेति न नियम इत्यभ्युपगम्य 'प्राक्कैकयीतो भरतस्ततोऽभूत्' इत्यत्र कैकयीशब्दः समर्थितः । वासुदेवं नारायणम् । 'वासुदेवस्त्रिविक्रमः' इत्यमरः । 'वासुदेवार्जुनाभ्यां वुञ्' इत्यत्र भवतो भगवत एषा सञ्ज्ञेति महाभाष्यं च । असूत प्रसूतवती । 'षूञ् प्राणिप्रसवे' इत्यतः कर्तरि लङ् । उपमालङ्कारः ॥ ८६ ॥

**शंसन्त्यः शर्मपात्रत्वं मधुरा मधुरापुरः ।**
**ववृषुर्देवताः पुष्पैर्जायमाने जनार्दने ॥ ८७ ॥**

**शंसन्त्य इति** ॥ मधुराः शोभनाः । 'मधुरस्तु पुमान्रसे । स्वादुसञ्ज्ञे तद्वति तु त्रिषु स्याच्छोभने प्रिये' इति केशवः । देवताः ब्रह्माद्याः जनार्दने विष्णौ 'विष्वक्सेनो जनार्दनः' इति विष्णुपर्याये अमरः । जायमाने प्रादुर्भवति सति । मधुरापुरः मधुरानामिकायाः पुर्याः । शर्मपात्रत्वं सुखभाजनत्वम् । 'शर्मशातसुखानि च' । 'पात्रामत्रे च भाजनम्' इति च अमरः । शंसन्त्यः स्तुवन्त्यः । पुष्पैः ववृषुः । 'वृषु सेचन' इति धातोर्लिट् सिक्तवत्यः । अत्र जनार्दनप्रादुर्भावस्य माधुरजनशर्महेतुत्वात् 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति लक्षितो हेतुरलङ्कारः । यमकादिशब्दालङ्कारश्च ॥ ८७ ॥

**सृजन्तस्तरसाऽऽरावं देवदुन्दुभयः स्वयम् ।**
**निहन्तॄणां मुदं चक्रुर्नित्याघातालसात्मनाम् ॥ ८८ ॥**

**सृजन्त इति** ॥ देवदुन्दुभयः देवानां दुन्दुभयो भेर्यः । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । स्वयमात्मना । तरसा वेगेन । 'रंहस्तरसी तु रयस्यदः । वेगो जवः' इत्यमरः । आरावं शब्दम् । 'विभाषाडिरुप्लुवोः' इति रौतेर्घञ् प्रत्ययः । सृजन्तः उत्पादयन्तः सन्तः । नित्याघातालसात्मनां नित्यं निरन्तरं यथा तथा आघातस्ताडनं तेनालसो मन्दः आत्मा मनो येषां ते तेषाम् । 'देहे यत्ने धृतौ बुद्धौ मनसि ब्रह्मणि श्रुते । आत्मा वाक्' इति केशवः । निहन्तॄणां प्रहर्तॄणाम् । वादकानामित्यर्थः । मुदं सन्तोषं चक्रुः । 'डुकृञ् करणे' लिट् । अत्र नित्याघातालसेति

स्वयमित्याघाताभावेऽपि आरावं सृजन्त इति शब्दलक्षणकार्योत्पत्ते-रभिधानाद्विभावनालङ्कारः । 'विभावना विनापि स्यात्कारणं कार्यजन्म चेत् । अप्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ।।' इति सोदाहरणं तल्लक्षणाभि-धानात् ।। ८८ ।।

**आश्रावि द्युसदां गीतं विपञ्चीनां कलस्वनैः ।**
**आहतानां च तालानामुपरक्तं मनोहरम् ।। ८९ ।।**

**आश्रावीति** ।। आहतानां वादितानाम् । विपञ्चीनां वीणानां 'वीणा तु वल्लकी । विपञ्ची' इत्यमरः । तालानां कांस्यवाद्यभेदानां च कलैः । 'अव्यक्तमधुरे कलः' इति केशवाभिधाने । मधुरैः स्वनैः शब्दैः । उपरक्तमुपरञ्जितम् । अत एव मनोहरम् । द्युसदां दिवि सीदन्तीति द्युसदः । 'सत्सूद्विष' इत्यादिना क्विप् । तेषां देवानां गीतम् । भावे निष्ठा गानम् । आश्रावि । 'आङ्पूर्वात् श्रु श्रवण' इति धातोः कर्मणि लुङ् । 'चिण् भावकर्मणोः' इति च्लेश्चिण् । श्रुतम् । जनैरिति शेषः ।।८९।।

**क्वणत्कङ्कणकिङ्किण्यो गीर्वाणगणिकाङ्गनाः ।**
**लसल्लास्यं[1] पदे विष्णोर्विष्णोः प्रीत्यै वितेनिरे ।। ९० ।।**

**क्वणदिति** ।। क्वणन्त्यश्शब्दायमानाः कङ्कणानि करभूषणानि किङ्किण्यः क्षुद्रघण्टिकाश्च यासां तास्तथोक्ताः । 'कङ्कणं करभूषणम् । किङ्किणी क्षुद्रघण्टिका' इत्युभयत्रामरः । किङ्किणीशब्दात् 'नद्यृतश्च' इति कप्रत्ययो न भवति । समासान्तविधेरनित्यत्वात् । अत एव 'व्यक्तवाचाम् समुच्चारणे' इत्यत्र भाष्यादौ 'वरतनु सम्प्रवदन्ति कुक्कुटाः' इति प्रयोगः । 'हठातत्रुट्य-

१. 'संसल्लास्यम्' इति पाठान्तरम् ।

त्काञ्च्यो विगलितदुकूला युवतयः' इति सौन्दर्यलहर्याम् । 'सुतनु जहिहि मानम्' इत्यत्रामरुके । 'ननु सुतनुमुपलालयानुयान्तीम्' इति माघे च प्रयोगः । न चैवमपि 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः स्यादिति वाच्यम् । इष्टापादनात् । तर्हि किङ्किणय इति निर्देशः स्यादिति चेत् किणं करोतीति णिजन्तात् 'अच इः' इति औणादिक इप्रत्यये 'कृदिकारादक्तिनः' इति ङीषि किङ्किण्य इति ईकारान्तप्रयोगस्य साधुत्वात् । यद्वा किञ्चित्किणं करोतीत्यत्र 'तत्करोति' इति णिचि 'अच इः' इति इकारान्तप्रातिपदिकेन सह क्वणन्तः कङ्कणकिङ्किणयो यासां तासामिति विग्रहे न कप्प्रत्ययोत्पत्ति-शङ्का । नापि 'गोस्त्रियोरुपसर्जनस्य' इत्युक्तचोद्यम् । पश्चात्तु 'कृदिकारा-दक्तिनः' इति समासात् क्वणत्कङ्कणकिङ्किण्य इति कविप्रयोगः । अथवा किङ्किणीत्याख्याता किङ्किणीः तदाचष्ट इति णिचि इष्टवद्भावाट्टिलोपे 'अच इः' इति इकारे णिलोपे क्वणत्कङ्कणकिङ्किणयो यासां तासामिति विग्रहे 'कृदिकारादक्तिनः' इति ङीषि न काप्यनुपपत्तिः । अत एव 'कृष्णस्य सखिरर्जुनः' 'सखिना वानरेन्द्रेण' इति भारतरामायणप्रयोगौ । 'सीतायाः पतये नमः' 'नष्टे वृते प्रव्रजिते क्लीबे च पतिते पतौ' इति पराशरादि-प्रयोगश्च वैयाकरणैरेवमेव व्युत्पादितः । गीर्वाणगणिकाङ्गनाः गीर्वाणानां देवानां गणिकाङ्गनाः वेश्यास्त्रियः अप्सरसः । विष्णोः पदे आकाशे 'अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः' । इत्यत्र आत्मनः पदमितिवत् व्यस्तप्रयोगोऽप्याकाशार्थकः । विष्णोः प्रीत्यै । लसल्लास्यं शोभमानं नाट्यम् । 'लास्यं नृत्तं च नर्तनम्' इत्यमरः । संसल्लास्यमिति पाठे संसदि सभायां लास्यमित्यर्थः । 'सभासमितिसंसदः' इत्यमरः । वितेनिरे । 'तनु विस्तारे' इत्यतो लिट् । विस्तृतवत्यः कृतवत्य इत्यर्थः ।

अत्र विष्णुप्रीतिभावं प्रति अप्सरस्त्रीकङ्कणकिङ्किण्यादिभिः आलम्बनादिविभावैः व्यज्यमानस्य शृङ्गाररसस्याङ्गत्वाद्रसवदलङ्कारः ।। ९० ।।

**स्तनहेमघटास्तासां तरुणाः कुङ्कुमारुणाः ।**
**अनङ्गरसपीयूषपूरिताः प्रचकम्पिरे ।। ९१ ।।**

**स्तनहेमघटा इति** ।। अनङ्गरसपीयूषपूरिताः अनङ्गस्य मन्मथस्य रसः शृङ्गारः 'मदनरसमहौघपूर्णनाभीह्रदपरिवाहितरोमराजयस्ताः' इति माघे प्रयोगात् । स एव पीयूषं स पीयूषमिवेति वा तेन पूरिताः । परिपूर्णा इति यावत् । कुङ्कुमारुणाः कुङ्कुमेन काश्मीरजपङ्केनारुणाः तरुणाः नवाः 'तरुणः स्यान्नवे यूनि' इति विश्वः । तासामप्सरसां स्तनहेमघटाः । हेम्नो घटा हेमघटाः स्तना एव हेमघटाः स्तना हेमघटा इवेति वा प्रचकम्पिरे प्रचलिताः । 'चल सञ्चलन' इत्यतः कर्तरि लिट् । अत्र रूपकोपमानयोस्साधकबाधकप्रमाणाभावात् सन्देहसङ्करः । स्वभावोक्तिरसवतोरङ्गाङ्गिभावश्च ।। ९१ ।।

**मुखे मुक्तामणिश्रेणिविडम्बिस्वेदविप्रुषि ।**
**उल्ललास ललामासां ललामेव मनोभुवः ।। ९२ ।।**

**मुख इति** ।। मुक्तामणिश्रेणिविडम्बिस्वेदविप्रुषि मुक्ताश्च ते मणयश्च तेषां श्रेणिः पङ्क्तिः तां विडम्बयन्ती अनुकुर्वन्तीति तद्विडम्बिनो ताच्छील्ये णिनिः । स्वेदस्य विप्रुषो बिन्दवः 'बिन्दुपृषतौ पुमांसौ विप्रुषः स्त्रियाम्' इत्यमरः । विडम्बिन्यः स्वेदविप्रुषो यस्मिन् तत्तथा तस्मिन् । विडम्बिशब्दे 'स्त्रियाः पुंवद्भाषितपुंस्कात्' इति पुंवद्भावः । आसामप्सरसाम् । मुखे ललाम पुण्ड्रं तिलकम् । मनोभुवो मन्मथस्य ललामेव केतुरिव । 'ललाम

पुच्छपुण्ड्रेश्वभूषाप्राधान्यकेतुषु' इत्यमरः । उल्ललास चकासे । 'लस श्लेषणक्रीडनयोः' इत्यतो लिट् । अत्र मनोभुवो ललामेवेतीवशब्देन सम्भावनापरेण वस्तूत्प्रेक्षा निबध्यते । तथा चालङ्कारिकाः । 'मन्येशङ्केध्रुवं-प्रायोनूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' ।। 'अन्यस्यान्यतादात्म्यसम्भावनमुत्प्रेक्षा' इति हि तल्लक्षणम् । बिडम्बिपदोप-स्थापितोपमा चानया संसृज्यन्ते ।। ९२ ।।

**अङ्गविक्षेपशैथिल्यान्न्यपतत्कबरीभरात् ।**
**सन्तानसूनसन्तानः सलिलं नीरदादिव ।। ९३ ।।**

**अङ्गविक्षेपेति** ।। अङ्गानां विक्षेपः विचलनं नर्तनं तस्य शैथिल्यं शिथिलता गलनं तस्मादिति हेतौ पञ्चमी । कवरीभरात् केशवेशभारात् इति अपादाने पञ्चमी । सन्तानस्य देवतरोः । सूनानि पुष्पाणि । 'पुष्पं तु कुसुमं सुमम् । मणीचकं प्रसूनं च सूनं सुमनसः स्त्रियाम्' इति शब्दरत्नाकरः । तेषां सन्तानः सन्ततिः । नीरदान्मेघात्सलिलमिव न्यपतत् निपतितः । 'पत्लृ गतौ' इत्यतो लङ् । अत्र बिम्बप्रतिबिम्बभावापन्न-धर्मिका श्रौती पूर्णोपमा । यद्यप्यत्र वामनः 'हीनत्वाधिकत्वलिङ्गवचन-भेदासादृश्यासम्भवास्तद्दोषाः' इति लिङ्गभेदमुपमादोषत्वेनोक्तवान् । अस्ति चात्र सलिलमिव सन्तान इति लिङ्गभेदः । उदाहृतवांश्च 'सैन्यानि नद्य इव जग्मुरनर्गलानि' इति । तथापि पुन्नपुंसकयोरुपमानोपमेयभावौ न दोषायेत्याचख्यौ स एव । तथाच तत्सूत्रम् । 'इष्टः पुन्नपुंसकयोः प्रायेण' इति उदाजहार 'चन्द्रमिव मुखं पश्यामि' इति ।। ९३ ।।

**नीव्यामासामगाढायां जघनाहतवाससाम् ।**
**काञ्चीपदं बभौ स्वर्गिसुकृतां वेतनायितम् ।। ९४ ।।**

**नीव्यामिति** ।। नीव्यां अंशुकग्रन्थौ । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवीपरिपणेऽपि च' इत्यमरः । अगाढायाम् । 'गाढबाढदृढानि च' इत्यमरः । शिथिलायामित्यर्थः । जघनेनाहतं प्रतिहतं वासो वस्त्रं यासां तास्तथोक्ताः । तासां जघनाहतवाससाम् । आसां नृत्यन्तीनां अप्सरसाम् । काञ्चीपदं जघनं 'जघनं काञ्चीपदम्' इति हलायुधः । स्वर्गिसुकृतां स्वर्गिण एव सुकृतः पुण्यवन्तः । 'भूते सुकर्मपापपुण्यमन्त्रेषु कृञः' इति करोतेः क्विप् । 'ह्रस्वस्य पिति कृति तुक्' । तेषां वेतनायितं मूल्यमिवाचरितम् । 'भर्म वेतनम् । 'भरण्यं भरणं मूल्यम्' इत्यमरः । बभौ । 'भा दीप्तौ' इत्यतः कर्तरि लिट् । वेतनायितमित्यत्र इवशब्दस्य हर्षणादिधर्मस्य च स्फुटमनुपस्थितेर्लुप्तोपमालङ्कारः ।। ९४ ।।

**जगतीं बृंहयामास शब्दो जय जयेत्यथ ।।**
**द्युसदामयने यद्वत्प्रथमाम्भोदनिस्वनः ।। ९५ ।।**

**जगतीमिति** ।। अथ पुष्पवर्षलाभस्यानन्तरम् । द्युसदामयने मार्गे आकाशे । 'अयनं निलयो मार्गः' इति केशवः । प्रथमश्चसावम्भोदानां मेघानां निस्वनो यद्वद्ध्वनिरिव जय जय उत्कृष्टो वर्तस्वेतिशब्दो देवादिभिरीरितो जगतीं भूमिम् । बृंहयामास । 'बृहबृहि वृद्धौ' इत्यतो ण्यन्ताल्लिट् । पूरयामास । उपमालङ्कारः ।। ९५ ।।

**त्रेताग्न्यप्रतिमस्फूर्तिसूचिताच्युतसम्भवाः[1] ।**
**प्रसक्तिं मनसि प्रापुर्द्विजवर्या गताधयः ।। ९६ ।।**

**त्रेताग्नीति** ।। त्रेता चासावग्निश्च त्रेताग्निः आहवनीयादिः । यद्यपि

---

१. 'त्रेताग्निप्रसभस्पूर्तिसूचिताच्युतसम्भवाः' इति पाठान्तरम् ।

'त्रेता त्वग्नित्रये युगे' इत्यमरे अग्नित्रयवाचकस्त्रेताशब्द इत्युक्तं तथापि करिकलभ इत्यादाविवाग्निशब्दसन्निधानात् त्रित्वसंख्यामात्रवाचित्वम् । तस्याप्रतिमा अनुपमा असाधारणी स्फूर्तिः स्फुरणं प्रकाशः तया सूचितः ज्ञापितः अच्युतस्य भगवतः सम्भवः प्रादुर्भावः येषां ते तथोक्ताः । त्रेताग्नि-प्रसभस्फूर्तिसूचितेति पाठे प्रसभात् हठात् 'प्रसभं तु बलात्कारो हठः' इत्यमरः । तेन स्फूर्तिरुद्दीप्तिरित्यर्थः । अत एवं गताधयः गतः शान्तः आधिर्मानसी व्यथा येषां ते तथा । द्विजवर्याः ब्राह्मणश्रेष्ठाः । मनसि प्रसक्तिम् । सीदतेः स्त्रियां क्तिन् । प्रसादं प्रापु । 'आप्लृ व्याप्तौ' लिट् । प्राप्तवन्तः । अत्र प्रसादलक्षणभावोदयं प्रत्याधिरूपभावशान्तेरङ्गत्वात् भावोदयोऽलङ्कारः । 'भावस्योद्गमावस्था भावोदयः' इति तल्लक्षणात्
॥ ९६ ॥

**न वत्सारोपिता नैव दोग्धृणाम[1]प्यपेक्षकाः ।**
**परिसुस्रुवुरूधस्यं पशवः पीवरोधसः ॥ ९७ ॥**

**न वत्सारोपिता इति** ।। वत्सैरारोपिताः सङ्घट्टिता न दोग्धृणां दोहनकर्तृणामपि जनानां नैवापेक्षकाः । तथापि पीवराणि स्थूलानि ऊधांसि आपीनानि । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । स्त्रियामुपसंख्यानात् ऊधसो नञ् न भवति । पशवः गवाद्याः । उधस्यं ऊधसि भवम् । 'शरीरावयवा-द्यत्' । 'दुग्धं तु क्षीरमूधस्यम्' इति रत्नाकरः । परिसुस्रुवुः अन्तर्भावित-ण्यर्थात् 'सृ गतौ' इत्यतो लिट् । स्रावयाञ्चक्रुरित्यर्थः । तेन ऊधस्यमिति कर्मोपपत्तिः । अत्र वत्सारोपादिकारणाभावेऽपि दोहनरूपकार्यवर्णनात् विभावनालङ्कारः । 'विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ।

१. 'दोग्ध्रीणां' इति पाठान्तरम् ।

अप्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥' इति सोदाहरणं तल्लक्षणाभिधानात् । दोग्ध्रीणामित्यपि पठन्ति प्रायोदोहनकर्तृजनस्य स्त्रीत्वात् स्त्रीलिङ्गमिति तत्रार्थः ॥ ९७ ॥

**चराचराणां भूतानामभूतं परमान्तरम् ।**
**विकासं जनयामास कृष्णजन्ममहोत्सवः ॥ ९८ ॥**

**चराचराणामिति** ॥ कृष्णस्य नारायणस्य जन्म प्रादुर्भावः तस्य महानुत्सवः । चरा जङ्गमाश्च अचराः स्थावराश्च तेषां चराचराणां भूतानां प्राणिनाम् । अभूतं पूर्वमनुत्पन्नम् । परमुत्तमम् । आन्तरमन्तर्भवं मानसम् । विकासमुल्लासं जनयामास । जनी प्रादुर्भावे । उत्पादितवानित्यर्थः । अत्र चराणामचराणां च आन्तरविकासरूपधर्मैक्यवर्णनात् तुल्ययोगितालङ्कारः । 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति तल्लक्षणात् ॥ ९८ ॥

**सुकुमारं कुमारस्य रुचिमद्रूपमद्भुतम् ।**
**अग्र्यया सुकृतामग्रे ददृशे सुदृशा तया ॥ ९९ ॥**

**सुकुमारमिति** ॥ कुमारस्य बालस्य सुकुमारं मृदुलम् । 'सुकुमारश्च पुण्ड्रेक्षौ कोमले त्वभिधेयवत्' इति विश्वः । अत एव रुचिमत् कान्तिमत् । अद्भुतमाश्चर्यम् । रूपमाकृतिं विग्रहम् । 'रूपं स्वभावे शुक्लादौ सौन्दर्ये श्लोकशब्दयोः । ग्रन्थवृत्तौ नाटकादौ मनोज्ञे चाकृतौ पशौ' इति दर्पणः । सुकृतां साधुकारिणीनाम् । निर्धारणे षष्ठी । अग्र्यया श्रेष्ठया तया सुदृशा देवक्या अग्रे पुरोभागे ददृशे । 'दृशिर् प्रेक्षणे' कर्मणि लिट् । दृष्टम् । अत्र भगवद्रूपदर्शनलक्षणकार्यानुकूलपुण्यशालितया वर्णनाद्धेतुरलङ्कारः । यद्वा अद्भुतस्य भगवद्रूपस्य दर्शनम् अन्यासुकरं सुकृतामग्र्ययेति समर्थितमिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ९९ ॥

**नीलोत्पलदलश्यामे तस्मिन्नतिविकासिनी ।**
**निधाय नयने देवी व्यस्मरत्सूतिवेदनाम् ।। १०० ।।**

**नीलोत्पलेति** ।। देवी देवकी । नीलं च तदुत्पलं च तस्य दलमिव श्यामं नीलनीलम् । तस्मिन् रूपे अतिविकासिनी अत्यन्तं विकसनशीले । नयने निधाय विन्यस्य । सूतिवेदनां सूत्या प्रसूतेः वेदनां क्लेशम् । व्यस्मरत् विस्मृतवती । 'स्मृ चिन्तायाम्' इति धातोर्लङ् । शेषत्वस्य विवक्षितत्वात् 'अधीगर्थदयेशां कर्मणि' इति षष्ठी न भवति । अत्र नयननिधानेन व्यज्य-मानस्य हर्षाख्यभावस्य वेदनाशान्तिं प्रत्यङ्गत्वाद्भावोदयोऽलङ्कारः ।। १०० ।।

**पाद्मनाभावतारोऽयं विरेजे राजमन्दिरे ।**
**सुमेरुशिखरे यद्वत्सद्यः सारिद्वरः परः ।। १०१ ।।**

**पाद्मनाभ इति** ।। राजमन्दिरे वसदेवसद्मनि । पाद्मनाभः पद्मनाभस्यायं पाद्मनाभः । पद्माकारा नाभिर्यस्येति गौणेन पद्मशब्देन सामानाधिकरण्या-द्बहुव्रीहिः । यद्वा पद्मं नाभौ यस्येति विग्रहः गड्वादित्वात्सप्तम्याः परनिपातः । 'अच्प्रत्यन्ववपूर्वात्' इत्यत्र अजिति योगविभागात् नाभि-शब्दादपि अजिति वैय्याकरणाः । अवतारः आविर्भावः । सुमेरुपर्वतस्य शिखरे शृङ्गे । पर उत्तमः । सरिद्वरायाः गङ्गायाः अयं सारिद्वरः यद्वत् गङ्गावतार इव । सद्यः समानेऽति तस्मिन् दिने । विरेजे । 'राजृ दीप्तौ' । शुशुभे । अत्र अवतारशब्दः 'अवेतॄस्त्रोघञ्' इति करणादौ सञ्ज्ञायां घञन्ततया व्युत्पादितः न तु भावे । यदाह वामनः– 'अवतारापचययो-र्दीर्घव्यत्यासो बालिशानाम्' इति । 'ॠदो रप्' इत्यप्प्रत्यये अवतर

इति वक्तव्ये अवतार इति अपचाय इति वाच्ये अपचय इति विनिमयेन दीर्घं ह्रस्वं च उच्चारयन्तः अप्रेक्षावन्त इति सूत्रार्थः । तथाच अवतार इति कथं प्रयुज्यते इति चोद्यं प्रायग्रहणानुवृत्तेरसञ्ज्ञायामपि घञ् भवतीति वदन् वृत्तिकारः पर्यहार्षीत् । तेनात्रापि अवतरन्त्यनेन गुणचरित्राणीत्यवतारः प्रादुर्भाव इत्यसञ्ज्ञायामपि करणे घञुत्पादयितुं शक्यत इति अवतारशब्दः साधुः । उपमालङ्कारः ।। १०१ ।।

**ननन्द वसुदेवोऽपि कथञ्चिद्विगतव्यथः ।**
**गोविन्दं गोकुलं नीत्वा भोजराजभयार्दितः ।। १०२ ।।**

**ननन्देति** ।। वसुदेवोऽपि न केवलं देवकीत्यपिशब्दः । भोजराजात् भयं भोजराजभयम् । 'भीत्रार्थानां भयहेतुः' इति भोजराजस्यापादानत्वम् । तेन अर्दितः पीडितः सन् । गोविन्दं वेदप्रतिपाद्यं भगवन्तं कथञ्चित् कृच्छ्रेण गोकुलम् । नयतेर्द्विकर्मकत्वादुभयत्र द्वितीया । नीत्वा प्रापय्य । विगतव्यथः शान्तदुःखः सन् ननन्द । 'टुनदि समृद्धौ' इत्यतो लिट् । सन्तुष्टवान् । अत्र भयार्दनगोकुलनयनव्यथाशान्त्यानन्दानां क्रमादेककर्तृनिष्ठत्वेन वर्णनात् कारकदीपकमलङ्कारः । 'क्रमिकैकगतानां तु गुम्भः कारकदीपकम्' इति लक्षणात् ।। १०२ ।।

**नन्दोऽपि च जनानन्दवर्द्धनं प्रियदर्शनम् ।**
**दृष्टवानष्टमं देव्या देवक्याः सूनुमात्मजम् ।। १०३ ।।**

**नन्दोऽपि चेति** ।। नन्दोऽपि च वसुदेवेन नन्दसमुच्चयाय अपि चेत्युक्तम् । जनानामानन्दं वर्द्धयतीति जनानन्दवर्धनः तम् । नन्द्यादित्वा-त्कर्तरि ल्युः । प्रियं दर्शनं यस्य तं प्रियदर्शनं दर्शनीयरूपमित्यर्थः ।

देवक्याः देव्याः अष्टमं सूनम् । आत्मजं दृष्टवान् स्वपुत्रत्वेन ज्ञातवान् ।। १०३ ।।

**गृहीत्वा गृहिणी तस्य यशोदा यशसां निधिम् ।**
**प्रमोदात्[1] पालयामास भुवनत्रयपालिनम् ।। १०४ ।।**

**गृहीत्वेति** ।। तस्य नन्दस्य गृहिणी यशोदा । यशसां कीर्तीनां निधिं स्थानम् । भुवनत्रयपालिनं भुवनानां भूरादीनां त्रयं पालयितुं शीलमस्येति ताच्छील्यविशिष्टे कर्तरि णिनिः । तेन च भुवनपालनेन न तस्याप्तव्यं प्रयोजनमस्तीति सूचितम् । तथा च श्रुतिः 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति भगवन्तम् प्रमोदाद्धर्षात् । प्रमादादिति पाठे 'भीत्रार्थानाम्' इत्यपादाने पञ्चमी ल्यब्लोपनिमित्ता वा । सा प्रमादं विहाय पालयामास । 'पाल रक्षणे' लिट् । रक्षितवती । अत्र यशोनिधौ यशोदानं भुवनपालनशीले पालनीयत्वं चोपवर्ण्यत इति सम्बन्धातिशयोक्तिरलङ्कारः ।।१०४।।

**लीनस्याग्नेर्यथा काष्ठे निजमोजो जगत्पतेः ।**
**आविर्बभूव पर्याप्तं पर्यायेण दिने दिने ।। १०५ ।।**

**लीनस्येति** ।। काष्ठे लीनस्य श्लिष्टस्य । अग्नर्यथा अग्नेरिव । प्रकरणात् शिशुभावे स्थितस्य जगत्पतेः । निजं स्वकं नित्यं वा । 'स्वके नित्ये निज त्रिषु' इत्यमरः । ओजः प्रभावः अन्यत्र दीप्तिः । 'ओजो दीप्तौ बले' इत्यमरः । पर्यायेण अनुक्रमेण । दिने दिने प्रतिदिनम् । पर्याप्तं परिपूर्णं सत् । आविर्बभूव । 'भू सत्तायां' प्रकाशितं बभूव । उपमालङ्कारः ।। १०५ ।।

१. 'प्रमादात्' इति पाठान्तरम् ।

**ये ये याता हरेः पार्श्वं कंसदासा महौजसः ।**
**ते ते विनिहतास्तेन पतङ्गा इव वह्निना ॥ १०६ ॥**

**येये इति** ॥ महदोजः प्रभावो येषां ते महौजसः । कंसस्य दासाः । जिघांसयेति शेषः । ये ये हरेः कृष्णस्य पार्श्वम् । समीपमित्यर्थः । याताः प्राप्ताः ते ते वह्निना पतङ्गाः शलभा इव । 'समौ पतङ्गशलभौ' इत्यमरः । तेन कृष्णेन निहताः हिंसिताः । अत्र हन्तुमागता इतीष्टप्राप्त्युद्योगेऽनिष्टावाप्तिवर्णनात् विषमालङ्कारः ॥ १०६ ॥

**स किशोरशरीरश्रीर्मानुषे विभ्रमे रतः ।**
**नन्दयामास गोविन्दो वृन्दावन[1]निवासिनः ॥ १०७ ॥**

**स किशोरेति** ॥ किशोरः अश्वार्भकः । 'बालः किशोरः' इत्यमरः । बालोऽश्वबालकः । अत्र च तेन शब्देन बालमात्रं सादृश्यादुपचर्यते । तस्य यत् शरीरं तस्य श्रीरिव श्रीः कान्तिर्यस्य अश्वबालकशोभासौकुमार्यं यस्येति वा । स किशोरशरीरश्रीः । सः श्रीहरिः । मानुषे मनुष्यसम्बन्धिनि । 'मनोर्जातावञ्यतौ षुक्च' इति आपत्ये मनुष्यशब्दाद्यत् षुक्चागमः । ततः 'तस्येदम्' इति अणि 'आपत्यस्य च तद्धितेनाति' इति यलोपः । विभ्रमे विलासे । रतः आसक्तः । 'विभ्रमो भ्रान्तिशोभयोः । विलासे संशये च' इति दर्पणः । गोविन्दः श्रीकृष्णः वृन्दावने साधु निवसन्तीति वृन्दावननिवासिनः । वृन्दारण्येति पाठेऽप्येष एवार्थः । नन्दयामास आनन्दं प्रापितवानित्यर्थः । वृन्दावनजनानन्दनस्य कार्यस्य मानुषे विभ्रम इति हेतोर्वर्णनात् हेतुरलङ्कारः ॥ १०७ ॥

---

१. 'वृन्दारण्य' इति पाठान्तरम्

**सुवेषा मृदुभाषिण्यः प्रणयात्परिवव्रिरे ।**
**नवनीतमुषं यद्वत्कलभं करिणीगणाः ।। १०८ ।।**

**सुवेषा इति** ।। शोभनाः वेषाः अलङ्काररचनाः यासां ताः तथा । 'आकल्पवेषौ नेपथ्यम्' इत्यत्र वेषोऽलङ्काररचितशोभा इति तद्व्याख्यातारः । मृदु कोमलं यथा तथा भाषितुं शीलमासामिति मृदुभाषिण्यः । गोप्यः नवनीतस्य मुषं चोरं नवनीतचोरं कृष्णम् । करिणीगणा गजाकूटाः । कलमं यद्वत् करिपोतमिव । 'कलभः करिशावकः' इत्यमरः । प्रणयात् प्रेमातिशयात् । 'प्रेमानीत प्रकर्षं चेत्स एव प्रणयो मतः' इत्यालङ्कारिकाः । परिवव्रिरे । 'वृञ् वरणे' लिट् । आवृतवत्यः । उपमालङ्कारः ।। १०८ ।।

**रममाणः सरामोऽसौ रामाभिः सह गोकुले ।**
**वनमालाकृताकल्पो लेभे लक्ष्मीमनुत्तमाम् ।। १०९ ।।**

**रममाण इति** ।। सरामः रामेण बलरामेण सहितः । असौ कृष्णः । गोकुले रामाभिः रमणीभिः रममाणः क्रीडन् । वनमालया 'आपादपद्मं या माला वनमालेति सा मता' इत्युक्तलक्षणया स्रजा कृतः आकल्पः अलङ्काररचना येन स वनमालाकृताकल्पस्सन् । न विद्यते उत्तमा यस्यास्सा अनुत्तमा ताम् । लक्ष्मीं शोभां लेभे । 'डुलभष् प्राप्तौ' लिट् । प्राप्तवान् । अत्रासंलक्ष्यक्रमः शृङ्गारध्वनिः ।। १०९ ।।

**सिंहो सामोद्भवेनेव राज्ञा कंसेन तावुभौ ।**
**आहूतौ हन्तुकामेन जग्मतुर्मधुरां पुरीम् ।। ११० ।।**

**सिंहाविति** ।। हन्तुकामेन राज्ञा कंसेन । सामोद्भवेन गजेन । सिंहाविव 'सिन्धुरः सामजः कुम्भी' इत्यमरशेषः । तावुभौ कृष्णबलरामौ ।

आहूतौ आकारितौ सन्तौ । मधुरापुरी जग्मतुः । 'गम्लृ गतौ' इत्यतो लिट् । गतवन्तौ । उपमालङ्कारः ।। ११० ।।

**चाणूरमुष्टिकौ ताभ्यां नृत्यद्भ्यां रणमण्डले ।**
**निहतौ कृष्णरामाभ्यां व्याघ्राभ्यामिव जम्बुकौ ।। १११ ।।**

**चाणूरमुष्टिकाविति** ।। रणमण्डले आयोधनदेशे । 'मण्डलं त्रिषु कूटे स्यादुपसूर्यकदेशयोः' इति रत्नमाला । नृत्यद्भ्यां ताभ्यामाहूताभ्यां कृष्ण-रामाभ्यां व्याघ्राभ्याम् । जम्बुको सृगालाविव । 'शृगालवञ्चकक्रोष्टु-फेरुफेरवजम्बुकाः' इत्यमरः । चाणूरश्च मुष्टिकश्च चाणूरमुष्टिकौ तन्नामानौ मल्लौ निहतौ । उपमालङ्कारः ।। १११ ।।

**नित्यं निन्दन्मुकुन्दं तं मञ्चतः पातितो भुवि ।**
**पञ्चतामापितः कंसस्तेनान्धं च तमोऽसुरः ।। ११२ ।।**

**नित्यमिति** ।। मुकुन्दं नित्यं सदा । निन्दन् कुत्सयन् । मञ्चतः 'अपादाने चाहीयरुहोः' इत्यपादाने तसिः । मञ्चात् भुवि पातितः । कंसः तेन मुकुन्देन । पञ्चतां मृतिम् । 'स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽ-त्ययः' इत्यमरः । प्रापितः नीतः । असुरः कालनेमिनामा । अन्धयतीत्यन्धं गाढं तमः । नित्यनिरयमिति यावत् । प्रापितश्च । अत्र मञ्चात्पातनं पञ्चताप्रापणं तमोनयनं चेति क्रमिकाणामेकगतानां क्रियाणां गुम्फनवर्णनात् कारकदीपकमलङ्कारः ।। ११२ ।।

**तौ शृङ्खलात्कंसभयादिवासौ विमोक्ष्य मातापितरौ ववन्दे ।**
**आलिङ्गितश्चाश्रुजलाभिषिक्तस्ताभ्यामतिस्नेहरसातुराभ्याम्**
**।। ११३ ।।**

**तावितिति** ।। असौ कृष्णः । तौ प्राप्तशृङ्खलौ । मातापितरौ माता च पिता च मातापितरौ 'आनङ् ऋतो द्वन्द्वे' इति आनङ् । कंस-भयादिव । शृङ्खलात् निगडात् 'अथ शृङ्खले । अन्दुको निगडोऽस्त्री स्यात्' इत्यमरः । विमोक्ष्य मोक्ष असने मोचयित्वा । ववन्दे 'वदि अभिवादन-स्तुत्योः' लिट् । नमस्कृतवान् । अतिस्नेहरसातुराभ्याम् अतिशब्दस्वति-पूजायामिति गतिसञ्ज्ञा । अतिशयितः स्नेहः अतिस्नेह इति प्रादिसमासः । तस्य रसो द्रवः । परिपाक इति यावत् । तेनातुराभ्यां परवशाभ्यामित्यर्थः । 'आतुरोऽभ्यमितोभ्यान्तः' इत्यमरः । ताभ्यां मातापितृभ्याम् । आलिङ्गित उपगूहितः । अश्रुजलेन आनन्दबाष्पेण अभिषिक्तः क्लिन्नश्च । अत्र पूर्वार्धे भयादिव शृङ्खलादिति समुच्चितोपमा । उत्तरार्धे आलिङ्गितादिपदव्यज्य-मानहर्षं प्रति भयादिभावशान्तेरङ्गत्वात् समाहितमलङ्कारः ।। ११३ ।।

**यदुकुलतिलकः कुले प्रवृद्धं गुरुतरविक्रममुग्रसेनमेषः ।**
**च्युतनिजपदमात्मजापराधात्पुनरकरोदधिपं मुदा यदूनाम्**
**।। ११४ ।।**

।। इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यविरचिते
उषाहरणे महाकाव्ये प्रथमस्सर्गः ।। १ ।।

**यदुकुलतिलक इति** ।। यदूनां कुलं तस्य तिलको ललामायितः । एष श्रीकृष्णः । कुले यदुवंशे प्रवृद्धमेधितम् । गुरुतरविक्रमं गुरुतरः विक्रमः पराक्रमोऽतिशक्तित्वं यस्य स गुरुतरविक्रमः तम् । उग्रसेनं कंसपितर-मुग्रसेननामानम् । आत्मजस्यापराधात् च्युतं भ्रष्टं निजं स्वकं स्थानं यस्य तम् । पुनरपि मुदा सन्तोषेण । यदूनामधिपमधिपतिम् । अधिपूर्वापातेः

'आतश्चोपसर्गे कः' इति कः । अकरोत् करोतेर्लङ् कृतवान् । अत्र कुले प्रवृद्धं गुरुतरविक्रममिति विशेषणद्वयं राज्ययोगगुणवत्ताभिप्रायगर्भमिति परिकरालङ्कारः । तौ शृङ्खलादित्युपजातिः । यदुकुलतिलक इति पुष्पिताग्रावृत्तं च । 'सर्गाद्या नातिविस्तीर्णा भूयांसश्च सुसन्धयः । भिन्नान्त्यवृत्ताः प्रायेण वृत्तेनैकेन निर्मिताः ।।' इति चिन्तामणिवचनात् पथ्यावक्रात् विलक्षणमुक्तम् । तथा च दण्डी– 'सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम्' इति ।। ११४ ।।

**।। इति श्रीमदित्यत्र ग्रन्थे इतिशब्दः समाप्तिवचनः । यदाहामरः 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इति । प्रथमः सर्गः इति समाप्त इति व्याख्यानं द्रष्टव्यम् । काव्यपरिच्छेदेषु सर्ग इति तल्लक्षणाभिज्ञसमयः ।।**

**।। इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यविरचितो-षाहरणाख्यमहाकाव्यव्याख्यायां रसिकरञ्जिनीसमाख्यायां सूरीन्द्रतीर्थपूज्यचरणशिष्यसुमतीन्द्रयतिविरचितायां प्रथमस्सर्गः ।। १ ।।**

# ।। अथ द्वितीयः सर्गः ।।

अथेदानीं कविर्द्वितीये सर्गे कालयवनवधद्वारकानिर्माणादिकृष्णचरितं निबद्धमारभते–

**कृष्णेन कंसात्ययजातकोपे जिते जरासन्धनृपे सुखेन ।**
**अन्वेषयामास समग्रसैन्यः प्रत्यर्थिलोकं यवनाधिराजः**
**।। १ ।।**

**कृष्णेनेति** ।। कृष्णेन कंसस्य अत्ययः विनाशः । 'अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः' इति विश्वः । तेन जातः कोपो यस्य सः कंसात्ययजातकोपः तस्मिन् जरासन्धाख्ये नृपे । सुखेन अनायासेनेति यावत् । जिते पराजिते सति । यवनाधिराजः कालयवनः । समग्रं सैन्यं सेना यस्य स सन् । 'चक्रं सैन्यं बलं सेना' इति रत्नाकरः । प्रत्यर्थिलोकं शत्रुजनम् । अन्वेषयामास । 'इषु गतौ' इत्यतो ण्यन्ताल्लिट् मार्गयामास । अत्र कंसजरासन्धौ जितवतः श्रीकृष्णस्यान्वेषणमसम्भाव्यमानं समर्थनीयं समग्रसैन्य इति पदार्थेन समर्थ्यत इति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रत्यर्थिनः कृष्णस्य आलम्बनविभावस्य कंसादिजयस्योद्दीपनविभावस्य आधिराज्यसैन्यमदादि सञ्चारिभावस्य च वर्णनादसंलक्ष्यक्रमो वीररसध्वनिः । यदाह वीरनारायणः– 'यथार्हालम्बनस्तत्तद्गुणवागादिदीपितः । प्रसन्नमुख-रागाद्यैरनुभावैश्च भावितः । उत्साहोपचयो वीरो बलसत्वादिभावनात् । दानवीरो दयावीरो युद्धवीरश्च स त्रिधा । तत्रालम्बलमाख्यातं युद्धवीरस्य शत्रवः ।।' इति । अत्र सर्गे इन्द्रवज्रोपेन्द्रवज्रयोर्मिश्रणादुपजातिर्वृत्तम् ।। १ ।।

**विनिर्मथन्नुच्छिरसः पृथिव्यां स पार्थिवानाहवदोहलात्मा ।**
**कण्डूतिचण्डीकृतहस्तदण्डः प्रभिन्नदन्तीव बभूव भूयः।।२।।**

**विनिर्मथन्निति** ।। आहवे युद्धे । 'अभिपातः सङ्गर आहव आक्रन्द-युद्धे' इति शब्दरत्नाकरः । दोहलं श्रद्धा आत्मा स्वभावो यस्य स तथोक्तः । 'श्रद्धा दोहलदोहदे' इत्यमरः । पृथिव्यां भूमौ । उच्छिरसः उन्नतमस्तकान् । अन्यत्र उदग्रशिखरान् । 'शिरः प्रधानसेनाग्रभूरुहा-द्यग्रमूर्धसु' इति कविदर्पणः । पार्थिवान् भूपान् वृक्षांश्च । 'राजा राट् पार्थिवः क्ष्माभृन्नृपभूपमहीक्षित' इत्यमरः । पृथिव्याः ईश्वरा इत्यर्थे 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यञ् प्रत्ययः । अन्यत्र 'तत्र भवः' इत्यण् प्रत्यये पृथिव्यां भवान् वृक्षानित्यर्थः । भूयः पुनः पुनः । विनिर्मथन् मथे विलोडने* क्र्यादिः लोडयन् । कण्डूत्या कण्ड्वा 'कण्डूतिः कण्ड्वा कण्डुः कण्डूयनं तथा कण्डूः' इति हलायुधः । चण्डीकृतः क्रूरीकृतः हस्त-दण्डः बाहुदण्डः । अन्यत्र शुण्डादण्डो यस्य स तथा । 'हस्तो नक्षत्र-शुण्डयोः । पाणिप्रकोष्ठयोश्च' इति कविदर्पणः । स कालयवनः । प्रभिन्नः मत्तश्चासौ दन्ती गज इव । 'प्रभिन्नो गर्जितो मत्तः' इत्यमरः । बभूव भूसत्तायां लिट् । अत्र श्लेषानुप्राणितोपमालङ्कारः ।। २ ।।

**प्राप्तः प्रभावं वरतः पुरारेः प्रागल्भ्यवान्प्राज्यमनल्पवीर्यान् ।**
**आकर्ण्य वृष्णीन्बलकृष्णगुप्तान्बबन्ध वैरं मधुपुङ्गवेषु[1]**
**।। ३ ।।**

---

* मथे विलोडने इति भ्वादावेवास्ति । क्र्यादौतु मन्थ इत्येव । किञ्चात्र मथन्निति रूपं भ्वादिगणपाठ एव युज्यते ।

१. 'यदुपुङ्गवेषु' इति पाठान्तरम् ।

**प्राप्त इति** ।। पुरारेर्हरस्य वरतः । प्राज्यमदभ्रं प्रभावं कोशजं तेजः । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः । 'प्रभावः शक्तितेजसोः' इति कविदर्पणोक्तेः । शक्तिं पराक्रममिति वा । प्राप्तः अत एव प्रागल्भ्यवान् धाष्ट्र्यवान् । स कालयवनः । बलकृष्णगुप्तान् बलभद्रेण श्रीकृष्णेन च गुप्तान् रक्षितान् । अनल्पं वीर्यं पराक्रमो येषां ते तथा । वृष्णीन् आकर्ण्य श्रुत्वा । मधूनां श्रेष्ठेषु मधुपुङ्गवेषु । यादव-श्रेष्ठेष्वित्यर्थः । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरोक्तेरुत्तरपदत्व एव श्रेष्ठ्यार्थकत्वात् । अस्वपदविग्रह एव । यदुपुङ्गवेष्विति क्वचित्पाठः । वैरं विद्वेषम् । बबन्ध 'बन्ध बन्धने' लिट् । कृतवानित्यर्थः । अत्र बलकृष्णरक्षिततया अनल्प-वीर्येषु माधवेषु वैरानुबन्धो नार्ह इति समर्थनीयस्यार्थस्य पूर्वार्धवाक्यार्थेन समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । शब्दालङ्कारस्तु स्फुटः ।। ३ ।।

**तमापतिष्यन्तमनन्तरायं युगान्त उद्यन्तमिवांशुमन्तम् ।**
**तपन्तमुग्रेण जगन्ति धाम्ना क्षणादबुध्यन्त यदुप्रवीराः ।। ४ ।।**

**तमापतिष्यन्तमिति** ।। यदुप्रवीराः यदुश्रेष्ठाः । युगान्ते प्रलयकाले । उद्यन्तम् उदयं प्राप्नुवन्तम् । अंशुमन्तं सूर्यमिव । जगन्ति लोकान् । उग्रेण धाम्ना तेजसा । तपन्तम् । अनन्तरायं न विद्यते अन्तरायो विघ्नो यस्य सः तथोक्तम् । असङ्ख्यातधनमिति वा । आपतिष्यन्तम् आगमिष्यन्तम् । तं यवनम् । क्षणात् अल्पकालात् । 'क्षणे व्यापारकैवल्ये कालभेदाल्पकालयोः' इति यादवः । झटितीत्यर्थः । अबुध्यन्त 'बुध अवगमने' लङ् । अवगतवन्तः उपमालङ्कारः ।। ४ ।।

**आज्ञां पुरस्कृत्य हरेरुदारां सभां सुधर्मामवदातभासः ।**
**सिषेविरे वारिमुचो यथाऽऽदौ स्थलीं हिमाद्रेश्शरदि प्रवेकाः ॥ ९ ॥**

**आज्ञामिति** ॥ अवदातभासः अवदाता उज्ज्वला वलक्षा च भाः येषां ते तथोक्ताः यदुप्रवीरा इति संयोज्यम् । हरेः कृष्णस्य अन्यत्रेन्द्रस्य । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । हरिः' इत्यमरः । आज्ञामादेशं पुरस्कृत्य । आदौ शरदि शरत्कालारम्भे । हिमाद्रेः हिमवत्पर्वतस्य । स्थलीमकृत्रिमप्रदेशम् । 'जानपद' इत्यादिना ङीष् । प्रवेका उत्तमाः वारिमुचो यथा मेघा इव । उदारां महतीम् । 'उदारो दातृमहतोः' इत्यमरः । सुधर्मां सुधर्मनामिकाम् । सुधर्मासदृशीमिति गौणीवृत्तिः । तेन द्वारकानिर्माणात्पूर्वं सुधर्माया अभावात् । कथमियमुक्तिरिति चोद्यमनवकाशम् । केचित्तु कंसवधानन्तरं मधुरायामेव 'इत्युक्तः पवनो गत्वा सर्वमाह शरीपतिम् । ददौ सोऽपि सुधर्माख्यां सभां वायोः पुरन्दरः । वायुना चाहृतां दिव्यां सभां ते यदुपुङ्गवाः । बुभुजुः सर्वरत्नाढ्यां गोविन्दभुजपालिताः ॥' इति विष्णुपुराणे द्वारकानिर्माणात्पूर्वमेव सुधर्माया अवस्थानाभिधानात् न गौणी वृत्तिराश्रयणीया । न चैवं 'सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः' इति भागवते । 'सभां सुधर्मनामिकां ददौ समीरणोऽस्य च । शतक्रतो सभां तु तां प्रदाय केशवाय सः ॥' इति तात्पर्यनिर्णये च द्वारकायामेव सुधर्मानयनाभिधानात् तद्विरोध इति वाच्यम् । पूर्वं मधुरायां स्थितायाः स्वर्गं नीतायाश्च सुधर्मायाः पारिजातवृक्षस्येव पुनर्द्वारकां प्रत्यानयनसम्भवात् । वक्ष्यति च कविः 'समग्रसंसर्गभुवं सुराणामिति' अत एवाग्नेयपुराणे शतोत्तरनवमेऽध्याये 'उग्रसेने नृपेऽथाभून्मधुरायां

महोत्सवः । सुधर्मां पारिजातं च स्वराट् तस्मै समार्पयत् ।।' इति मधुरायां सुधर्मायापनमभिधाय । तत्रैव शतोत्तरत्रयोदशाध्याये । 'इन्द्रस्सुधर्मां सुसभां सुरद्रुमैर्यत्र स्थिता स्युर्न षडूर्मिबाधिताः । अथोग्रसेनाय समर्पयद्रहः शङ्खादिकानैलविलोमिधींस्तथा ।।' इति द्वारकायामपि सुधर्मार्पणमुक्त-मित्याहुः । सभां सिषेविरे । 'षेवृ सेवायाम्' इत्यतो लिङ् प्राप्तवन्त इत्यर्थः । श्लेषानुप्राणितोपमालङ्कारः ।। ५ ।।

**उद्बुद्धसन्तानकपारिजातप्रसूनमालानिकराभिषङ्गात् ।**
**पुरातनादेव सुगन्धिभावं बभार[1] यस्याः परितः प्रदेशः**
**।। ६ ।।**

उद्बुद्धेति ।। यस्याः सुधर्मायाः । प्रदेशः परितः समन्तात् । पुरातनात् प्राचीनात् देवरचितात् । सन्तानकः सन्तानानामकदेवतरुश्च पारिजातश्च तयोः प्रसूनानि कुसुमानि उद्बुद्धानि विकसितानि च तानि सन्तानपारिजात-प्रसूनानि च तेषां मालाः स्रजः तासां निकरः समूहः तस्याभिषङ्गः सम्बन्धस्तस्मात् । 'अभिषङ्गस्तु सङ्गे स्यादाक्रोशेऽभिभवेऽपि च' इति दर्पणः । 'उपसर्गात्सुनोति' इत्यादिना षत्वम् । शोभनो गन्धो यस्यास्सा सुगन्धिः 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति समासान्त इत् । तस्याः भावं सौरभ्यं बभार । तां सभां सिषेविरे इत्यन्वयः । बिभर्तीति पाठे स्मपद-मध्याहार्यम् । यद्वा 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । या बिभर्ति तामिति । अत्र पुरातनादेवेत्येवशब्देन मनुष्यरचितात् सौगन्ध्यं निषिध्य देवकृतात् सौरभ्यमिति वस्तुनोऽन्यत्र नियन्त्रणात् परिसङ्ख्यालङ्कारः । 'परिसङ्ख्यानिषिध्यैकमन्यस्मिन् वस्तुयन्त्रणम्' इति तल्लक्षणात् ।। ६ ।।

१. 'बिभर्ति' इति पाठान्तरम्

**सौवर्णकुड्यप्रतिघट्टितैर्या हरिन्मणीनां निकरैर्विभाति ।**
**शचीपतेः सादरदृष्टिपातैरक्ष्णां सहस्रेण कलङ्कितेव ।। ७ ।।**

**सौवर्णेति** ।। या सभा । सुवर्णस्य विकाराः सौवर्णानि कुड्यानि भित्तयस्तेषु प्रतिघट्टितैः प्रत्युप्तैः । हरिन्मणीनां मरकतरत्नानाम् । 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इत्यमरः । निकरैः समूहैः । शचीपतेः इन्द्रस्य । अक्ष्णां नेत्राणां सहस्रेण कर्त्रा । सादरदृष्टिपातैः सप्रेमावलोकनैः । कलङ्कितेव सञ्जातनैल्येव । विभाति तां सुधर्मामित्यन्वयः । अत्र सिद्धविषयहेतूत्प्रेक्षालङ्कारः ।। ७ ।।

**यत्र स्त्रियां लास्यविलासलोले[१]**
**मध्ये मनः पीनपयोधराणाम् ।**
**मुमोच जिह्मावलिरोम्णि मग्नं**
**दिवौकसां नाट्यरसानुभूतिम् ।। ८ ।।**

**यत्रेति** । यत्र सभायाम् । पीनाः पृथुलाः पयोधराः स्तनाः येषां ते तथोक्ताः तेषाम् । स्त्रियां स्त्रीवदाचरतां वेषधारिपुरुषाणाम् । स्त्रीशब्दात् 'सर्वप्रातिपदिकेभ्यः क्विबाचारे' इत्याचारार्थकक्विबन्तात्कर्तरि क्विपि अस्त्रीति पर्युदासाप्रवृत्त्या 'नेयङुवङ् स्थानावस्त्री' इति नदीसञ्ज्ञानिषेधेन नदीसञ्ज्ञाप्रयुक्तनुडागमाभावात् 'अचि श्नुधातु' इतीयङादेशः सुप्रसरः । लास्यं नृत्तं तस्य विलासो विभ्रमः तेन लोलं चलं तस्मिन् लास्यविलामलोले । जिह्मावलिरोम्णि जिह्मा कुटिला । 'जिह्मं कपटवक्रयोः' इति शेषः । आवलिः पङ्क्तिः येषां तानि तथाविधानि रोमाणि यस्य तस्मिन् । मध्ये

१. 'स्त्रीणां यतो लास्यविलासलोले' इति पाठान्तरम् ।

अवलग्ने । मग्नं सक्तम् । दिवौकसां दिवमोको येषां तेषां देवानाम् । दिवशब्दोऽदन्तोऽप्यस्ति दिवं 'मन्दरः सैरिभः शक्रभवनं खं (दिवं) नभः' इति शेषः । मनश्चित्तम् । नाट्यरसानुभूतिं नाट्यरसस्य शृङ्गारादेरनुभवं मुमोच । 'मुच्लृ मोक्षणे' लिट् । नृत्यज्जनमध्यमग्नमानसानां देवानां नाट्यरसानुभवो नासीदिति भावः । अत्र स्त्रीवेषधारिणां पुरुषाणामप्यवलग्ने देवानां मनो लग्नं किमु स्त्रीणामवलग्ने इतरपुरुषाणां मनो लगतीति काव्यार्थापत्तिरलङ्कारः । यद्वा यत्र सभायां नाट्यविलासलोले मध्ये नृत्यन्त्यां जिह्मावलिरोम्णि स्त्रियां वनितायां लग्नम् । दिवौकसां पीनपयोधराणां देवसम्बन्धिनीनां पीनस्तनीनामप्सरसां मनः । नाट्यरसानुभूतिं मुमोच । अप्सरस्त्रीजनोऽप्याश्चर्यपरवशो नृत्यद्वनितासौन्दर्यमेवापश्यत् न तु तन्नाट्यमिति भावः । स्त्रीणां यतो लास्यविलासलोले इति पाठे यतो यत्रेत्यर्थः । अन्वयस्तु सुगमः द्वितीयतृतीययोरपि पक्षयोः पूर्ववदेव काव्यार्थापत्तिः ।। ८ ।।

**समग्रसंसर्गभुवं सुराणामुपास्तिभाजां त्रिदिवेश्वरस्य ।**
**यां सम्पदां धाम गरीयसीनां प्रीतोऽनुजाय प्रदिदेश शक्रः ।। ९ ।।**

**समग्रेति** ।। त्रिदिवेश्वरस्य नाकनायकस्य उपास्तिभाजाम् उपासनाजुषाम् । वसेस्तिरिति विधीयमानस्तिप्रत्ययो बाहुलकादुपपूर्वादासेरपि भवति शास्तिरिति यथा । तथा च रत्नाकरः 'उपास्तिः स्यात्पत्युः सेवासमाश्रये' इति । उपास्तिशब्दस्य वेतनादिषु पाठात् उपपूर्वादासेः क्तिनि उपास्तिशब्दोऽप्यस्ति । तथाचोदयनप्रयोगः । 'स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः । यदुपास्तिमसावत्र परमात्मा निरूप्यते ।।' इति हरिदीक्षितः । सुराणां समग्रसंसर्गभुवं समग्रः सम्पूर्णो यः संसर्गः समवायः तस्य स्थानम् ।

गरीयसीनाम् अतिगुर्वीणाम् । सम्पदां धाम आश्रयभूतां यां सभाम् । शक्रः प्रीतस्सन्ननुजाय उपेन्द्राय कृष्णाय । प्रदिदेश । दिश अतिसर्जने लिट् । दत्तवान् । तामित्यन्वयः । उदात्तालङ्कारः । सभायाः सकलसम्पत्समृद्धिवर्णनात् ।। ९ ।।

उद्बुद्धेत्यादिचतुश्श्लोक्या विशेषककाव्याख्यया सभा विशेषिता । अथेदानीं तत्र मिलितानां यादवानां महाकाव्याङ्गभूतं मन्त्रं वर्णयितुमारभते–

**पार्श्वे नरेन्द्रस्य समाजभूमौ सुखोपविष्टं सममग्रजेन ।**
**ते पुण्डरीकाक्षमवेक्ष्य तत्र व्याजह्रुरालोचितनीतिसाराः**
**।। १० ।।**

**पार्श्व इति** ।। तत्र समाजस्य पशुभिन्नप्राणिजातस्य भूमौ स्थाने । 'पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्' इत्यमरः । तस्यां सभायाम् । नरेन्द्रस्योग्रसेनस्य पार्श्वे । बलरामेण समं सह । सुखोपविष्टं सुखेनासीनम् । पुण्डरीकाक्षे व्युत्पत्तिरुक्ता 'अधत्त पुण्डरीकाक्षम्' इत्यत्र । कृष्णमवेक्ष्य दृष्ट्वा । आलोचितः नीतीनां नयानां सारः स्थिरांशः सिद्धान्तो यैस्ते तथोक्तास्सन्तः । व्याजह्रुः 'हृञ् हरणे' लिट् । व्याहृतवन्तः । मन्त्रयाञ्चक्रुरित्यर्थः । अत्रालोचितनीतिसारा इति विशेषणं व्यवहारसामर्थ्याभिप्रायगर्भमिति परिकरालङ्कारः ।। १० ।।

**शान्तिं नयन्त्या विततां तमिस्रामुद्योतयन्त्या हरितश्च सर्वाः ।**
**कीर्त्या विभान्त्या विभयेव भास्वान्विभो भवान्पालयति**
**त्रिलोकीम् ।। ११ ।।**

**शान्तिमिति** ।। विभो प्रभो पते वा । भवान् पूज्यः । विततां विस्तृतां तमिस्रां तम इव तमोऽज्ञानमन्यत्र रात्रिम् । 'ध्वान्तरात्रौ तथा रात्रौ स्यादन्धन्तमसे त्वना । तमोमात्रे तमिस्रा स्यात्' इति केशवः । शान्तिम् अपनयनमित्यर्थः । नयन्त्या प्रापयन्त्या । सर्वाः हरितः । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः । उद्योतयन्त्या प्रकाशयन्त्या । विभान्त्या दीप्यमानया कीर्त्या । विभया प्रभया । भास्वान् सूर्य इव । त्रिलोकीं त्रयाणां लोकानां समाहारस्त्रिलोकी । 'द्विगोः' इति ङीप् । तां पालयति । 'पाल रक्षणे' चुरादिः लट् । अत्र श्लेषानुप्राणितोपमालङ्कारः ।। ११ ।।

**विशेषतोऽप्युन्नतपार्थिवाढ्यो राज्ञो ययातिप्रभवस्य वंशः ।**
**त्वयाऽवतीर्णेन जगद्धितार्थं पूतस्सवित्रेव महोदयाद्रिः**
**।। १२ ।।**

**विशेषत इति** ।। विभो ययातिप्रभवस्य (ययातेः) उत्पन्नस्य । यद्वा ययातिः प्रभवो जनिकारणं यस्य स तथा तस्य । 'प्रभवो वर्षनिष्पत्त्योर्विक्रमे जनिकारणे' इति कविदर्पणः । राज्ञो यदोर्वंशः अन्ववायः । 'वंशोऽन्ववायः सन्तानः' इत्यमरः । विशेषतोऽतिशयेन । उन्नतैः पार्थिवै राजभिर्वृक्षैश्च । आढ्यः सम्पन्नोऽपि । 'पार्थिवो वत्सरे राज्ञि त्रिषु पृथ्वीभवे भवेत्' इति दर्पणः । जगद्धितार्थं जगद्भ्यो हितं जगद्धितं तदर्थं, प्रयोजनं यस्मिन्कर्मणि तद्यथा भवति तथा । 'चतुर्थीतदर्थ' इत्यादिना समासः । अवतीर्णेन त्वया । सवित्रा सूर्येण महोदयाद्रिरुदयगिरिरिव । पूतः पवित्रः । 'पवित्रः प्रयतः पूतः' इत्यमरः । अत्रापि श्लेषानुप्राणितोपमालङ्कारः ।। १२ ।।

**गोप्ता गवां बालविलासलोले गोपाङ्गनानन्दकरः स्वदोष्णा ।**
**गोवर्धनं छत्रमिवोज्जहर्थेत्यचिन्तनीयो महिमा तवायम्**
**॥ १३ ॥**

**गोप्तेति** ॥ गवां सुरभीवृषभाणां गोप्ता रक्षकः । बालानां विलासो लीला । 'विलासो भावलीलयोः' इति विश्वः । तत्र लोलः सतृष्णः । 'लोलश्चलसतृष्णयोः' इत्यमरः । गोपाङ्गनानां गोपस्त्रीणामानन्दं ताच्छील्येन करोतीति गोपाङ्गनानन्दकरः । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति करोतेस्ताच्छील्ये टप्रत्ययः । त्वं स्वदोष्णा स्वभुजेन । 'पद्दन्–' इत्यादिना दोषशब्दस्य दोषन्नादेशः । गोवर्धनं तन्नामानं गिरिम् । छत्रमातपत्रमिव । उज्जहर्थ उद्धृतवानसि । 'ऋतो भारद्वाजस्य' इति थल इडागमनिषेधः । इतिशब्दः प्रकारवचनः । एवं प्रकारस्तवायं महिमा । अचिन्तनीयः चिन्तयितुमशक्यः । तद्वचनं तु दूरापास्तमिति भावः । उज्जहर्थेत्यचिन्तनीय इत्यत्र । 'पूर्वान्तवत्स्वरः सन्धौ क्वचिदेव परादिवत् । द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत्' ॥ इतिवचनात् यणादेशः स्वरसन्धिपूर्वक इति शोभामावहति न पुनर्यतिभङ्गदोषम् । अत एव पाणिनिः 'स्वरसन्धिरन्तादिवच्च' इत्याह । अत्र गोरक्षणबालकेलीगोपाङ्गनानन्दनगोवर्धनोद्धारणानामेकगतत्वेन वर्णनात्कारकदीपकमलङ्कारः । तल्लक्षणमुक्तं प्राक् । अचिन्तनीय इत्यद्भुतरसस्य कृष्णविषयरतिभावं प्रत्यङ्गत्वात्प्रेयोऽलङ्कारः ॥ १३ ॥

**सम्पादिता भूमिरपेतपीडा कंसं कुमार्गाचरणं निरस्य ।**
**त्वया यथोन्मूलयता समूलमुद्यानभूः कण्टकवृक्षषण्डम्**
**॥ १४ ॥**

**सम्पादितेति** ।। विभो त्वया । कुमार्गाचरणं कुत्सितो मार्गो यस्य तत्कुमार्गं तदाचरणं चेष्टितं यस्य तं तथोक्तम् । कंसं निरस्य कण्टकवृक्षषण्डं कण्टकयुता वृक्षाः कण्टकवृक्षाः । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । तेषां षण्डं समूहम् । यद्यपि 'अब्जादिकदम्बे षण्डमस्त्रियाम्' इत्यमरे षण्डशब्द एव वृक्षादिकूटवचन इत्युक्तं तथापि करिकलभादिन्यायेनात्र समूहमात्रार्थः । अत एव कमलषण्ड इत्यादिप्रयोगः । समूलं मूलैः सहितं यथा तथा । उन्मूलयता उत्पाटयता पुरुषेण । उद्यानभूः यथा उपवनस्थलीव भूमिः । अपेतपीडा निराबाधा सम्पादिता अत्रोपमालङ्कारः ।। १४ ।।

**साटोपकोपो ददृशे तदान्यो निर्दग्धुकामो मधुरामशेषाम् ।**
**उदग्रतेजःकवलीकृताशो दावानलो वा श्वशुरोऽस्तिभर्तुः**
**।। १५ ।।**

**साटोपेति** ।। तदा कंसवधानन्तरकाले । आटोपो गर्वः । 'अवष्टम्भस्मयाटोपगर्वाहङ्कारदर्पकाः' इति रत्नाकरः । कोपश्च ताभ्यां सहितः साटोपकोपः । अन्यः कंसात् । अशेषां मधुरापुरीम् । निर्दग्धुकामः निर्दग्धुं निश्चयेन दग्धुं भस्मीकर्तुं कामो यस्य स तथा । तुमुनन्तस्योपसङ्ख्येयक्रियोपपदत्वादिति हरदत्तोक्तेस्तुमुन्पूर्वो बहुव्रीहिः । 'निर्निश्चयनिषेधयोः' इत्यमरः । उदग्रेण उन्नतेन तेजसा प्रभावेन कवलीकृताः आक्रान्ताः आशाः दिशः येन स उदग्रतेजः कवलीकृताशः । 'तेजो ज्योतिःप्रभावान्नबलतेजस्सु च' इति दर्पणः । अस्तिभर्तुः अस्तिनामिकायाः स्त्रियः भर्तुः । पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः । कंसस्य श्वशुरः जरासन्धः । दावस्य वनस्यानलो वह्निः । 'तथा सत्रं दवो दावः कान्तारोऽस्त्री

महावनम्' इत्यमरशेषः । वाशब्द इवार्थे । 'वा विकल्पोपमानयोः' इत्यमरः । ददृशे दृशिर् प्रेक्षणे इत्यतः कर्मणि लिट् । जनैरिति शेषः । दृष्टः इत्यर्थः । अत्रोपमानोपमेयभावस्य लोकतोऽप्रसिद्धस्यापि कविप्रौढोक्ति-कल्पितत्वादुपात्तनिमित्तोत्प्रेक्षालङ्कारः । उपमालङ्कारो वा ।। १५ ।।

**उदीर्णगर्वोद्धतहेतिहेतेस्तस्यापि वेगं तरसा प्रशान्तम् ।**
**ततान शार्ङ्गायुधबाणधारा तवानिवार्या तुलिताम्बुधारा ।। १६ ।।**

**उदीर्णेति** ।। हे शार्ङ्गायुध शार्ङ्गं शृङ्गस्य विकारः आयुधं धनूरूपं यस्य स तथा तस्य सम्बुद्धिः । अनिवार्या निवारयितुमशक्या । 'वृङ् वरण' इत्यतः चुरादिण्यन्तात् 'अचो यत्' इति यत्प्रत्ययः । तुलि-ताम्बुधारा तुलिता अम्बुधारा यया सा तया । तव बाणधारा शरवृष्टिः । उदीर्णगर्वोद्धतहेतिहेतेः उदीर्णः उद्गतः यो गर्वः तेनोद्धता हेतिरायुधमेव हेतिर्ज्वाला यस्य स तथा तस्य । तादृशस्य 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः' इत्यमरः । जरासन्धाख्यदावाग्नेर्वेगमपि । तरसा बलेन । प्रशान्तमुपरतं ततान । 'तनु विस्तारे' इत्यतो लिट् । चकारे-त्यर्थः । अत्रोपमाहेतुकमेकदेशवर्ति रूपकमलङ्कारः ।। १६ ।।

**अलोकसाधारणपुण्यकर्ता न संशयोऽस्मिन्वसुदेव एषः ।**
**यस्तातभावेन तवाननाब्जं दृष्ट्वा कृतार्थत्वमुपैति नित्यम् ।। १७ ।।**

**अलोकसाधारणेति** ।। एषः वसुदेवः । अलोकसाधारणपुण्यकर्ता लोकसाधारणं न भवतीत्यलोकसाधारणं यत्पुण्यं तस्य कर्ता । 'जनिकर्तुः-

प्रकृतिः' इत्यादाविव शेषषष्ठ्या समासः । तेन 'तृजकाभ्याम्' इति प्रतिषेधात्कथमत्र समास इति चोद्यमनवकाशम् । इत्यस्मिन्नर्थे न संशयः । संशयाभावं समर्थयते । **य इति** ।। यो वासुदेवस्तातभावेन । इत्थम्भूत-लक्षणे तृतीया । तव आननाब्जमाननमब्जमिव तत्तथा । दृष्ट्वा नित्यं कृतार्थत्वं कृतकृत्यत्वम् उपैति । इण् गतौ लट् । प्राप्नोति । अत्रा-साधारणपुण्यकर्तृत्वे संशयाभावस्य समर्थनीयस्य उत्तरार्धवाक्यार्थेन समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।। १७ ।।

**सा देवकी चारुचरित्रशुद्धा यस्याश्च गर्भे चिरमूषिवांस्त्वम् ।**
**कल्प्या द्वितीयोपनिषत्प्रसूता किं वा भवन्तं स्वयमेव**
**वोढुम् ।। १८ ।।**

**सा देवकीति** ।। सा तव माता देवकी चारूणि चरित्राणि । 'चरित्रं चरितं शीलं चारित्रं च समं मतम्' इति हलायुधः तैः शुद्धा । यस्याः गर्भे त्वं चिरं दशमासान् ऊषिवान् वासं कृतवानसि । वमतेर्लिटः 'भाषायां सदवसश्रुवः' इति क्वसुरादेशः । अतः सा द्वितीया उपनिषत्कल्प्या ऊहनीया । वा अन्यथा । भवन्तं वोढुं धर्तुम् । स्वयमात्मना उपनिषदेव प्रसूता जाता किम् । अत्रानवद्यसुकृतशालित्वस्य ऊषिवानित्यनेन समर्थना-त्पूर्ववत्काव्यलिङ्गमलङ्कारः । द्वितीयार्धे चाक्षेपगर्भा सिद्धविषया फलोत्प्रेक्षा ।। १८ ।।

**इदं च रम्या नगरी यदूनां वृन्दारकाणाममरावतीव ।**
**त्वत्सङ्गमात्कामदुघा महात्मन्यत्रास्मदीया नितरां प्रवृत्तिः**
**।। १९ ।।**

**इयमिति** ।। हे महात्मन् महाबुद्धे । 'आत्मा यत्नो धृतिर्बुद्धिः' इत्यमरः । यदूनामियं रम्या नगरी मधुरापुरी । वृन्दारकाणां देवानाममरावतीव इन्द्रपुरीव । अमरा अस्याः सन्तीत्यर्थे मतुपि 'मतौ बह्वचोऽनजिरादीनाम्' इत्यमरशब्दस्य दीर्घः । त्वत्सङ्गमात् त्वत्सन्निधानात् । कामदुघा कामान् दोग्धीति तथा । 'दुहः कप् घश्च' मनोरथपूरणीत्यर्थः । यत्र पुर्याम् । अस्मदीया अस्मत्सम्बन्धिनी । प्रवृत्तिः नितरां स्वच्छन्दा । भवतीति शेषः । उपमालङ्कारः ।। १९ ।।

**उदग्रसेनोऽप्ययमुग्रसेनः सिंहासनस्थः स्थविरस्तवैषः ।**
**ज्वलत्प्रतापानलदीप्तिदूरध्वस्तारिवर्गः सुखमेधते ह ।।२०।।**

**उदग्रसेन इति** ।। उदग्रा उन्नता सेना यस्य स उदग्रसेनः । सिंहासने तिष्ठतीति सिंहासनस्थः । 'सुपि स्थ' इति कप्रत्ययः । पट्टाभिषिक्त इत्यर्थः । स्थविरः 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा' इत्युणादौ तिष्ठतेरिरच्प्रत्ययो वुगागमश्च निपातितः । 'प्रवयाः स्थविरो वृद्ध' इत्यमरः । एष प्रसिद्धः । अयं पुरोवर्ती उग्रसेनोऽपि । अपिः पूर्वोक्तसमुच्चये । तव ज्वलत्प्रताप एवानलोऽग्निस्तस्य दीप्तिस्तया दूरे ध्वस्तोऽपवारितः अरीणां वर्गो यस्य स ज्वलत्प्रतापानलदीप्तिदूरध्वस्तारिवर्गः । सुखं यथा तथा एधत्ते । 'एध वृद्धौ' वर्धते । ह प्रसिद्धमेतत् । 'प्रत्यारम्भे प्रसिद्धौ ह' इति यादवः । अत्र प्रतापस्यानलत्वेन रूपणाद्रूपकमलङ्कारः ।। २० ।।

**अद्यापि कश्चित्किल धूमकेतुर्यथोत्थितो यादवनाशकारी ।**
**आयाति लब्धस्तपसा चिरेण गर्गेण तोषाद्भुवनेश्वरस्य**
**।। २१ ।।**

**अद्यापीति** ।। गर्गेण गर्गनामकयादवपुरोहितेन । चिरेण बहुकालम् । अनुष्ठितेन तपसा कृच्छ्रेण । 'कर्तृकरणयोस्तृतीया' । भुवनेश्वरस्य शिवस्य । तोषात् सन्तोषात् लब्धः । यादवनाशकारी यादवनाशमवश्यं करिष्यन् । गम्यादित्वाद्द्वितीयासमासः । आवश्यके णिनिः । उत्थतो धूमकेतुर्धूमः केतुर्ध्वजो यस्य सोऽग्निः । धूमकेतुर्यथा धूमकेतुरिव उत्पात इव वा । 'अग्न्युत्पातौ धूमकेतू' इत्यमरः । अद्यापि कश्चिदायाति । किलेति वार्तायाम् । 'वार्तासम्भाव्ययोः किल' इत्यमरः । उपमालङ्कारः ।।२१।।

**तदत्र वाच्यं करणीयतत्वं यथा जनोऽयं परिपालनीयः ।**
**वृत्तानुकूलस्तव पुण्यकीर्तेः सर्वोऽप्ययस्कान्तमणेर्यथाऽयः**
**।। २२ ।।**

**तदत्र वाच्यमिति** ।। भो विभो तत्तस्माद्यवनाधिराजस्योपस्थितत्वात् । अयस्कान्तमणेः अयस्कान्तनामिकायाः शिलायाः । 'अतः कृकमिकंस' इत्यादिना विसर्जनीयस्य सत्वम् । अयो यथा लोह इव । पुण्यकीर्तेः आश्रितजनसंरक्षणादिपरिशुद्धयशसः । तव वृत्तानुकूलः चरित्रानुरूपः । 'वृत्ते पद्ये चरित्रे' इत्यमरः । अयं जनो यादवजनः । यथा येन प्रकारेण । परिपालनीयः तथा करणीयतत्वं कार्यस्वरूपं कार्यार्थनिश्चयं वा । 'तत्वं चिदचिदीशेषु स्वरूपे निश्चयार्थयोः' इति कविदर्पणः । अत्र विषये त्वया वाच्यम् । उपमालङ्कारः । उपमानोपमेययोर्लिङ्गव्यत्यास उपमादोष इति चोद्यं प्रथमसर्गे परिहृतम् ।। २२ ।।

**समापितायामिति यादवानां वाण्यां महत्यामिव वारिवृष्टौ ।**
**शरत्प्रकाशेन्दुविराजितेन स्मितेन कृष्णो गिरमावभाषे**
**।। २३ ।।**

**समापितायामिति** ।। यादवानामिति वाण्यामेवं रूपवचने । महत्यां वारिवृष्टौ चलवर्षे इव । समापितायां समाप्तिं प्रापितायाम् । शरदि शरत्काले प्रकाशत इति प्रकाशः । पचाद्यच् । स चासाविन्दुश्च तस्य विराजिते दीप्तं भावे निष्ठा । दीप्तिरिव विराजितं यस्य तेन । अनेन श्रीकृष्णमुखस्येन्दुसादृश्यं स्मितस्य चन्द्रिकासादृश्यं च कविसम्मतं व्यज्यते । स्मितेन मन्दहासेन इत्यम्भूतलक्षणे तृतीया । कृष्णो वचनं बभाषे । 'भष व्यक्तायां' वाचीत्यतो लिट् । व्यक्तमुच्चारितवानित्यर्थः । अत्र पूर्वोत्तरार्धयोरुपमालङ्कारः ।। २३ ।।

कृष्णभाषणमेवाह—

**यदप्यहं जैत्रगुणस्वभावस्तथाऽपि युष्मत्सख एव जेता ।**
**दीपः स्वकार्यं स्वयमेव कर्तुं शक्तोऽपि वर्त्यादिमपेक्षते हि**
**।। २४ ।।**

**यदपीति** ।। अहं जैत्राः जयशीलाः गुणाः शौर्यादयः स्वभावः स्वरूपं यस्य स तथोक्तो यदपि यद्यपि । यद्यपि जेतृशब्दात्ताच्छील्यकतृ-(न)न्नन्तात् 'प्रज्ञादिभ्यश्च' इति स्वार्थिकेऽणि जैत्रशब्दो जयशीलार्थः । तथापि जैत्रगुणत्वेऽपि युष्माकं सखा युष्मत्सखः । 'समाने ख्यः स चोदात्तः' इत्युणादिसूत्रात् युष्माभिः समानः ख्यायमान इति लभ्यते । युष्माभिः सहित इति यावत् । तेन वक्ष्यमाणदृष्टान्तानुगुण्यम् । 'राजाहः सखिभ्यष्टच्' इति समासान्तष्टच्प्रत्ययः । जेता । जयतेस्तृन् जयशीलः नान्य इत्येवकारार्थः । तत्र दृष्टान्तो दीप इति । दीपः स्वकार्यं प्रकाशं तमोनिवर्तनादिरूपम् । स्वयमात्मनैव कर्तुं शक्तोऽपि वर्त्यादिं वर्तिर्दशा अदिर्यस्य तैलादेः पदार्थस्य तम् । अपेक्षते इच्छति । हि प्रसिद्धमेतत् ।

अत्र दृष्टान्तोऽलङ्कारः । यादववत्यदिः बिम्बप्रतिबिम्बभाववर्णनात् । तथाचोक्तं चन्द्रालोके– 'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः' इति ।। २४ ।।

**सुपौरुषाणामपि सन्निरूप्यः शत्रुक्षयायौपयिकोऽभ्युपायः ।**
**आकस्मिकी मार्गविमर्शहीना नैवाभिभूतिः प्रबलेषु शक्या ।। २५ ।।**

**सुपौरुषाणामिति** ।। सुष्ठु पौरुषं येषां ते सुपौरुषास्तेषामपि । 'पौरुषं विक्रमे भावकर्मणोः पुरुषस्य च' इति दर्पणः । अस्माकमिति शेषः । शत्रुक्षयाय शत्रूणामपचयाय । 'निलयापचयो क्षयौ' इत्यमरः । नाशायेत्यर्थः । तादर्थ्ये चतुर्थी । अभ्युपायस्साधनम् । औपयिकं न्याय्यम् । 'युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् । न्याय्यं च त्रिषु षट्' इत्यमरः । 'उपायाद्ध्रस्वत्वं च' इति ठक् । उपायशब्द आकारस्य ह्रस्वत्वं च । स चोपायशब्दो वृत्तिविषये अन्यार्थ इव ग्राह्यः । सन्निरूप्यः सम्यङ्निरूपणीयः । किमुपायावमर्शेनेत्यत उक्तम् । **आकस्मिकीति** ।। विनयादिगणे अकस्मादिति पठ्यते दकारान्तं चेदमव्ययम् । ततो 'विनयादिभ्यष्ठक्' इति ठक्प्रत्ययः । दकारान्तत्वात् 'इसुसुक्तान्ताकः' इति ठादेशो न भवति । 'ठस्येकः' इतीकादेशे च भत्वात् 'अव्ययानां भमात्रे टिलोपः' इति टेर्लोपः । अकस्मादहेतुकेत्यर्थः । मार्गाणां शत्रुक्षयानुकूलमार्गाणाम् । 'कर्मणामारम्भोपायः पुरुषद्रव्यसम्पत्तिः देशकालविभागः । विनिपातप्रतीकारः कार्यसिद्धिः' इति मन्त्रस्य पञ्चावयवा मार्गा इति कामन्दकीयशास्त्रप्रसिद्धानां विमर्शः परामर्शः तेन हीना रहिता अभिभूतिरभिभवः । प्रबलेषु शत्रुषु कर्तुमिति शेषः । नैव शक्या । अत उपायः सन्निरूप्य इति हेतुहेतुमतोस्सहवर्णनाद्धेतुरलङ्कारः ।। २५ ।।

**मन्ये प्रयत्नादपि दैवमग्र्यं यत्प्रेरितो वै यतते क्रियासु ।
यस्मादिहामुत्र च सम्पदापन्नान्यन्निमित्तं प्रवदन्ति सन्तः
॥ २६ ॥**

**मन्य इति** ॥ येन दैवेन प्रेरितो नियमितः पुरुषः । क्रियासु व्यापारेषु । यतते प्रयत्नं कुरुते । वै प्रसिद्धम् । 'वैवाव वाक्यारम्भप्रसिद्धिषु' इति वैजयन्ती । यस्माच्च इह अस्मिन् लोके । अमुत्र परलोके । सम्पत्सम्पत्तिरापद्विपत्तिश्च । भवति । यस्माच्च सम्पदादावन्यत् निमित्तं सन्तो न प्रवदन्ति । वद व्यक्तायां वाचि लट् । तद्दैवं प्रयत्नात्पुरुषकारात् । अग्र्यम् । अग्रे भवं श्रेष्ठम् । मन्ये मन ज्ञाने इत्यतो लट् जानामि । अत्र दैवे प्रयत्नाधिकत्वं समर्थनीयं यत्प्रेरित इत्यादिना समर्थ्यत इति काव्यलिङ्गमलङ्कारः ॥ २६ ॥

**यस्योन्मुखं पूर्वकृतानुरूपं सोऽत्येति शोकाम्बुनिधिं प्लवीव ।
पराङ्मुखं यस्य तदेव सोऽयं मज्जत्यगाधे प्लवहीनपुंवत्
॥ २७ ॥**

**यस्योन्मुखमिति** ॥ यस्य पुंसः । पूर्वजन्मनि कृतस्य सुकृतस्य अनुरूपमुचितं तदेव उन्मुखमभिमुखम् । भवतीति शेषः । प्लवी प्लववानिव । शोक एवाम्बुनिधिः समुद्रः तं शोकाम्बुनिधिम् । अत्येति अतिक्रामति । अतिपूर्वादिण्गतावित्यतो लट् । यस्य च तदेव पूर्वकृत-दुष्कृतानुरूपम् । पराङ्मुखं विमुखम् । सोऽयं प्लवहीनपुंवत् । तेन तुल्यम्' इत्यादिना वतिः । अगाधे अतलस्पर्शे । शोकाम्बुनिधाविति विपरिणामे-नानुवर्तनीयम् । मज्जति टुमस्जो शुद्धाविति धातोर्लट् । मग्नो भवतीत्यर्थः

अत्र पूर्वार्धे श्रौती उत्तरार्धे त्वार्थी उपमा । तद्द्वयमपि रूपकस्याङ्गमिति सङ्करः ।। २७ ।।

**तथापि ये साधुपथात्प्रमुक्ता निरूढमाना भुजवीर्यलेशात् ।**
**न शाश्वतीं सम्पदमाश्रयन्ते प्रक्षीणतैला इव ते प्रदीपाः ।। २८ ।।**

**तथापीति** ।। तथापि पुरुषकाराद्दैवस्य प्राधान्येऽपि । ये साधुपथात् साधूनां पन्थाः साधुपथः । 'ऋक्पूरब्धूः पथामानक्षे' इति पथिन्शब्दात् समासान्तोऽप्रत्ययः । तस्मात्प्रमुक्ताः च्युताः । भुजवीर्यलेशात् भुजस्य पराक्रमलेशात् । निरूढमानाः निरूढो निर्वहणं प्राप्तः सुदृढः मानोऽहङ्कारो येषां ते तथोक्ताः । ते प्रक्षीणतैलाः प्रक्षीणः तैलं येषु ते तथा । प्रदीपा इव । शाश्वतीं शश्वत् त्रैकाल्यं तत्र भवां तथोक्ताम् । 'अव्ययानां भमात्रे टिलोपः' इति न प्रवर्तते 'शाश्वते प्रतिषेधः' इति प्रयोगात् । शाश्वतमिति भवतीति हि वामनः । अमरटीकायां तु शश्वद्भवः 'तत्र भव' इत्यण् । अनित्योऽव्ययानां टिलोपः । बहिषः टिलोपवचनात् ज्ञापकात् शाश्वतिक इति निर्देशान्न कादेश इति भट्टः । तां सम्पदं नाश्रयन्ते । श्रिञ् सेवायां न सेवन्ते । उपमालङ्कारः ।। २८ ।।

पूर्वश्लोके केवलं पौरुषं केवलं दैष्टिक्यं दूषयित्वा इदानीं तदुभयमप्यावश्यकमित्याह–

**तत्रास्तिकः कर्मसु वैदिकेषु व्यपेततन्द्रो विदधीत यत्नम् ।**
**दैवानुरोधेन मनोरथेषु प्रधानतन्त्रोऽभिगुणप्रयोगम् ।।२९।।**

**तत्रास्तिक इति** ।। तत्र दैवपुरुषयोर्मध्ये । वैदिकेषु 'तत्र विदितः' इति वेदशब्दाट्ठक् । कर्मसु आस्तिकः 'अस्तिनास्तिदिष्टं मतिः' इति ठक् । अस्ति फलमनेनेति मतिमान् । अभिगुणप्रयोगं गुणानां सन्धिविग्रह-यानासनद्वैधीभावसमाश्रयलक्षणानां प्रयोगस्याचरणस्याभिमुख्ये 'लक्षणेनाभि-प्रती आभिमुख्ये' इत्यव्ययीभावसमासः । व्यपेता विगता तन्द्रा आलस्यं यस्य स दैवानुरोधेन दैवस्यानुवर्तनेन । प्रधानतन्त्रः प्रधानं मुख्यं तन्त्रं स्वराष्ट्रव्यापारो यस्य स सन् । 'तन्त्रं स्वराष्ट्रव्यापारे इति वैजयन्ती । मनोरथेषु शत्रुपरिभवाद्यभीष्टेषु । यत्नं विदधीत । 'डुधाञ् धारणपोषणयोः' इति धातोर्लिङ् । विपूर्वो दधातिः करणे वर्तते । कुर्वीत । अत्र व्यपेत-तन्द्रः आस्तिक इति पदसूचितो वीररसः यत्नं विदधीतेति सूचितधृतिं प्रत्यङ्गमिति रसवदलङ्कारः ।। २९ ।।

**विविच्य वर्गत्रयमप्रमत्तो गृह्णीत मित्रं स्वजनं परं वा ।**
**त्यजेच्च दूरादितरत्समस्तं पयो यथा वारि च राजहंसः**
**।। ३० ।।**

**विविच्येति** ।। अप्रमत्तः पुरुषः । वर्गत्रयं वर्गाणां प्रभावोत्साहमन्त्र-शक्तीनां तिसृणां तद्विषयाणां प्रभावोत्साहमन्त्रोद्भवानाम् । तादृशीनां च तिसृणां सिद्धीनां ये वर्गाः तुल्यरूपसमूहाः तेषां त्रयं त्रिकं विविच्य सम्यग्विमृश्य । यद्वा वर्गाणां क्षयस्थानवृद्धीनां 'क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्' इत्युक्तानां त्रयं विविच्येति योज्यम् । तत्र क्षयो नामाष्टवर्गापचयः । वृद्धिरष्टवर्गोपचयः । स्थानमष्टसमावस्था । अष्टवर्गश्च 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरबलादानं शून्यानां च निवेशनम् ।।' इति कामन्दकीये नीतिशास्त्रे प्रसिद्धः । पयः क्षीरं वारि

नीरं च । राजहंसो यथा राजहंस इव । स्वजनं परं वा त्रिविधमित्रमेव गृह्णीत । ग्रह उपादाने लिङ् । समस्तमितरदरित्रयं दूरात्त्यजेच्च । 'त्यज हानौ' लिङ् । मित्रामित्रयोस्त्रैविध्यं च कामन्दकीये 'सहजः प्राकृतश्चैव कृत्रिमश्च त्रिधा रिपुः । एवमेव त्रिधा मित्रमुच्यते तद्बलाबलम् ।। पितृव्यतत्सुतमुखाः सहजाः शत्रवो मताः । मातृष्वसृपितृष्वस्रोस्सुतादिः सहजः सुहृत् ।। विषयानन्तरो राजा प्राकृतः शत्रुरुच्यते ।। तदनन्तर-राजस्तु प्राकृतं मित्रमुच्यते ।। उपकारापकाराभ्यां मित्रामित्रौ तु कृत्रिमौ ।। सहजप्राकृतौ तौ तु मैत्र्यामैत्र्योरनिश्चितौ ।। कृत्रिमौ निश्चितावेतौ तयोर्नास्ति विपर्ययः ।।' इति प्रसिद्धम् । उपमालङ्कारः ।। ३० ।।

शत्रुसैन्ये प्रकारं दर्शयति–

**त्यागप्रकारांश्चतुरो वदन्ति न्यायप्रवीणा रिपुषु क्रमेण ।**
**मानावकाशं त्रितयं तु पूर्वं मन्ये महारौ यवनेश्वरेऽस्मिन्**
**।। ३१ ।।**

**त्यागप्रकारानिति** ।। न्यायप्रवीणाः नीतौ निपुणाः । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः । त्यागप्रकारान् त्यागे प्रहाणे निवर्तने प्रकारान् । क्रमेण 'सामदाने भेददण्डौ' इत्युक्तक्रमेण चतुरः चतुः-सङ्ख्याकान् । वदन्ति । उपस्थिते तु कृत्रिमशत्रौ दण्ड एव कार्य इति भावेनाह । **मानावकाशमिति** ।। महारौ कृत्रिमशत्रौ । अस्मिन् उपस्थिते यवनेश्वरे तुरुष्काधिपतौ कालयवने । पूर्वमाद्यं त्रितयं सामादित्रिकं 'सङ्ख्याया अवयवे तयप्' इति त्रिशब्दात्तयप्प्रत्ययः । मानावकाशं मान-स्याहङ्कारस्यावकाशमास्पदं मन्ये जानामि । अत्र चतुर्षूपायेषु त्रयाणां

निषेधेन दण्ड एव कार्य इति नियन्त्रणाभिप्रायात्परिसङ्ख्यालङ्कारः । 'परिसङ्ख्या निषिद्ध्यैकमन्यस्मिन्वस्तुयन्त्रणम्' इति तल्लक्षणात् ।।३१।।

दण्डप्रयोग एव कृत्रिमरिपावित्युक्तं तत्प्रयोगे इति कर्तव्यताविशेषं दर्शयति–

**दण्डप्रयोगश्च कृतात्मरक्षैः कार्यो नरैर्देशदशावशेन ।**
**पराभवं रन्ध्रमवेक्ष्य पापाः कुर्वन्ति रौद्रास्तरसा सपत्नाः**
**।। ३२ ।।**

**दण्डप्रयोग इति** ।। कृतात्मरक्षैः कृता आत्मनो रक्षा यैस्ते तथा तैः । 'गोस्त्रियोरुपसर्जनस्य' इति रक्षाशब्दे ह्रस्वता । नरैः देशश्च दशा कालावस्था च तयोर्वशेन । देशकालाधीनतयेत्यर्थः । 'चरमायामवस्थाया-मवस्थामात्रके दशा' इति केशवः । दण्डप्रयोगः दण्डस्य शत्रुषु विनिपातः कार्यः । अनेन 'सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ।।' इति कामन्दकीयोक्ता नीतिः सूचिता भवति । एवं दण्डमप्रयुञ्जानस्यानर्थमाह– **पराभवमिति** ।। अन्यथेति शेषः । पापा नृशंसाः । 'नृशंसो घातुकः क्रूरः पापः' इत्यमरः । रौद्रा उग्राः भयङ्कराः । सपत्नाः वैरिणः । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । रन्ध्रं छिद्रमवेक्ष्यान्वीक्ष्य । तरसा बलेन । 'द्रविणं तरः सहोबलशौर्याणि' इत्यमरः । पराभवं तिरस्कारं कुर्वन्ति । 'वर्तमानसामीप्ये वर्तमानवद्वा' । करिष्यन्ति । अत्र सामान्ये वर्ण्यमाने अस्माभिरस्मिन् दण्डप्रयोगाकरणे अयमस्मान्पीडयेदिति प्रस्तुतविशेषोऽवगम्यत इति सामान्यनिबन्धनोऽयमप्रस्तुतप्रशंसालङ्कारः । 'अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया' इति हि तल्लक्षणम् ।। ३२ ।।

**तत्थानमेतत्सुगमं जनानां बलप्रदं चारिगणस्य नूनम् ।**
**चिरं तु न स्थेयमिहाविशङ्कं जयो हि दुर्गस्थितिनीतिभाजः**
**॥ ३३ ॥**

**तत्स्थानमिति** ॥ तत्तस्मादेतत्स्थानं पुरम् । जनानां सुगमं सुखेन गन्तुं शक्यम् । ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु गमेः खल् प्रत्ययः । जनानामिति शेषे षष्ठी । अरिगणस्य बलप्रदं च । नूनं निश्चयः बलं प्रददातीति बलप्रदमित्यत्र 'प्रेदाज्ञः' इति प्रोपसृष्टादपि धातोः कर्मण्युपपदे कप्रत्ययः । तेन 'आतोऽनुपसर्गे कः' इति अनुपसर्गात् कप्रत्ययानुशासनात् सोपसर्गात्कथमत्र कप्रत्यय इति चोद्यमलग्नकम् । इह तु स्थाने अविशङ्कं यथा तथा । शङ्कां विनेत्यर्थः । चिरं दीर्घकालं न स्थेयम् । तिष्ठतेः 'अचो यत्' इति यत्प्रत्यये 'ईद्यति' इति ईत् । न स्थातव्यम् । तथाहि दुर्गस्थितिनीतिभाजः दुर्गे 'सुदुरोरधिकरणे' इति गमेर्डः । यत्र मनुष्यैर्न गन्तुं शक्यं दुर्गम् तस्मिन् स्थाने स्थितिरवस्थानम् । नीतिं भजतीति तद्भाक् तस्य पुरुषस्य जयो भवतीति । अत्र सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासालङ्कारः ॥ ३३ ॥

भगवान्प्राप्तकालं करणीयमाह–

**समुद्रमध्ये नगरीं विशालां दुरासदां वैरिजनस्य कृत्वा ।**
**विशाम शीघ्रं यदि रोचते वो वृद्धिर्भविष्यत्यपराजिता नः**
**॥ ३४ ॥**

**समुद्रमध्य इति** ॥ समुद्रस्य मध्ये । विशालां बृहतीम् । वैरिजनस्य दुरासदाम् आसत्तुं गन्तुमशक्याम् । सीदतेः खल्प्रत्ययः । नगरीं

गौरादित्वात् 'षिद्गौरादिभ्यश्च' इति ङीष् । पुरीं कृत्वा कारयित्वा । विशाम विश प्रवेशने इत्यतो लोट् । प्रविशाम । यदि वः युष्मभ्यं 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानत्वे चतुर्थी । रोचते युष्माकं प्रीतिं करोति चेदित्यर्थः । प्रवेशफलमाह– **वृद्धिरिति** ।। एवं सति नः अस्माकम् । अपराजिता अनभिभूता । वृद्धिरभिवृद्धिर्भविष्यति । 'भू सत्तायाम्' इत्यतो लट् । प्रवेशवृद्ध्योर्हेतुहेतुमतोस्सह वर्णनाद्धेतुरलङ्कारः ।। ३४ ।।

**इतीश्वरे व्याकृतगोप्रपञ्चे सभासदामास मुखं विकासि ।**
**व्यपेतदोषे तमसोऽवसाने सरोरुहाणामिव वासरादौ ।।३५।।**

**इतीश्वर इति** ।। व्यपेतदोषे अपगतदूषणे । अन्यत्र व्यपेता दोषा रात्रिर्येन तस्मिन् । 'दोषो वातादिके दिष्टौ गुणस्य प्रतियोगिनि । ना दोषा तु भुजायां स्त्रीत्वाकारान्तमनव्ययम् । रात्र्याम्' इति केशवः । तथा चाव्ययत्वात्कथं ह्रस्वतेति चोद्यमनवकाशम् । तमसः शोकस्य 'तमस्तु शोकांहोराहुध्वान्तगुणेषु च' इति दर्पणः । अवसाने विनाशकारिणि अवस्यतीत्यवसान इति नन्द्यादित्वात्कर्तरि ल्युः । ईश्वरे त्रिलोकनाथे श्रीकृष्णे । 'अथेश्वरः । रुद्रे त्रिलोकनाथे च' इति दर्पणः । सूर्ये च । इति उक्तप्रकारेण । व्याकृतगोप्रपञ्चे व्याकृतः प्रकाशितः गवां वाचामन्यत्र किरणानां प्रपञ्चो विस्तारो येन तस्मिन् सति । 'स्वर्गेषुपशुवारवज्रदिङ्-नेत्रघृणिभूजले' इत्यमरः । वासरादौ दिनारम्भे । सरोरुहाणां पद्मानां मुखमिव । सभासदां सभायां सीदन्ति तिष्ठन्तीति सभासदस्तेषां सभ्यानाम् । मुखम् । विकासि विकस्वरं प्रफुल्लमास दिदीपे । 'अस गतिदीप्त्यादानेषु' इत्यतो लिट् । तेन अस्तेर्भूरादेशे लिटि बभूवेति स्यात् । न त्वासेति रूपं युक्तमिति चोद्यमलग्नकम् । अत्र श्लेषानुप्राणितोपमालङ्कारः ।।३५।।

**अथोग्रसेनप्रमुखाः समाजादुत्थाय जग्मुर्निजराजधानीम् ।**
**अनीक्षमाणा यवनादपायंससीरिणि श्रीरमणे सहाये ।।३६।।**

**अथेति** ।। अथ मन्त्रानन्तरम् । उग्रसेनः प्रमुखः प्रधानं येषां ते तथोक्ताः यादवाः । ससीरिणि सीरिणा बलरामेण सहिते । श्रीरमणे श्रियो रमणः धवः । 'रमणं तु नपुंसकम् । क्रीडायां पुंसि तु धवे' इति केशवः । नन्द्यादित्वात्कर्तरि ल्युः । तस्मिन् सहाये सति । यवनात् कालयवनात् । अपायमनर्थम् । अनीक्षमाणाः अपश्यन्तः । अगणयन्तस्सन्त इत्यर्थः । सभातलादुत्थाय । निजराजधानीं प्रधाननगरीम् । 'राज्ञां प्रधाननगरी राजधानीति कथ्यते' इत्यभिधानात् । स्वं स्वं गृहं राजधानीशब्दं प्रयुञ्जानाः प्रत्येकं तत्तद्गृहस्यापि राजधानीतुल्यत्वं सूचयति । जग्मुः 'गम्लृ गतौ' लिट् । प्राप्तवन्तः । अत्र यवनादपायाभावः समर्थनीयः श्रीरमणे सहाय इति वाक्यार्थेन समर्थ्यत इति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।। ३६ ।।

**उत्पातमुत्पादितसाध्वसं ते तस्यां समुत्पन्नमनल्पवीर्याः ।**
**समन्ततः सन्ददृशुर्निपेतुर्ध्वजाश्च वाताभिहतिं विहाय ।।३७।।**

**उत्पातमिति** ।। अनल्पवीर्याः अधिकपराक्रमाः । ते यादवाः । तस्यां नगर्याम् । समन्ततः सर्वत्र । समुत्पन्नम् उपस्थितम् । उत्पादितं जनितम् । साध्वसं लोकभयं येन तं तथा । उत्पातमशुभसूचनमुपसर्गम् । सन्ददृशुः सम्पूर्वात् 'दृशिर् प्रेक्षणे' इत्यतो लिट् । उत्पातमेव स्पष्टयति । ध्वजाः केतवः । वातस्याभिहतिः सङ्घट्टनं ताम् । विहाय विना निपेतुरिति । 'पत्लृ गतौ' लिट् । वक्ष्यमाणोत्पातसमुच्चयाय चशब्दः । वृत्त्यनुप्रासः शब्दालङ्कारः ।। ३७ ।।

**अभ्यस्तपूर्वामपि तां तदानीं शशङ्किरे ते शशिवंशभाजः ।**
**संक्षोभ्यमाणामशुभैरभीक्ष्णं जारैर्वधूं स्वामिव धृष्यमाणाम्**
**॥ ३८ ॥**

**अभ्यस्तपूर्वामिति** ॥ शशिनो वंशं भजन्ते सेवन्त इति शशिवंशभाजः चन्द्रवंशसमुत्पन्नाः । ते यादवाः । अभ्यस्तपूर्वामपि पूर्वमभ्यस्ता परिचिता अभ्यस्तपूर्वा ताम् । 'भूतपूर्वे चरट्' इत्यादाविव सुप्सुपेति समासः । जारैर्धृष्यमाणामाक्रम्यमाणाम् । निजां वधूमिवेत्युत्प्रेक्षा । अशुभैर्निमित्तैरभीक्ष्णमसकृत् संक्षोभ्यमाणां क्षोभं नीयमानां पुरम् । तदानीं शशङ्किरे शङ्कितवन्तः । 'शकि शङ्कायां' लिट् । अभ्यस्तपूर्वामपि शशङ्किर इति अयोगे योगकल्पनादतिशयोक्तिश्च ॥ ३८ ॥

**सस्मार विस्मारितदुस्सहाधिः संभृण्वतां संस्मरतां स्वकर्म ।**
**तक्षाणमेव द्युसदां मनस्वी निधाय चित्ते करणीयसारम्**
**॥ ३९ ॥**

**सस्मारेति** ॥ स्वकर्म स्वस्य चरित्रम् । संभृण्वतां संस्मरतां श्रवणस्मरणयोर्भक्त्याद्यतिशयलक्षणसम्यक्तां संशब्दो द्योतयति । विस्तारितो विस्मरणं प्रापितः । दुस्सहः सोढुमशक्यः आधिर्मानसी व्यथा येन विस्मारितदुस्सहाधिः । प्रशस्तं मनोऽस्मिन्नस्तीति मनस्वी । 'अस्मायामेधास्रजो विनिः' इति मनश्शब्दाद् मत्वर्थीयो विनिः । एषः श्रीकृष्णः । करणीयसारं कार्यस्थिरांशम् । चित्ते निधाय । द्युसदां दिवि सीदन्तीति द्युसदो देवास्तेषाम् । तक्षाणं वर्धकिं विश्वकर्माणम् । सस्मार स्मृतवान् । 'स्मृ चिन्तायां' इति धातोर्लिट् । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी

न भवति । अत्र विस्मारितदुस्सहाधिरिति विशेषणं प्रकृतदेवप्रयोजनाभिप्रायगर्भमिति परिकरालङ्कारः ।। ३९ ।।

**तं विश्वकर्मा मनसैव कर्माण्याधातुमीशो दयितो मघोनः ।**
**समुन्नतांसाहितसत्कुठारः कृताञ्जलिर्मूर्ध्नि[1] तदोपतस्थे ।।४०।।**

**तमिति** ।। मघोनः इन्द्रस्य । दयितः । क्रियः । विश्वकर्मा मनसैव तक्षणादिविनाकृतमनसा । कर्माणि भगवदभिमतनगरनिर्माणादीनि । आधातुं कर्तुम् । कर्माण्याधातुमित्यत्र 'पूर्वान्तवत्स्वरः सन्धौ क्वचिदेव परादिवत् । द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत्' इति शास्त्राद्यणादेशस्य परादित्वं युक्तमिति न यतिभङ्गः । ईशः समर्थः । समुन्नते अंसे आहितो निहितः सन् प्रशस्तः कुठारो वाशी येन स तथा । मूर्ध्नि कृतः अञ्जलिः येन स सन् । कृत्वाञ्जलिमित्यपि क्वचित्पाठः । तदा तं श्रीकृष्णमुपतस्थे पूजितवान् सङ्गतवान्वा । 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिषु' इति उपपूर्वात्तिष्ठतेर्लिट्यात्मनेपदम् । अत्र समुन्नतेति कृताञ्जलिरिति वर्धकिजातिवर्णनात्स्वभावोक्तिरलङ्कारः ।। ४० ।।

**सञ्चोदितस्सोऽखिलरक्षणेन भ्रूक्षेपलीलाचतुरेक्षणेन ।**
**ईशेन चक्रे शुभलक्षणेन मध्येसमुद्रं नगरं क्षणेन ।। ४१ ।।**

**सञ्चोदित इति** ।। अखिलान् रक्षतीत्यखिलरक्षणस्तेन । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । अखिलमखिलविषयं रक्षणं येनेति वा । भ्रुवो क्षेपः उन्नमनं स एव लीला तथा चतुरं कर्तव्यप्रेरणसमर्थमीक्षणं अक्षि आलोकनं वा यस्य स तथा तेन । शुभानि लक्षणानि यस्य स तथा तेन । ईशेन श्रीकृष्णेन सञ्चोदितः सम्प्रेरितः । स विश्वकर्मा । मध्येसमुद्रं

१. 'कृत्वाञ्जलिम्' इति क्वचित्पाठः ।

समुद्रस्य मध्ये । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । शुभलक्षणेन युक्तम् । इत्थम्भूतलक्षणे तृतीया । नगरं क्षणेन अल्पेन कालेन । 'क्षणो व्यापारवैकल्पे कालभेदाल्पकालयोः' इति वैजयन्ती । चक्रे निर्मितवान् । अत्र पादान्त्यभागावृत्तिर्यमकं नाम शब्दालङ्कारः ।। ४१ ।।

**दिवं प्रयाते प्रणिपातपूर्वं स विश्वकर्मण्यसुरप्रमाथी ।**
**उवाच वृष्णीनुचितः प्रवासो जनस्य नो द्वारवतीं प्रतीतः ।। ४२ ।।**

**दिवमिति** ।। प्रणिपातः प्रणामः पूर्वो यस्मिन्कर्मणि तत्तथेति क्रियाविशेषणम् । विश्वकर्मणि । दिवं नाकं प्रयाते । 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । गतवति सति । असुरान्प्रमथ्नातीत्यसुरप्रमाथी । 'प्रे लपसृद्रुमथवदवसः' इति ताच्छील्यादौ प्रशब्दे उपपदे मथेर्धिनुण्प्रत्ययः । सः श्रीकृष्णः । नः अस्माकं जनस्य । इतो मधुरापुरात् । द्वारवतीं प्रति प्रवासः प्रस्थानम् । उचितः उच समवाये इत्यतः 'उचिरुचिकृत्सिकृषिभ्यः कितच्' इत्यौणादिकः कितच् प्रत्ययः । युक्त इत्यर्थः । इति वृष्णीन्प्रत्युवाच । 'वच परिभाषणे' लिट् । वृत्त्यनुप्रासः शब्दालङ्कारः ।। ४२ ।।

**इत्युक्तमात्रे वचने मुरारेर्विलोडयन्तः पृथिवीतलं ते ।**
**विनिर्ययुर्द्राग्भवनेभ्य एभ्यो यथा मृगेन्द्रा गिरिकन्दरेभ्यः ।। ४३ ।।**

**इतीति** ।। मुरारेः श्रीकृष्णस्य । वचने इति पूर्वोक्तप्रकारेण । उक्तमात्रे 'मात्रं कात्स्न्र्येऽवधारणे' इत्यभिधानात् । वदनान्निस्सृत एव । ते

यादवाः । पृथिवीतलं विलोडयन्तः कम्पयन्तस्सन्तः । गिरिकन्दरेभ्यः पर्वतदरीभ्यः । 'दरी तु कन्दरो वास्त्री' इत्यमरः । मृगेन्द्रा यथा सिंहा इव । एभ्यः सम्प्रति । विद्यमानेभ्यः । भवनेभ्यो मन्दिरेभ्यः । 'भवनागार-मन्दिरम्' इत्यमरः । द्राक् शीघ्रम् । विनिर्ययुः निर्गतवन्तः । 'या प्रापणे' लिट् । अत्रोपमालङ्कारः ।। ४३ ।।

**सबालयोषिद्युववृद्धजाता यदूद्वहा[१] द्वारवतीमुपेत्य ।**
**अनन्यसाधारणशक्तिमेनं निश्चिक्यिरे तामवलोकयन्तः**
**।। ४४ ।।**

**सबालेति** ।। बालाः शिशवश्च योषितः स्त्रियश्च युवानस्तरुणाश्च वृद्धाः स्थविराश्च तेषां जातानि वृन्दानि । 'जातमुत्पन्नभूतयोः । वृन्दजात्योः' इति कविदर्पणः । तैस्सहिताः सबालयोषिद्युववृद्धजाताः । यदूद्वहाः उद्वहन्तीत्युद्वहाः यदूनामुद्वहाः यदूद्वहाः यदुश्रेष्ठाः । यदूद्भवा इति पाठे यदुरुद्भवः उत्पत्तिस्थानं येषामिति विग्रहः । द्वारवतीं पुरीमुपेत्य अधि-गम्य । तां पुरीमवलोकयन्तः पश्यन्तस्सन्तः । एनं श्रीकृष्णं 'द्वितीयाटौ-स्वेनः' इत्येतदः एनादेशः । अनन्यसाधारणशक्तिम् अन्यसाधारणी न भवतीत्यनन्यसाधारणी शक्तिः सामर्थ्यं यस्याऽसौ तं तथोक्तम् । 'सामर्थ्य-बलदुर्गादिदेवतासु च कथ्यते । शक्तिः' इति दर्पणः । 'स्त्रियाः पुंवद्भाषित' इत्यादिना साधारणशब्दे पुंवद्भावः । निश्चिक्यिरे । 'निष्पूर्वाच्चिञ् चयन' इत्यतो लिट् । निश्चितवन्तः । 'विभाषा चेः' इति कुत्वम् । अत्र नगर-रामणीयकहेतोः शक्तेः नगरदर्शनेन अनुमानवर्णनादनुमानालङ्कारः ।। ४४ ।।

१. 'यदूद्भवाः' इति पाठान्तरम् ।

**इष्टैरगारैः परिबर्हपुष्टैरष्टापदामृष्टतलैः प्रकृष्टैः ।
मनोरथे स्वे परिपूर्यमाणे स्पर्धा न कस्यापि बभूव तत्र ॥ ४५ ॥**

**इष्टैरिति** ॥ तत्र पुर्याम् । परिबर्हपुष्टैः परिबर्हाः परिच्छदाः नृपार्हार्था वा । 'परिबर्हः परिच्छेदे नृपार्हार्थे च' इति कविदर्पणः । तैः पुष्टैः समृद्धैः । अष्टापदामृष्टतलैः अष्टापदानि सुवर्णानि । 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः । 'अष्टनः सञ्ज्ञायाम्' इति दीर्घः । तैरामृष्टानि परिशुद्धानि तलानि । 'तलं स्वरूपाधरयोरस्त्री तालतरौ पुमान् । क्लीबे पेटीज्याभिघातवारणे नवभूतले' इति नानार्थरत्नमाला । मसृणा भूभागा येषु तानि तथा तैः । अत एव प्रकृष्टैः अतिशयितैः । इष्टैरभिलषितैः अगारैर्मन्दिरैः । स्वे स्वकीये । 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पितत्वात् ङेः स्मिन्नभावः । मनोरथे वाञ्छायाम् । परिपूर्यमाणे समृद्धिं प्राप्यमाणे सति । कस्यापि जनस्य । स्पर्धा मत्सरः । स्पर्ध सङ्घर्षे 'गुरोश्च हलः' इत्यकारः । न बभूव । अत्र समृद्ध्यतिशयसाधारण्यस्य हेतोः स्पर्धाभावरूपकार्येण सह वर्णनाद्धेतुरलङ्कारः ॥ ४५ ॥

**नानाजनाभीष्टपदार्थभाजः सत्याभिसन्धा वणिजां वरेण्याः ।
अशिश्रयन्नापणवीथिमच्छां वणिज्यया सञ्चितभूरिभाराः ॥ ४६ ॥**

**नानाजनेति** ॥ तत्रेति वर्तते । पुरे नानाप्रकारकजनानामभीष्टाः अभिलषिताः पदार्था वसनशयनमाल्यादिद्रव्याणि तान् भजन्ति विन्दन्तीति भजतेः कर्तरि क्विप्प्रत्ययः । ते तथोक्ताः । सत्या अवितथा अभिसन्धा

प्रतिज्ञा येषां ते तथोक्ताः 'सन्धा प्रतिज्ञा मर्यादा' इत्यमरः । वरिजां वैश्यानाम् । वरेण्याः मुख्याः । 'मुख्यवर्यवरेण्याश्च' इत्यमरः । वणिज्यया वाणिज्येन वणिक्शब्दात्कर्मणि 'द्यूतवणिग्भ्यां च' इति यप्रत्ययः । 'वाणिज्यं तु वणिज्या स्यात्' इत्यमरः । सञ्चिताः सङ्गृहीताः भूरीणां स्वर्णानां भाराः विंशतितुलासङ्ख्याकाः समूहाः यैस्ते तथोक्तास्सन्तः । 'स्वर्णेऽपि भूरिचन्द्रे द्वे' इति 'भारः स्याद्विंशतिस्तुला' इति चामरः । अच्छां निर्मलाम् । आपणवीथिं विपणिम् । 'आपणस्तु निषद्यायां विपणिः पण्यवीथिका' इत्यमरः । अशिश्रयन् । 'श्रिञ् सेवायां' इत्यतो लुङ् । आश्रितवन्तः । अत्र वणिकस्वभावोक्तेः स्वभावोक्तिरलङ्कारः ।। ४६ ।।

**योग्यान्यधिष्ठाय निकेतनानि स्वाध्यायमध्यापयितुं प्रवृत्ताः ।**
**अमङ्गलानां प्रणवप्रणादैर्द्विजोत्तमा निर्हरणं वितेनुः ।।४७।।**

**योग्यानीति** ।। योग्यानि तत्तदर्हाणि । निकेतनानि वेश्मानि । 'वेश्म सद्म निकेतनम्' इत्यमरः । अधिष्ठाय अध्यास्य । स्वाध्यायं निगमम् । 'स्वाधिपूर्वादिङ् अध्ययने' इति धातोः 'इङश्च' इति घञ् । 'स्वाध्यायो निगमे जप्ये' इति दर्पणः । अध्यापयितुं शिष्यान् ग्राहयितुम् । प्रवृत्ताः द्विजोत्तमाः ब्राह्मणोत्तमाः । प्रणवप्रणादैः प्रणवानामोङ्काराणां प्रणादैर्ध्वनिभिः । अमङ्गलानामशुभानाम् । निर्हरणं निर्हृतिं शान्तिमित्यर्थः । 'स्यान्निर्हरणमित्यदः । निर्हृतौ मुक्षि मान्द्ये च' इति केशवः । वितेनुः । विपूर्वात् 'तनु विस्तारे' इत्यतो लिट् । चक्रुः । समग्राध्यापनेन निबर्हणीयानामशुभानां तदादौ उच्चार्यमाणोङ्कारस्वनमात्रेण उपशमाभिधानात् चपलातिशयोक्तिरलङ्कारः । 'चपलातिशयोक्तिः स्यात्कार्ये हेतुप्रसक्तिजे ।

यास्यामीत्युदिते तन्व्या वलयो भवदूर्मिका ।।' इति चन्द्रालोके सोदाहरणं तल्लक्षणाभिधानात् ।। ४७ ।।

**तुरङ्गमातङ्गरथैः सयोधैः समं नृपाणां नगरप्रवेशे ।**
**तत्राऽऽतपत्राण्युपरि स्फुरन्ति वितेरुरस्थावरसौधबुद्धिम्[१]**
**।। ४८ ।।**

**तुरङ्गमातङ्गरथैरिति** ।। सयोधैः योधाः भटाः । 'भटा योधाश्च योद्धारः' इत्यमरः । तैस्सहितास्तथोक्ता तैः । तुरङ्गा अश्वाश्च मातङ्गा गजाश्च । 'घोटकेवीतितुरगतुरङ्गाश्वतुरङ्गमाः' इति 'गजेऽपि नागमातङ्गौ' इति चामरः । तुरङ्गमातङ्गम् । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति सेनाङ्गत्वादेकवद्भावः । तेन सहिता रथाः तुरङ्गमातङ्गरथाः तैः तेन द्वन्द्वत्वात्सेनाङ्गलक्षण एकवद्भावोऽत्र कस्मान्न स्यादिति चोद्यमलग्नकम् । एवमेव 'रञ्जिता विविधास्तरुशैलाः' इति भारविप्रयोगः । ओषधिवनस्पतीनामिति महाभाष्यप्रयोगश्च । तुषपलालानीत्यादिवच्छाकपार्थिवादित्वान्मध्यमपदलोपी समासः । इति मनोरमायां शब्दकौमुद्यां च निर्व्यूढः । समं 'साकं सत्रा समं सह' इत्यमरः । नृपाणां तत्र नगरप्रवेशे द्वारवतीप्रवेशकाले । उपरि उपरिभागे । स्फुरन्ति प्रकाशमानानि आतपत्राणि श्वेतछत्राणि । अस्थावरसौधबुद्धिम् अस्थावराः जङ्गमाः ते न ते सौधाः राजसदनानि तेषां बुद्धिं भ्रमम् । 'सौधोऽस्त्री राजसदनम्' इत्यमरे राजसदनं सदनानां राजा राजदन्तादित्वात्परनिपात इति भट्टोजिना व्याख्यातः । अस्थावरसौधबोधमिति पाठान्तरम् । वितेरुः 'तॄ प्लवनतरणयोः' लिट् । वितेनुरित्यर्थः । अत्रातपत्रेषु सौधभ्रमवर्णनाद्भ्रान्तिमानलङ्कारः ।। ४८ ।।

१. 'अस्थावरसौधबोधम्' इति पाठान्तरम् ।

**तातं पुरस्कृत्य च रौहिणेयमक्रूरशैनेयसुतोद्धवाद्यैः ।**
**सहोग्रसेनानुगतः सुहृद्भिरुपागमद्द्वारवतीमुपेन्द्रः ।। ४९ ।।**

**तातमिति** ।। उपेन्द्रः श्रीकृष्णः । तातं पितरं वसुदेवम् । रौहिणेयं रोहिणीशब्दात् 'स्त्रीभ्यो ढक्' इति ढक् प्रत्ययः । रोहिणीपुत्रं बलरामं च । पुरस्कृत्य पुरतो विधाय । अक्रूरश्च शैनेयसुतः सात्यकिश्च । 'शिनेश्च नप्ता' इति हि तात्पर्यनिर्णयः । उद्धवश्च ते आद्या आदौ भवा येषां ते तथोक्तास्तैः । सुहृद्भिः मित्रैः । अनुगतोऽनुसृतः । सहोग्रसेनः उग्रसेनराजेन सहितः सन् । द्वारवतीं पुरीम् । उपागमत् । उपपूर्वाद्गमेर्लङ् । उपागतवान् । अत्र तातग्रजयोरुग्रसेनस्य अक्रूरसात्यकिप्रभृतिसुहृदां च क्रमिकाणां क्रमेण पुरस्कारादिक्रियान्वयवर्णनाद्यथासङ्ख्यालङ्कारः । 'यथा-साङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः' इति तल्लक्षणात् । एतदादिचतुर्दश-श्लोकी कुलकं नाम काव्यम् । एकक्रियान्वयात् । 'नगरार्णवशैलर्तु-चन्द्रार्कोदयवर्णनैः' इति नगरवर्णनस्य महाकाव्याङ्गत्वेन कविसम्मतत्वा-न्नगरवर्णनपरा चेयम् ।। ४९ ।।

**उत्तप्तचामीकरक्लृप्तवप्रप्रभाभिरुद्भासितदिङ्मुखाभिः ।**
**आडम्बरं मेरुगिरेरुदारं[1] विडम्बयन्तीभिरभीशुरागैः ।। ५० ।।**

**उत्तप्तेति** ।। अभीशुरागैः अभीशूनां रश्मीनां रागैः रक्तिमवर्णैः । 'वसुपादकराभीशुरश्मिप्रग्रहभानवः' इति शब्दरत्नाकरः । 'अभीशुः प्रग्रहे रश्मौ' इति शाश्वतः । इति माघव्याख्यानं च । 'रागो मात्सर्यवर्णयोः' इति कविदर्पणः । उदारं महान्तम् । 'उदारो दातृमहतोः' इत्यमरः । मेरुगिरेराडम्बरं संरम्भम् । 'आडम्बरस्तूर्यरवे संरम्भे पटहेऽपि च' इति

१. 'उदाराम्' इति पाठान्तरम् ।

कविदर्पणः । विडम्बयन्तीभिः अनुकुर्वतीभिः । उद्भासितानि प्रकाशितानि दिङ्मुखानि दिशां भागाः याभिस्तास्तथोक्ताः ताभिः । उत्तप्तानि पुटपाकशोधितानि चामीकराणि काञ्चनानि । 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः । तैः क्लृप्ताः निर्मिताः वप्राः प्राकाराः । 'वप्रस्तु ताते पुंसि स्यादस्त्रियां सानुतीरयोः । प्राकारक्षेत्रयोः सेतौ' इति कविदर्पणः। तेषां प्रभाभिरुपलक्षितां द्वारवतीं उपागमदिति पूर्वेण सम्बन्धः । उदारामिति पाठे । उत्कृष्टामित्यर्थः । अत्र पक्षे अभीशुरागैः सम्पन्नमाडम्बरमिति योज्यम् । विडम्बयन्तीभिरिति श्रवणादार्थीयमुपमालङ्कारः ।। ५० ।।

**या सौधपङ्क्त्या दिवमालिखन्त्या तटित्वता चुम्बितयाम्बुदेन ।**
**दधाति धाम प्रथमस्य पुंसः श्रिया शयानस्य फणीन्द्रभोगे**
**।। ५१ ।।**

**या सौधपङ्क्त्येति** ।। या द्वारवती । दिवमन्तरिक्षम् । आलिखन्त्या स्पृशन्त्या । तटित्वता तटितः सन्त्यस्मिन्निति मतुप् 'झयः' इति वत्वम् । भत्वेनापदान्तत्वान्न जश्त्वम् । सौदामिनीसमेतेन अम्बुदेन मेघेन । चुम्बितया संयुक्तया । सौधानां राजसदनानां पङ्क्त्या । फणीन्द्रस्य शेषस्य भोगे काये । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । श्रिया सह शयानस्य शयनं कुर्वतः । प्रथमस्य पुंसः आदिपुरुषस्य हरेः धाम प्रभाम् । 'धामजन्मप्रभास्थानप्रभावसुखसद्मसु' इति नानार्थरत्नमाला । दधाति 'डुधाञ् धारणपोषणयोः' इत्यतो लट् । वहति । अत्रान्यधर्मस्यान्यत्र सत्वासम्भवाद्भगवतो धामेति । औपम्यपर्यवसानात् असम्भवद्वस्तुसम्बन्धनिबन्धनरूपो निदर्शनालङ्कारभेदः । यदाह । 'पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम् । त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ।।'

इति । तेन च भगवतो नगरस्य च बिम्बप्रतिबिम्बभावापन्नधर्मिकोपमालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । तां द्वारवतीमुपागमदिति सम्बन्धः ॥ ५१ ॥

**बद्धेषु शुद्धस्फटिकोपलेन हर्म्येषु यस्य प्रतिबिम्बितोष्ठ्यः ।**
**रक्तानि रत्नानि चरन्ति चारूण्यत्रेति लोला ललना भ्रमन्ति ॥ ५२ ॥**

**बद्धेष्विति** ॥ यत्र पुर्याम् । शुद्धस्फटिकोपलेन शुद्धेन निर्मलेन स्फटिकोपलेन स्फटिकानामश्मना । जात्यभिप्रायमेकवचनम् । बद्धेषु खचितेषु । हर्म्येषु धनिकगृहेषु । 'सौधोऽस्त्री राजसदनं धनिनां पुंनपुंसकम् । हर्म्यम्' इति शब्दरत्नाकरः । प्रतिबिम्बिताः प्रतिफलिताः ओष्ठाः अधराः यासां तास्तथोक्ताः । 'ओत्वोष्ठयोः समासे वा' इति पक्षे वृद्ध्यभावः । 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च' इति ङीष् । ललनाः स्त्रियः । 'प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इत्यमरः । अत्र हर्म्येषु । रक्तानि अरुणानि चारूणि मनोहराणि । 'सुन्दरं रुचिरं चारु मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः । रत्नानि प्रवालपद्मरागादीनि चलन्ति चलन्ते इति लोलाः सतृष्णाः सत्यः भ्रमन्ति परिवर्तन्ते । 'भ्रमु अनवस्थाने' लट् । अत्र हर्म्यप्रतिबिम्बितोष्ठेषु रत्नभ्रान्तिवर्णनाद्भ्रान्तिमानलङ्कारः । अनेन सौष्ठ्वं व्यज्यत इति वस्तुध्वनिः तामुपागमदिति सम्बन्धः ॥ ५२ ॥

**स्पष्टेन्द्रनीलैरतिदीप्तिमद्भिरुत्तुङ्गवेश्माग्रसमर्पितैर्या ।**
**विमानगेभ्यो गगनेचरेभ्यो दृष्टिं ददातीव विहाय लज्जाम् ॥ ५३ ॥**

**स्पष्टेति** ।। या पुरी । समृद्धा दीप्तयः ता येषां सन्तीति अतिदीप्तिमन्तः । 'अतिः पूजाभृशार्थावमत्यतिक्रमणसमृद्धिभूताभावावज्ञानहीनार्थेषु' इत्युपसर्गनिघण्टुः । 'एकदेशिनैकाधिकरणे' इति ज्ञापकात् मतुबुपपत्तिः । उत्तुङ्गान्युन्नम्राणि वेश्मनां गृहाणामग्राणि तेषु समर्पितैर्विन्यस्तैः । स्पष्टाः स्फुटाश्च ते इन्द्रनीलाश्च तैः विमागेभ्यो विमानेन गच्छन्तीति विमानगाः तेभ्यः । गगनेचरेभ्यः । देवगन्धर्वेभ्यः । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । लज्जां विहाय । दृष्टिमवलोकनं ददातीवेत्युत्प्रेक्षालङ्कारः । यथाहि कामिनी अभिलषितं सुन्दरं कामिनं निर्निमेषं पश्यति तथा पुरी वेश्मशिखराग्रगतैरिन्द्रनीलैः दृष्टिसदृक्षैः विलज्जं पश्यतीवेति भावः । तामिति पूर्ववत् ।। ५३ ।।

**नक्षत्रमालात्वमुपागतेषु नक्षत्रसङ्घेषु निशासु यस्याः ।**
**तन्नायकत्वं किल शीतरश्मिरुपैत्यहर्मण्डनमंशुमाली ।।५४।।**

**नक्षत्रमालात्वमिति** ।। यस्याः पुर्याः । नक्षत्रमार्गातिलङ्घिसौधवदनबिम्बाया इति भावः । निशासु रात्रिषु । नक्षत्रसङ्घेषु नक्षत्राणां समूहेषु । नक्षत्रमालात्वं सप्तविंशतिसङ्ख्याकमुक्ताफलशालिहारत्वम् । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः । उपागतेषु प्राप्तवत्सु । शीतरश्मिश्चन्द्रः । तन्नायकत्वं तस्याः हारमालायाः नायकत्वं मध्याबद्धमणित्वम् । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः । उपैति प्राप्नोति । किल सम्भावनायाम् । 'वार्तासम्भाव्ययोः किल' इत्यमरः । अंशुमाली सूर्यस्तु । अहर्मण्डनम् अहस्सु मण्डनमलङ्कारः । 'मण्डनं स्यादलङ्कृतिः' इति कविदर्पणः । भवतीति शेषः । शिरोरत्नं ललाटरत्नं नासारत्नं वा कण्ठरत्नं निष्करत्नं वेति चन्द्रवदलङ्कारविशेषत्वेन निर्धारयितुमशक्यत्वादहर्मण्डनमिति सम्मुग्धोक्तिः ।। ५४ ।।

**भेरीमहोर्मिध्वनिपूरिताशा वधूमुखानुष्णगुसङ्गमेद्धा ।
अनन्तनानामणिरम्यगर्भा समुद्रजा याऽधिसमुद्रमाभात्
॥ ५५ ॥**

**भेरीति** ॥ भेर्यो दुन्दुभय एव ऊर्मयस्तरङ्गाः तासां ध्वनिभिर्घोषैः पूरिताः आशाः दिशः यया सा तथोक्ता । 'भङ्गस्तरङ्ग ऊर्मिर्वास्त्रियाम्' इत्यमरः । वधूनां नारीणां मुखमेवानुष्णगुः शीतकिरणश्चन्द्रः तस्य सङ्गमेन सम्बन्धेन इद्धा दीप्ता अभिवृद्धाः । अनुष्णाः शीताः गावः किरणा यस्य सोऽनुष्णगुः । 'गोस्त्रियोरुपसर्जनस्य' इति गोशब्दस्य ह्रस्वता । अनन्ता असङ्ख्याताः । नानाविधाश्च ते मणयश्च तै रम्यः मनोहरो गर्भो यस्यास्सा । समुद्रे जायत इति समुद्रजा । सप्तम्यां जनेर्डः । अधिसमुद्रम् । विभक्त्यर्थेऽव्ययीभावः । समुद्रे या पुरी । आभात् अदीप्यत । भा दीप्तौ । तामिति सम्बन्धः । अत्र कार्यभूतायाः पुर्याः कारणेन समुद्रेण सारूप्यवर्णनात्समालङ्कारः । 'सारूप्यमपि कार्यस्य कारणेन समं विदुः । नीचप्रवणता लक्ष्मि जलजायास्तवोचिता ॥' इति हि तल्लक्षणोदाहरणे
॥ ५५ ॥

**अधःकृतायां निजवासभूमौ सौभाग्ययोगात्सुरराजधान्याम् ।
यामध्यतिष्ठत्स्वयमेव लक्ष्मीराकल्पभूता भुवनत्रयस्य ॥५६॥**

**अधःकृतायामिति** ॥ भुवनत्रयस्य भुवनानां जगतां त्रयस्य । आकल्पभूता भूषणभूता । 'आकल्पो मण्डनं वेषः प्रतिकर्म प्रसाधनम् । भूषणं स्यादलङ्कारो नेपथ्याभरणे तथा' इति हलायुधः । लक्ष्मीः निजवास-भूमौ स्वावासस्थाने । सुरराजधान्याम् । 'प्रधाननगरी राज्ञां राजधानीति

कथ्यते' इति मेघसन्देशव्याख्यानम् । सौभाग्यस्य सुभगत्वस्य योगात् सम्बन्धात् । अधःकृतायां सत्याम् । यां पुरीं द्वारवतीम् । अध्यतिष्ठत् । 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मत्वम् । तामिति सम्बन्धः । अत्र सुरराजधान्यधरीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः । सम्पल्लक्ष्म्या सुरराजधानीत्यागेन द्वारवत्याश्रयकथनात् पर्यायोक्तमलङ्कारः । 'पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः । पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनप्रभा ॥' इति हि तल्लक्षणोदाहरणे ॥ ५६ ॥

**जालान्तराभ्यागतमन्दवातव्यासङ्गसंवर्धितवर्ष्मभाजाम् ।**
**न सोढुमीशाः सुरतं युवानो वाञ्छा क्रमाद्यत्र वराङ्गनानाम्**
**॥ ५७ ॥**

**जालान्तरेति** ॥ यत्र नगर्याम् । युवानः जालानां गवाक्षणाम् अन्तराणि विवराणि तेभ्योऽभ्यागतश्चासौ मन्दवातः प्रचण्डानिलश्च तस्य व्यासङ्गः सम्बन्धः तेन संवर्धितानि आप्यायितानि वर्ष्माणि शरीराणि तानि भजन्तीति भजतेः कर्तरि क्विप् प्रत्ययः । 'भजो ण्विः' इति सूत्रात् । तथोक्तानाम् । 'जालं समूह आनाय गवाक्षक्षारकावपि' इत्यमरः । 'चामरे चान्तरं रन्ध्रं विवरव्यवधानयोः' इति कविदर्पणः । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । वराङ्गनानां युवतीनां च । क्रमान्मनोरथपौनःपुन्यात् । उपजनितं सुरतं पुरुषायितसुरतम् । वाञ्छा परिपाटी समुपजनि तस्य पुम्भावोपनतस्य सहनायेत्यर्थः । ईशाः समर्थाः । नासन् तामिति सम्बन्धः । अत्र जालान्तराभ्यागतेति विशेषणस्य वरवर्णिनीषु नायकसहनानर्हपुरुषायिता-चरणसामर्थ्याभिप्रायगर्भत्वात् परिकरालङ्कारः ॥ ५७ ॥

**अत्यादरान्मन्दिरमादिपुंसे सम्पादितं यत्र मणिप्रबद्धम् ।**
**सीमायते कर्मसु कौशलस्य महीयसस्त्वष्टुरदृष्टसीम्नः**
**।। ५८ ।।**

**अत्यादरादिति** ।। यत्र नगर्याम् । मणिप्रबद्धमिन्द्रनीलादिरत्नान्वितम् । अत्यादरात् भक्त्यतिशयात् । 'ॐआदरादलोपःॐ' इति सूत्रे एकादशतात्पर्योदाहृतं तत्त्वप्रकाशिकोक्तं 'आदरो भजनं भक्तिः' इत्यभिधानम् । 'स्यात्तु संवेग आदरः' इत्यमरशेषश्च । हर्षादिना कर्मसु त्वरणं संवेग इति व्याख्यानम् । आदिपुंसे पुराणपुरुषाय हरये । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति तुमुन् कर्मणि चतुर्थी । आदिपुमांसं प्रसादयितुमित्यर्थः । सम्पादितं निर्मितम् । मन्दिरं गृहम् । त्वष्टुर्देववर्धकेः विश्वकर्मणः । अदृष्टसीम्नः अदृष्टः अविज्ञातः सीमा कुलमवधिर्वा यस्य तत्तथा तस्य अज्ञातावधिकस्येत्यर्थः । अत एव महीयसः महत्तस्य । कर्मसु शिल्पेषु । कौशलस्य नैपुण्यस्य । सीमायते अवधिरिवाचरति । तामिति । पूर्ववत् ।। ५८ ।।

**यस्यां न नासेचनको[१] न दुःस्थो**
**न निर्धनो नो पिशुनश्च कश्चित् ।**
**सर्वेऽस्तिमन्तः पुरुषा वसन्तः**
**स्वकर्मभिः सत्पुरुषं यजन्तः ।। ५९ ।।**

**यस्यामिति** ।। यस्यां पुर्याम् । कश्चित् कोऽपि । जनो नासेचनको न दर्शनीयतमो नेति न । 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्'

---
१. 'यस्यां त्वनासेचनक' इति पाठान्तरम् ।

इत्यमरः । दुःस्थः अनभिज्ञः न । 'दुःस्थो निस्वानभिज्ञयोः' इति दर्पणः । निर्गतं धनं यस्मात्स निर्धनः स च न । पिशुनः खलः । 'कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः' इत्यमरः । नो नास्ति । किन्तु सर्वेऽपि वसन्तः पुरुषाः नागराः । अस्तिमन्तः । 'अस्ति सत्वे' इत्यमरकोशात् अस्तिशब्दः सत्त्वार्थकः । अस्ति परलोकसत्त्वं इति मतिर्येषामित्यस्तिमन्तः । आस्तिका इत्यर्थः । स्वकर्मभिः स्वस्वाश्रमोचित-धर्मैः । सत्पुरुषं भगवन्तम् । 'पुरुषः परमात्मनि' इति कविदर्पणरीत्या-श्रयणे सदिति क्रियाविशेषणं वा । यजन्तः पूजयन्तः सन्ति । तामिति पूर्ववत् । अत्र नासेचनकादेरभाववर्णनेन नगरस्य रम्यत्ववर्णनाद्विनोक्ति-रलङ्कारः । 'तच्चेत्किञ्चिद्विना रम्यं विनोक्तिः सापि कथ्यते । विना खलैर्विभात्येषा राजेन्द्र भवतः सभा ॥' इति लक्षणोदाहरणे । यस्यां त्वनासेचनक इत्यपि क्वचित्पाठः ॥ ५९ ॥

**यस्यां गुरूणां गणने गुणानां गुरोर्गिरो धातुरपि स्खलन्ति ।**
**को वेद मूर्तेरिव चानुभावं नारायणज्योतिष आस्पदस्य**
**॥ ६० ॥**

**यस्यामिति** ॥ नारायणज्योतिषः नारायण एव ज्योतिः तेजः तस्य मूर्तेः कायस्य । 'ज्योतिस्तेजश्च धाम च' इति शब्दरत्नाकरः । 'मूर्तिः काठिन्यकाययोः' इत्यमरः । गुरूणां महताम् । 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेष्टरि' इति हेमचन्द्रः । गुणानां शुद्धानन्दोरुसंविद्द्युतिबलबहुलौदार्य-वीर्यादीनाम् । गणने सङ्ख्याने । धातुर्गिरश्चतुर्मुखस्य वाच इव नारायण-ज्योतिषो मूर्तेः अवतारभूतस्य श्रीकृष्णस्य आस्पदस्य स्थानस्य । 'आस्पदं त्ववलम्बेऽपि स्थाने कृत्येऽपि कथ्यते' इति कविदर्पणः । यस्या नगर्याः ।

गुरूणां गुणानां गणने गुरोः बृहस्पतेरपि । गिरो वाचः । स्खलन्ति प्रच्यवन्ते तदन्यः को वा । अनुभावं प्रभावम् । महिमानमित्यर्थः । 'अनुभावः प्रभावे च' इत्यमरः । वेद तामिति सम्बन्धः । अत्र उपमा-लङ्कारः । कैमुत्येनार्थसंसिद्धिवर्णनात्काव्यार्थापत्तिरलङ्कारश्च सङ्कीर्यते ॥ ६० ॥

**स्थितास्वयोग्यास्वितरासु लोके पुरीषु सादृश्यविभूतिलब्ध्यै ।**
**या स्वात्मनाऽब्धौ प्रतिबिम्बितेन स्वयं कथञ्चित्सदृशी बभूव ॥ ६१ ॥**

**स्थितास्विति** ॥ या पुरी इतरासु पुरीषु स्थितासु । सादृश्यस्य विभूतिरैश्वर्यसम्पत्तिस्तस्या लब्ध्यै प्राप्त्यै । 'क्रियार्थोपपदस्य' इति तुमुनः कर्मणि चतुर्थी । लब्धिमापादयितुमयोग्यासु सतीषु । अब्धौ प्रतिबिम्बितेन प्रतिफलितेन स्वात्मना । अतिस्पष्टताभावात् । कथञ्चित् केनापि प्रकारेण । स्वयं सदृशी सादृश्यवती । बभूव । अत्र स्वसाम्यलब्धये प्रयतमानायाः पुर्याः प्रतिबिम्बितेन सादृश्यलाभवर्णनात् समालङ्कारविशेषः । 'विनानिष्टं च तत्सिद्धिर्यदर्थः कर्तुरुद्यमः । युक्तो वारणलाभोऽयं श्याल ते वारणार्थिनः ॥' इति सोदाहरणलक्षणवाक्ये चशब्देन सममित्यनुकर्षणात् ॥ ६१ ॥

**जिहीर्षवः स्वप्रतिमानकण्डूमदृष्टलक्षाः[१] स्फुटदानवर्षाः ।**
**श्रुत्वोर्मिशब्दं प्रतिवप्रबिम्बं[२] यस्यां गजेन्द्राः परिणन्तुकामाः ॥ ६२ ॥**

---

१. 'अदृष्टलक्ष्या' इति पाठान्तरम् । २. 'प्रतिवप्रबिम्बा' इति पाठान्तरम् ।

**जिहीर्षव इति** ।। यस्यां पुर्याम् । स्फुटानि प्रव्यक्तानि दानानां वर्षाणि वृष्टयो येषां ते तथोक्ताः । तेषां 'स्फुटं प्रव्यक्तमुल्बणम्' इति । 'गण्डः कटो मदो दानम्' इति । 'वृष्टिर्वर्षम्' इति चामरः । अदृष्टानि लक्षाणि लक्ष्याणि यैस्ते तथोक्तः । 'लक्षं लक्ष्यं शरव्यं च' इत्यमरः । अदृष्टलक्ष्या इत्यपि क्वचित्पाठः । ऊर्मीणां तरङ्गाणां शब्दं घोषम् । श्रुत्वा प्रतिगर्जितमिति भ्रान्त्या । स्वप्रतिमानकण्डूं स्वप्रतिमानस्य स्वप्रतिबिम्बस्य कण्डूतिं प्रतिगजसम्भावनोपजनितकण्डूतिमित्यर्थः । स्वदन्तान्तरालकण्डूतिं वा । 'प्रतिमानं प्रतिच्छाया गजदन्तान्तरालयोः' इति विश्वः । जिहीर्षवः हर्तुमिच्छवः । प्रतिवप्रबिम्बं सर्वेष्वपि प्राकारमण्डलेषु । 'वप्रस्तु ताते पुंसि स्यादस्त्रियां सानुतीरयोः । प्राकारक्षेत्रयोः सेतौ' इति दर्पणः । परिणन्तुकामाः वप्रक्रियां कर्तुकामः वप्रभित्तिषु सकुम्भमस्तकतिर्यगाघाताचरणचटुला इत्यर्थः । 'वप्रक्रिया परिणतिः' इति शब्दरत्नाकरः । आसन् । इति तामिति सम्बन्धः । प्रतिवप्रबिम्बा इति पाठस्तु वप्रेषु बिम्बाः वप्रबिम्बाः प्रतिगता वप्रबिम्बा यैस्ते तथोक्ता इति व्याख्येयः । अत्र परिणतिक्रियायाः समर्थनीयायाः स्फुटदानवर्षा इति समर्थनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।। ६२ ।।

**एवं प्रतिष्ठाप्य पराजितारिस्तस्मिन्स दुर्गे नगरे जनं स्वम् ।**
**निरायुधानीकरथो निगूढो जगाम वेगान्मधुरां मुरद्विट्[1]**
**।। ६३ ।।**

**एवमिति** ।। पराजितारिः पराजिताः अरयः येन स तथा । मुरद्विट् मुरारिः श्रीकृष्णः । सुदुर्गे 'सुदुरोरधिकरणे' इति गमेर्डः । सुतरां

१. 'मधुद्विट्' इति पाठान्तरम् ।

गन्तुमशक्ये नगरे द्वारकाख्ये । एवमिष्टैरगारैरित्याद्युक्तप्रकारेण । स्वं स्वकीयम् । जनं यादवलोकम् । प्रतिष्ठाप्य सूषितान् कृत्वा । निरायुधानीकरथः आयुधानि नन्दकादीनि अनीकानि सैन्यानि रथाश्च निर्गताः यस्मात्स तथोक्तः । निगूढः संवृत्तः सन् । वेगात् । 'विभाषा गुणेऽस्त्रियाम्' इति पञ्चमी । वेगेन मधुरां पुरीमिति शेषः । जगाम गमेर्लिट् । प्राप्तवान् । मधुद्विडित्यपि पाठः । वर्णानुवृत्तेः शब्दालङ्कारः स्फुटः ॥ ६३ ॥

**तं देशमासाद्य तदैव वैरी बलैस्समन्तात्परिवार्य तिष्ठन् ।**
**ददर्श दाशार्हमगर्हणीयं समाह्वयन्नर्हमिवाहवार्थी ॥ ६४ ॥**

**तं देशमिति** ॥ तं देशं मधुरादेशम् । आसाद्य प्राप्य । यदा श्रीकृष्णेन आगतं तदैव बलैस्सैन्यैः । समन्तादभितः । परिवार्य निरुध्य । आहवार्थी युद्धार्थी तिष्ठन् । वैरी शत्रुः कालयवनः । अगर्हणीयम् अनिन्दनीयम् । अर्हमिव स्वेन सह योद्धुमुचितमिव । आह्वयन् । ह्वेञ् स्पर्धायां शब्दे च । स्पर्धमानः आकारयन्वा स सन् । दाशार्हं श्रीकृष्णम् । 'बलानुजन्मा दाशार्हः रुक्मिणीजानिः' इति शब्दरत्नाकरः । ददर्श 'दृशिर् प्रेक्षणे' इत्यतो लिट् । आह्वयन् ददर्शेति दर्शनाह्वानयोर्हेतुकार्ययोः सहभाव वर्णनात् । अक्रमातिशयोक्तिरलङ्कारः । 'अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोः । आलिङ्गन्ति समं देव ज्यां शराश्च पराश्च ते' इति सोदाहरणं तल्लक्षणाभिधानात् ॥ ६४ ॥

**भो मापगा माधव तिष्ठ तिष्ठेत्याक्रुश्य तूर्णं प्रहरन्तमुच्चैः ।**
**दृष्ट्वेत्यमर्षात्कलुषीकृताक्षं सञ्चिन्त्य धूर्तो हरिरित्यधावत् ॥ ६५ ॥**

**भो मापगा इति** ।। अभिमुखीकरणे भो इत्यव्ययम् । भो माधव त्वं मापगाः अपगमनं पलायनं माकार्षीः । 'इणो गाः लुङि' इति गादेशः । 'माङि लुङ्' 'न माङ्योगे' इत्यडभावः । किन्तु तिष्ठ तिष्ठ 'चापले द्वे भवतः' इति वक्तव्यात् सम्भ्रमेण प्रवृत्तद्विर्वचनम् । इत्युच्चैर्भृशम् । आक्रुश्य आहूय । तूर्णं यथा तथा वेगात् प्रहरन्तमत्यमर्षात् अत्यन्तासहनात् । कलुषीकृताक्षमकलुषे कलुषे आविले सम्पन्ने कलुषीकृते तथाविधे अक्षिणी यस्य स तथा तम् । 'कलुषोऽनच्छ आविलः' इत्यमरः । अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विप्रत्ययः । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । तं दृष्ट्वा । धूर्तो वञ्चकः । 'धूर्तस्तु वञ्चकः' इत्यमरः । इति सञ्चिन्त्य हरिः अधावत् । 'धावु गतिशुद्ध्योः' इत्यतो लङ् । पलायत ।। ६५ ।।

**प्रमापणोपायमपारकीर्तिः[१]स्तस्याधिगम्य प्रविवेश शौरिः ।**
**अव्याकुलस्तां महतीं गुहायां यस्यां स शेते**
**मुचुकुन्दनामा ।। ६६ ।।**

**प्रमापणोपायमिति** ।। अपारा कीर्तिर्यस्य स तथा । शौरिः श्रीकृष्णः । अपायकीर्तेरिति पाठे अपैतीत्यपाया पचाद्यच् । तादृशी कीर्तिर्यस्य तस्य नश्वरयशस इत्यर्थः । तस्य कालयवनस्य । प्रमापणं निबर्हणम् । 'प्रमापणं निबर्हणं निकारणं निशारणम्' इत्यमरः । तस्योपायं साधनम् । अधिगम्य ज्ञात्वा । अव्याकुलः अव्यग्रः सन् । यस्यां गुहायां मुचुकुन्दनामा सः प्रसिद्धो राजा शेते । तां महतीं गुहाम् । प्रविवेश 'विश प्रवेशने' लिट् । अत्र गुहाप्रवेशो दोषेऽपि शत्रुप्रमापणोपायत्वरूपगुणकल्पनाल्लेशालङ्कारः । 'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम्' इति तल्लक्षणात् ।। ६६ ।।

१. 'अपायकीर्तेः' इति पाठान्तरम् ।

यस्यानुभावमित्यादित्रिश्लोक्या कलापभङ्ग्या मुचुकुन्दचरितं कालयवन-वधानुकूलमुपोद्धातेनाह–

**यस्यानुभावं नृपतेरमोघं श्रान्तः समाश्रित्य पुरामरेन्द्रः ।**
**प्रच्याव्य कृत्स्नं दनुजारिसङ्घं[1] पदं स्वकीयं कथमप्यवाप**
**॥ ६७ ॥**

**यस्येति** ॥ पुरा पूर्वं कदाचिद्युद्धवेलायाम् । श्रान्त आयस्तः । अमरेन्द्रः । यस्य नृपतेरमोघं अनिरर्थकम् । अनुभावं प्रभावम् । आश्रित्य । कृत्स्नं दनुजाश्च तेऽरयश्च तेषां सङ्घं समूहम् । दनुजेन्द्रसङ्घमित्यपि पठन्ति । कथमपि महता प्रयत्नेन । प्रच्याव्य स्वपदात् प्रच्युतं कृत्वा । स्वकीयं पदं स्वर्गस्थानमवाप । 'आप्लृ व्याप्तौ' लिट् । स मुचुकुन्दनामेति पूर्वेणान्वयः । अत्र मुचुकुन्दस्यानुभावगुणेनेन्द्रस्य स्वपदप्राप्तिरूपगुणवर्णना-दुल्लासालङ्कारः । 'एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि । अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी' इति सोदाहरणं तल्लक्षणाभिधानात् ॥ ६७ ॥

**वरोऽपि येन त्रिदिवालयेभ्यो वृतः कृतप्रत्युपकारकृद्भ्यः ।**
**दह्येत दृष्ट्यैव पुरः पुमान्यो निद्रान्तरायं कुरुते ममेति**
**॥ ६८ ॥**

**वर इति** ॥ येन मुचुकुन्देन । कृतस्य दनुजसंहाररूपकर्मणः प्रत्युपकारः स्वाभीष्टवररूपः तम् । कृतवद्भ्यः कृतप्रत्युपकारकृद्भ्यः । त्रिदिवः स्वर्ग आलयो येषां ते तथोक्ताः तेभ्यः । अपादाने पञ्चमी ।

---

१. 'दनुजेन्द्रसङ्घम्' इति पाठान्तरम् ।

यः पुमान् । मम निद्रान्तरायं निद्रायाः विघ्नम् । कुरुते सः पुरः पुरतः दृष्ट्यैव अवलोकनमात्रेण । न पुनरायासेनेत्येवकारार्थः । दह्येत दह भस्मीकरणे लिङ् । भस्मीक्रियेत । इति वरः देवाद्वृियमाणोऽर्थः । 'देवाद्वृते वरः श्रेष्ठे' इत्यमरः । पूर्वोपकारेण परोपकारस्य समुच्चयादपि-शब्दः । वृतः । तेन 'अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् । त्रियामा भाति शशिना शशी भाति त्रियामया' इत्युक्तोऽन्योन्यालङ्कारो निबद्धः । स मुचुकुन्दनामेति पूर्ववदन्वयः ।। ६८ ।।

**सम्मानितो यो मुनिभिस्तपस्वी**
**कृत्वाऽप्रतर्क्यं व्यवसायमन्यैः ।**
**भक्तश्च शार्ङ्गिण्यतिदीर्घकालं**
**निद्रातुरः सुप्तिसुखं प्रपेदे ।। ६९ ।।**

**सम्मानित इति** ।। यो राजा अन्यैरप्रतर्क्यम् अनूह्यं व्यवसायं निश्चयम् । कृत्वा तपोऽस्यास्तीति तपस्वी । तपस्सहस्राभ्यामिति तपः शब्दात् विनिः । शार्ङ्गिणि शार्ङ्गं शृङ्गस्य विकारः चोपोऽस्यास्तीति शार्ङ्गी तस्मिन् । भक्तश्च । शार्ङ्गिणो भजति । कर्मणोऽपि अधिकरणत्वविवक्षया कर्मत्वाविवक्षणादकर्मकत्वे कर्तरि क्तः । यद्वा भक्तं भजनं भावे निष्ठा तदस्यास्तीति अर्शआद्यच् इति दुर्घटवृत्तिकारादयः । अतिदीर्घश्चासौ कालश्च तम् । 'कालाध्वनोरत्यन्तसंयोगे' इति कालशब्दाद्द्वितीया । निद्रायामातुतोर्ति । 'तुर त्वरणे' जुहोत्यादिः । छान्दसा अपि क्वचि-द्विभाषायां प्रयुज्यन्त इति वैयाकरणाः । 'इगुपध' इति कः । आतुरः निद्रायां त्वराशालीत्यर्थः । 'आतुरोऽभ्यमितोऽभ्यान्तः' इत्यमरः । सुप्तिसुखं सुप्त्या प्राप्यमानन्दं प्रपेदे । 'पदलृ गतौ' लिट् । स मुचुकुन्द-

नामेति पूर्वान्वयः । अत्र मुनिकर्तृकसम्माननस्य समर्थनीयस्य अन्यैरप्रतर्क्यं व्यवसायं कृत्वा तपस्वीति वाक्यार्थेन समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्ग-मलङ्कारः । इयं च त्रिश्लोकी कलापकं नाम काव्यम् । यदाह वीरनारायणः 'त्रयाणमेकवाक्यत्वं छन्दसां स्यात्कलापकम्' इति । वाक्यान्तरनिरपेक्षाणां श्लोकानामेकवाक्यत्वे कलापकं नाम काव्यमित्यर्थ इति चिन्तामणिकारः ॥ ६९ ॥

**अमुष्य बन्धोर्निभृते मुरारौ निमीलिताक्षस्य शिरःप्रदेशम् ।**
**प्राप्ते समाप्तायुरनुद्रवंस्तं दुद्राव तामेव गुहां स नीचः ॥ ७० ॥**

**अमुष्येति** ॥ बन्धोः स्वजनस्य । मीलिताक्षस्य निद्रावशान्निमीलिते मुकुलिते अक्षिणी यस्य स तथा तस्य । अमुष्य मुचुकुन्दस्य । शिरःप्रदेशं शिरोभागम् । मुरारौ श्रीकृष्णे । प्राप्ते निभृते । 'निभृतो निश्चले पूर्णे' इति कविदर्पणः । सति । तं कृष्णमनुद्रवन् अनुसृत्य द्रवन् धावन् । समाप्तमायुर्यस्य स तथा नष्टायुः नीचः अल्पः । 'नीचस्त्रिष्वधमेऽल्पे स्यात् इति दर्पणः । स कालयवनः । तामेव श्रीकृष्णेन प्रविष्टामेव गुहाम् । दुद्राव द्रु गतौ । प्रविवेशेत्यर्थः । अत्र नीच इति समाप्तायुरिति च विशेषणं निपुणत्वादौ मन्दत्वाद्यभिप्रायगर्भमिति परिकरालङ्कारः ॥ ७० ॥

**दस्यो हरिष्यामि तवाधुनाऽसूनित्या-**
**त्तजल्पेन मुकुन्दबुद्ध्या ।**
**अनेन गाढाभिहतः पदेन स**
**आदिराजः प्रतिबोधितोऽभूत् ॥ ७१ ॥**

**दस्यो इति** ।। मुकुन्दबुद्ध्या मुचुकुन्द एव मुकुन्दत्वभ्रमेण । हे दस्यो चोर । 'दस्युश्चोरद्विषोः' इति कविदर्पणः । तव असून् प्राणान् । अधुना हरिष्यामि । 'हृञ् हरण' इत्यतो लृट् । आत्तः उपात्तः जल्पो जल्पनं येन स तथा तेन । अनेन कालयवनेन । कर्तरि तृतीया । पदेन । करणे तृतीया । अङ्घ्रिणा गाढं यथा तथा अभिहतः भृशं ताडितः । स शयान आदिराजः मुचुकुन्दः । प्रबोधितः निद्रातः उद्बोधितः । अभूत् 'भू सत्तायां' लुङ् । अत्र भ्रान्तिमानलङ्कारः ।। ७१ ।।

**तेन स्फुटोन्मीलितलोचनेन म्लेच्छाधिनाथस्य शरीरयष्टिः ।**
**भस्मीकृता भस्मविभूषणेन क्षणेन यद्वन्मकरध्वजस्य**
**।। ७२ ।।**

**तेनेति** ।। म्लेच्छानामधिनाथस्य कालयवनस्य । शरीरयष्टिः शरीरं यष्टिर्दण्ड इवेत्युपमितसमासः । 'उपमितं व्याघ्रादिभिः' इत्यादिना । 'यष्टिर्दण्डो हारभेदः' इति नानार्थरत्नमाला । स्फुटं प्रव्यक्तम् उन्मीलितमुद्बुद्धं लोचनं यस्य स तथा तेन । मुचुकुन्देन । भस्म विभूषणं यस्य स तथा तेन शम्भुना । मकरध्वजस्य शरीरयष्टिर्यद्वत् शरीरयष्टिरिव । क्षणेन क्षणकालेन । भस्मीकृता भस्मभावं नीता । दग्धेति यावत् । अत्रोपमालङ्कारः । हरिविजयाशया प्रवृत्तस्य शत्रोर्न केवलं विजयानवाप्तिः किन्तु स्वशरीरभस्मीभावानिष्टावाप्तिश्चासीदिति प्रतिपादनात् विषमालङ्कारप्रभेदश्चेति तयोस्सङ्करः ।। ७२ ।।

**पश्चादुरुज्योतिरुपाधिमस्य तिष्ठन्तमालक्षयतः समक्षम् ।**
**राज्ञोऽन्तरात्मा किल सप्रसादो निवेदयामास तमादिदेवम्**
**।। ७३ ।।**

**पश्चादिति** ।। पश्चात्कालयवनवधानन्तरकाले । 'प्रतीच्यां चरमे पश्चात्' इत्यमरः । उरूणि विपुलानि ज्योतींषि तेजांसि उपाधिर्विशेषणं यस्य स तथा तम् उरुज्योतिरुपाधिम् । 'उपाधिर्धर्मचिन्तायां कुटुम्बव्यापृतावपि । विशेषणे कैतवे स्यात्' इति कविदर्पणः । दुर्दर्शेन धाम्ना विशेषणेन सूर्यादितो व्यावृत्तमिति भावः । समक्षं प्रत्यक्षम् । 'प्रतिपरसमनुभ्योऽक्ष्णः' इत्यक्षिशब्दाट्टच् । अव्ययीभावसमासः । अत एवाव्ययत्वं च । तिष्ठन्तं व्यक्तिविशेषम् । आलक्षयतः पश्यतः । अस्य राज्ञो मुचुकुन्दस्य । सप्रसादः प्रसादेन सहितः प्रसन्नः । अन्तरात्मा मनः । तं पुर आलक्षितम् । आदिदेवं श्रीकृष्णम् । निवेदयामास । विद ज्ञाने ज्ञापितवान् । किलेति वार्तायाम् । एवमस्ति पौराणिकी प्रसिद्धिरित्यर्थः । 'वार्तासम्भाव्ययोः किल' इत्यमरः । अत्र उरुज्योतिरुपाधिना आदिदेवत्वावेदनात् अनुमानालङ्कारः । उरुज्योतिरुपाधिदर्शनस्य समर्थनीयभगवत्त्वनिवेदनानुकूलत्वात् काव्यलिङ्गमलङ्कारो वा ।। ७३ ।।

**प्रणम्य सम्भाष्य मुहुः प्रहृष्टो दृष्ट्वा मुकुन्दं मुचुकुन्द एषः ।**
**मत्वा निमित्तेन कलिं प्रवृत्तं तपांसि तप्तुं हिमशैलमाप**
**।। ७४ ।।**

**प्रणम्येति** ।। एष मुचुकुन्दः । मुकुन्दं मोक्षप्रदं श्रीकृष्णम् । 'मुकुन्दः पुण्डरीकाक्षे निधिभेदेऽपि पारदे' इति विश्वः । दृष्ट्वा मुहुः पुनः पुनः । प्रणम्य । मुहुः सम्भाष्य । प्रहृष्टः अतिपरितुष्टः । तमापृच्छ्येति शेषः । निमित्तेन लिङ्गेन । कलिं कलिकालं प्रवृत्तम् । 'एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यते' इति वचनात् भाविन्यपि भूतार्थकनिष्ठा । तपांसि कृच्छ्रचान्द्रायणादिरूपकायक्लेशान् । तप्तुं चरितुम् । हिमशैलं हिमस्य शैलं हिमवत्पर्वतम् आप । अत्राप्यनुमानालङ्कारः ।। ७४ ।।

सर्गान्ते वृत्तान्तरं वक्तव्यमित्यर्थस्य 'सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम्' इति काव्यलक्षणविचक्षणैरभिधानात् तदुक्तिमनुरुन्धानः कविर्वृत्तान्तरेण पद्यं रचयति–

**उपमृद्य कालयवनं स लीलया**
**सदुपायविन्नरकभित्स्वमन्दिरम् ।**
**प्रतिपद्य दीप्तिमतुलामुपाददे सह-**
**बान्धवैरुडुगणैरिवोडुराट्** ।। ७५ ।।

।। इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यविरचिते उषाहरणे महाकाव्ये द्वितीयस्सर्गः ।। २ ।।

**अपमृद्येति** ।। सदुपायवित् सन्तं समीचीनमुपायं वेत्तीति विदेः क्विप् । स श्रीकृष्णः । लीलया विलासेन । 'लीलाविलासक्रिययोः' इत्यमरः । कालयवनमुपमृद्य भस्मसाद्विधाय । नरकासुरं भिनत्तीति नरकभित् । नारकभयभेदी वा सन् । स्वस्य मन्दिरं भवनं प्रतिपद्य । उडुराट् । चन्द्रः उडुगणैर्नक्षत्रसमूहैरिव । बान्धवैर्बन्धुभिः सह । 'सगोत्रबान्धवज्ञातिबन्धु-स्वस्वजनाः' इत्यमरः । अतुलां न विद्यते तुला उपमा यस्यास्सा तथा ताम् । दीप्तिं कान्तिमुपाददे । उपपूर्वात् 'डुदाञ् दान' इत्यतो लिट् । अत्रोपमालङ्कारः स्फुटः । मञ्जुभाषिणीनामकं वृत्तम् । तथा च वृत्त-रत्नाकरे– 'सजसा जगौ भवति मञ्जुभाषिणी' इति सगणो जगणः पुनः सगणो जगणो गुरुश्चेन्मञ्जुभाषिणीनामकं वृत्तमिति तदर्थः ।। ७५ ।।

।। इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यविरचितो-षाहरणाख्यमहाकाव्यव्याख्यायां रसिकरञ्जनीसमाख्यायां सूरीन्द्रतीर्थपूज्यपादशिष्य-सुमतीन्द्रयतिविरचितायां द्वितीयस्सर्गः ।।२।।

## ।। अथ तृतीयः सर्गः ।।

अथास्मिन्सर्गे महाकाव्याङ्गभूतं विवाहादि वर्णयितुं तत्पीठिकामारचयति——

**अथ शुश्रुवुरूर्जितश्रियो मुदिता द्वारवतीनिवासिनः ।**
**वसुदेवसुतानुरागिणो वरयोग्यामिह भीष्मकात्मजाम् ।।१।।**

**अथेति** ।। अथ श्रीकृष्णस्य मन्दिरप्रवेशानन्तरम् । ऊर्जिता श्रीकृष्णेनानुप्राणिता प्रतिष्ठापिता श्रीः सम्पद्येषां ते तथोक्ताः । मुदिताः मोदं सन्तोषमापन्नाः । अत एव वसुदेवसुतानुरागिणः वसुदेवस्य सुते श्रीकृष्णे अनुरागः प्रेम एषामस्तीत्यनुरागिणः । द्वारवत्यां निवसितुं शीलमेषामिति द्वारवतीनिवासिनः । इह द्वारवत्याम् । भीष्मकस्यात्मजां सुतां रुक्मिणीम् । वरस्य जामातुः योग्यामृचितां वरयोग्याम् । 'वरो जामातृषिङ्गयोः' इति विश्वः । शुश्रुवुः । 'श्रु श्रवणे' लिट् । श्रुतवन्तः । अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः । 'उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम्' इति लक्षणात् । अत्र सर्गे चम्पकमालिकानामकं वृत्तम् । तदुक्तं वृत्तरत्नाकरे– 'विषमे ससजा गुरुः समे सभराश्चम्पकमालिका लगौ' इति । विषमे प्रथमपादे तृतीयपादे च समे द्वितीये चतुर्थे चेत्यर्थः ।। १ ।।

'चक्षुःप्रीतिर्मनस्सङ्गः' इत्यादिशास्त्रगणितासु दशस्ववस्थासु मनस्सङ्गं सङ्कल्पं च वक्ष्यन् तदुपोद्घाततया श्रवणानुरागमाह——

**मनसि प्रसभादियं हरेर्जनयामास रुचिं जनश्रुतिः ।**
**गुणभेदविदो यथालिनो विलसत्पद्मवनानिलागतिः ।। २ ।।**

**मनसीति** ।। इयं प्रथिता । जनश्रुतिः जनेभ्यः श्रूयत इति करणे क्तिन् । लोकप्रवाद इत्यर्थः । गुणभेदविदः गुणानां सौन्दर्यसौशील्यादीनाम् अन्यत्र मोदादीनां भेदो विशेषः तं वेत्तीति विदेः क्विप् । तस्य । 'भेदः स्यादुपतापे च विदारणविशेषयोः' इति नानार्थरत्नमाला । हरेर्मनसि । प्रसभात् बलात्कारात् । 'प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम्' इत्यमरः । विलसत्पद्मवनानिलागतिः विलसतां पद्मानां वनं काननम् । समूह इति यावत् । तस्यानिलो वायुस्तस्यागतिरागमनम् । अलिनो यथा मधुकरस्येव । 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः' इत्यमरः । रुचिं स्पृहाम् । 'अभिषङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्' इत्यमरः । जनयामास । 'जनी प्रादुर्भावे' लिट् । उत्पादयामास । अत्र श्लेषानुप्राणितबिम्बप्रतिबिम्बभावापन्नधर्मिकोपमालङ्कारः ।। २ ।।

मनस्सङ्गमाह—

**उपयाममहोत्सवागमे प्रथमोद्युक्तमिवास्य दूतताम् ।**
**प्रतिपद्य मनस्विनो मनः सपदि प्रैर्यत रुक्मिणीं प्रति**
**।। ३ ।।**

**उपयामेति** ।। मनस्विनः प्रशस्तमनस्कस्य । मनश्शब्दात् 'अस्मायामेधास्रजो विनिः' इति मत्वर्थीयो विनिः । अस्य हरेर्मनः । दूततां प्रतिपद्य । उपयामो विवाहः । 'यमः समुपनिविषु च' इति सूत्रे 'स्वनहसोर्वा' इति सूत्राद्वाशब्दावृत्तेर्घञ् । 'तथा परिणयोद्वाहोपयामाः पाणिपीडनम्' इत्यमरः । तस्य महानुत्सवः तस्यागमे सङ्घटने । प्रथमोद्युक्तम् अहमेव पूर्वं घटयामीति कृतोद्योगमिवेत्युत्प्रेक्षा । तथाविधमिव । सपदि तत्क्षणे । 'सद्यः सपदि तत्क्षणे' इत्यमरः । रुक्मिणीं प्रति प्रैर्यत ।

ईर गतौ कम्पने चेति धातोः कर्मणि लङ् । प्रेरितम् । श्रीकृष्णेनेति लभ्यते । अत्र रुक्मिणीविषयरतिभावस्य मनःप्रेरणं प्रत्यङ्गत्वात्प्रेयोऽलङ्कारश्चेति सङ्करः ।। ३ ।।

इदानीं सङ्कल्पमाह—

**अनुनीतिपथेन वाऽन्यथा प्रतिलिप्सुर्नृपतेः स नन्दनाम् ।**
**चलनोपगतं निजभ्रुवश्चतुरङ्गाढ्यमुपाचिनोद्बलम् ।। ४ ।।**

**अनुनीतीति** ।। सः श्रीकृष्णः । अनुनीतिरनुनयः तस्य पथा मार्गेण अनुनीतिपथेन । 'ऋक्पूरब्धूःपथामानक्षे' इति पथिन्शब्दात्समासान्तोऽप्रत्ययः । अन्यथा वा प्रकारान्तरेण दण्डादिना । वाशब्दो विकल्पार्थः । नृपतेर्भीष्मकस्य नन्दनां पुत्रीम् । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति नन्दतेर्ल्युः । स्त्रियामाकारान्तम् । प्रतिलिप्सुः प्रतिलब्धुं प्राप्तुमिच्छुः । 'सनिमीमाघुरभलभशकपतपदामच इस्' इति इस् । अभ्यासलोपश्च । स सन् । निजभ्रुवः चलनेन विलासेनोपगतम् । चतुरङ्गाढ्यं चत्वारि च तान्यङ्गानि च तैराढ्यं सम्पन्नम् । पात्रादित्वान्न ङीप् । चतुष्टययुक्तान्यङ्गानि रथादीनि तैराढ्यमिति च । अत्र पक्षे समाहारद्विगुणत्वाभावान्न 'द्विगोः' इति ङीप्प्रसक्तिः । बलं सैन्यम् । उपाचिनोत् । 'चिञ् चयन' इत्यतो लङ् । उपचिनोति स्म अबृंहयत् । व्यूहीकृतवानित्यर्थः अत्र रुक्मिण्यनुरागप्राप्तयोः अनुनयदण्डयोः युगपदुपस्थितयोर्विरोधात् युगपत्कर्तुमशक्ययोर्विकल्पो वाशब्देन निबद्ध इति विकल्पालङ्कारः । 'विरोधे तुल्यबलयोर्विकल्पालङ्कृतिर्मता । सद्यः शिरांसि चापान्वा नमयन्तु महीभुजः ।।' इति सोदाहरणं तल्लक्षणात् । अत्र मनसीति श्लोके श्रवणानुरागः उपयामेति श्लोके मनस्सङ्गः अनुनीतीति श्लोके सङ्कल्पश्च क्रमान्निबद्धाः । यद्यपि

'चक्षुःप्रीतिश्चिन्ता सङ्कल्पो गुणनुतिः क्रियाद्वेषः । तापो लज्जात्यागोन्मादौ मूर्छा मृतिर्दशावस्थाः' इति चिन्तामणौ दशावस्था निर्दिष्टाः । निबद्धाश्च श्रीहर्षेण नैषधकाव्ये तृतीये दमयन्त्यां नलस्य 'लिपिं दृशाभित्तिविभूषम्' इत्यादिश्लोकैर्दशावस्था इत्यत्रापि ताश्च वक्तव्याः । तथापि तत्रैव चिन्तामणौ 'चक्षुःप्रीतिः श्रवणप्रीतेरप्युपलक्षणम्' इत्युक्तत्वात् प्रथमं रत्यालम्बनं श्रुत्वा अभिलाषवतः श्रवणानुरागो जायते । तदनन्तरं मनस्संयोगो भवति । मनस्संयोगे च सति सङ्कल्प इतीतरोपजीव्यतया प्राधान्याद्भगवत इतरावस्थावर्णनस्यानुचितत्वाच्च तिसृणामवस्थानामत्र निबन्धो नानुचितः ।। ४ ।।

**अभिकाङ्क्षितसिद्धिकारिणीं विदधे साधु स मङ्गलस्मृतिम् ।**
**धृतचक्रदरासिकार्मुको दृढवर्मा रथमारुरोह च ।। ५ ।।**

**अभिकाङ्क्षितेति** ।। सः श्रीकृष्णः । अभिकाङ्क्षितस्य अभिलषितस्य सिद्धिर्लाभः तां कर्तुं शीलमस्या इति सुप्यजातौ णिनिः' इति ताच्छील्य-विशिष्टे कर्तरि करोतेर्णिनिप्रत्ययः । तां मङ्गलस्मृतिं माङ्गलिकानां 'मङ्गलानां च मङ्गलम्' इत्यादिशास्त्रोक्तानां पदार्थानां स्मृतिम् । साधु उचितं यथा । 'साधु स्यात्सज्जने सौम्ये वार्धुषावुचितेऽपि च' इति दर्पणः । विदधे विपूर्वो दधातिः करोत्यर्थः । चक्रे । चक्रं सुदर्शनं च दरः शङ्खश्च असिः खड्गश्च कार्मुकं चापः शार्ङ्गं च धृतानि चक्रादीनि येन स तथा । 'लक्ष्मीपतेश्चक्रं सुदर्शनम्' इत्यमरः । 'दरोऽस्त्री शङ्खभययोर्गर्तेऽपि च' इति नानार्थरत्नमाला । 'खड्गे तु चन्द्रहासासिरिष्टयः' इति 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति चामरः । दृढं गाढं वर्म तनुत्रं यस्य स तथा । गाढबाढदृढानि च' इति 'तनुत्रं वर्म दंशनम्' इति चामरः ।

स सन् रथं सारथिनोपनीतम् । आरुरोह च । विदध इति पूर्वक्रिया-समुच्चयाय चशब्दः । रुह बीजजन्मप्रादुर्भाव इत्यतो लिट् । आरूढवान् । अत्र कृष्णस्य कर्तृकारकस्य अनेकवाक्यार्थान्वयेन दीपकछायासम्पत्तिवर्णनात् क्रमिकाणां विधानधारणगाहनरथारोहक्रियाणां गुम्भनाच्च कारकदीपक-मलङ्कारः । 'क्रमिकैकगतानां तु गुम्भः कारकदीपकम् । गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति' ।। इति सोदाहरणं तल्लक्षणात् ।। ५ ।।

**यदुनायकनिर्गमे पुरादभिधानं व्यदधाद्भविष्यतः ।**
**विदुषाममृषार्थभाषिणां वदनेभ्यो गलिता सरस्वती ।। ६ ।।**

**यदुनायकेति** ।। पुरात् द्वारवतीनगरात् । यदूनां नायको नेता तस्य निर्गमे निष्क्रमणसमये । 'अधिभूर्नायको नेता' इत्यमरः । अमृषार्थभाषिताम् अमृषार्थम् अवितथार्थम् अर्थाव्यभिचारिवचनं भाषितुं शीलमेषामिति ताच्छील्ये णिनिः । 'मिथ्या मृषा च वितथे' इति वैजयन्ती । तेषां विदुषाम् । वदनेभ्यः मुखेभ्यः । 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः । 'ध्रुवमपायेऽपादानम्' इति अपादानत्वेऽपादाने पञ्चमी । गलिता निर्गलिता । मङ्गलानि भवन्तु विजयी भवेत्वादिरूपा । सरस्वती वाक् । 'गीर्वाग्वाणी सरस्वती' इत्यमरः । भविष्यतः आगामिनः अर्थस्याभिधान-माख्यानं व्यदधात् अकरोत् लङ् । अत्रामृषार्थभाषिणामिति विशेषणम् अर्थाव्यभिचारिवचनतच्छीला इत्यभिप्रायगर्भमिति परिकरालङ्कारः । भविष्यत्प्रयोजनाभिधानं कथमेषामित्यतः समर्थनीयं तद्विदुषाममृषार्थ-भाषिणामिति पदार्थद्वयेन समर्थ्यत इति पदार्थहेतुकं काव्यलिङ्गमलङ्कार इत्यपि केचित् ।। ६ ।।

**उपरि स्फुरदुष्णवारणे धरणीशे विशदातपत्रवान् ।**
**वयसां च पतिर्विशालया ददृशे केतुगतः पताकया ।।७।।**

**उपरीति** ।। धरणीशे भूमिपतौ श्रीकृष्णे । उपरि शिरस उपरिभागे । स्फुरदुष्णवारणे स्फुरत्प्रकाशमानमुष्णवारणमातपत्रं यस्य स तथा तस्मिन् सति । केतुगतः ध्वजे स्थितः । वयसां खगानां 'खगबाल्यादिनोर्वयः' इत्यमरः । पतिर्गरुडश्च । विशालया महत्या । 'विशालं पृथुलं महत्' इत्यमरः । पताकया वैजयन्त्या ध्वजपटेनेत्यर्थः । 'पताका वैजयन्ती स्यात्' इत्यमरः । विशदं श्वेतम् आतपत्रं छत्रं तद्वान् ददृशे । दृशिर् प्रेक्षण इत्यतः कर्मणि लिट् दृष्टः । विशदातपत्रवानिवेतीवशब्दाप्रयोगेऽपि इह तस्य गम्यत्वाद्गम्योत्प्रेक्षणालङ्कारः । विशदातपत्रवानिति कर्मधारयान्मत्वर्थीयप्रत्ययोऽपि नानुचित इत्यवोचाम ।। ७ ।।

**हरिचन्दनवारिपङ्किलव्यजनान्दोलनविभ्रमोत्थितः ।**
**कटकप्रतिघट्टितध्वनिर्विततो विष्वगमुष्य योषिताम् ।।८।।**

**हरिचन्दनेति** ।। हरि कपिलवर्णं चन्दनं मलयजः । यद्वा हरिचन्दनं चन्दनम् । 'हरिचन्दनमस्त्री स्याच्चन्दने देवपादपे' इति दर्पणवैजयन्त्यौ । तस्य वारि जलं तेन पङ्किलं सपङ्कम् । पिच्छादित्वान्मत्वर्थीय इलच् । तच्च तद्व्यजनं तालवृन्तं च 'व्यजनं तालवृन्तकम्' इत्यमरः । तस्यान्दोलनं लोलनम् । 'प्रेङ्खोलितस्तरलितो लोलितान्दोलितावपि' इत्यमरशेषः । तस्य विभ्रमो विलासस्तेनोत्थितः उद्गतः । अमुष्य श्रीकृष्णस्य । योषितां स्त्रीणाम् । 'स्त्री योषिदबला योषा' इत्यमरः । कटकाः वलयाः । 'भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम्' इत्यमरः । तेषां प्रतिघट्टितानि

परस्परं सङ्घट्टनानि । 'घट्ट चलन' इत्यतो भावे निष्ठा । तेषां ध्वनिः । विष्वक् समन्ततः । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । विततः विस्तृतः । अभूदिति शेषः । अत्र वलयध्वनिना हेतुमता सह व्यजनान्दोलनविभ्रमस्य हेतोर्वर्णनाद्धेतुरलङ्कारः ॥ ८ ॥

**अथ सारथिमन्त्रमन्त्रणश्रवणाप्यायितवेगसम्पदः ।**
**अधरीकृतशक्रसप्तयो हरिमूहुस्तुरगाः खगा इव ॥ ९ ॥**

**अथेति** ॥ अथ द्विजमङ्गलवादनश्वेतछत्रधारणव्यजनान्दोलनादि-समनन्तरम् । सारथेः सूतस्य यो मन्त्रः अश्वप्रेरणानुकूलाश्वहृदयरूप-वाक्यम् । 'मन्त्रौ वेदांशगूढोक्ती' इति दर्पणः । तस्य मन्त्रणं गूढवचनं तस्य श्रवणेन आप्यायिता वर्धिता वेगस्य जवस्य सम्पत् येषां ते तथोक्ताः । अधरीकृता अधस्तात्कृताः । निर्जिता इति यावत् । शक्रस्य देवेन्द्रस्य सप्तयोऽश्वाः यैस्ते तथोक्ताः । तुरगाः अश्वाः । 'तुरगतुरङ्गमसैन्धव-सप्त्यश्ववाजिवाहहयाः' इति शब्दरत्नाकरः । खगाः पक्षिण इव । 'खगे विहङ्गविहगविहङ्गमविहायसः । शकुन्तपक्षिशकुनिशकुन्तिशकुनिद्विजाः ॥' इत्यमरः । हरिं श्रीकृष्णं ऊहुः । 'वह प्रापण' इत्यतो लिट् । अत्र सारथिमन्त्रमन्त्रणेन अश्वानां वेगश्रीरूपो गुणो वर्ण्यत इति उल्लासालङ्कारः । उपमा स्फुटा ॥ ९ ॥

**मुसली मदरागकर्बुरः शितिवासाः शुशुभे रथोपरि ।**
**उदयाचलमस्तकं गतः शशलक्ष्मेव शरन्निशामुखे ॥ १० ॥**

**मुसलीति** ॥ मदस्य वारुणीपानजन्यावलेपस्य । रागः शोणिमा तेन मदजन्यारुणिम्ना कर्बुरः शबलः । नानावर्ण इत्यर्थः । 'अथो मदः ।

कस्तूरीहर्षरेतस्सु गजदानावलेपयोः' इति दर्पणः । 'रागोऽनुरागे मात्सर्ये लक्ष्मादौ रक्तिमत्विषि' इति नानार्थरत्नमाला । 'कर्बुरं तु वारिकिल्बिषहेमसु शबले त्रिषु' इति दर्पणः । शितिवासाः शिति नीलं वासः अम्बरं यस्य स तथोक्तः । 'शितीधवलमेचकौ' इत्यमरः । मुसली मुसलमयोग्रं अस्यास्तीति तथा बलरामः । शरन्निशामुखे शरत्कालरात्रिप्रारम्भे । उदयाचलमस्तकं उदयस्याचलः पर्वतः उदयश्चासावचलश्चेति वा । 'उदयः पूर्वपर्वतः' इत्यमरः । तस्य मस्तकं मूर्धानं शिखरं गतः प्राप्तः । शशो लक्ष्म चिन्हं यस्य चन्द्रस्तथोक्तः । स इव रथोपरि रथस्योर्ध्वभागे । 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' इति सूत्रे पूर्वोत्तरसाहचर्यात् कृदव्ययमेव गृह्यते तेन तदुपरीत्यादि सिद्धमिति रक्षितेनोक्तत्वात् रथोपरीति समासोपपत्तिः । शुशुभे शुभ शोभार्थे लिट् । उल्ललासेत्यर्थः । अत्र बिम्बप्रतिबिम्बभावापन्नधर्मिकोपमालङ्कारः ।। १० ।।

**उदयाधिगतप्रसिद्धयो यदुवीरा गतिभिस्सुवृत्तिभिः ।**
**अनुजग्मुरिनं यथा ग्रहा दिवि दीप्यद्विविधस्वहेतयः ।।११।।**

**उदयेति** ।। उदये आविर्भावे अधिगता प्रसिद्धिः ख्यातिर्येषां ते तथोक्ताः । 'उदयः पूर्वशैले स्यादुन्नतावुद्गतावपि । आविर्भावे शुभप्राप्तौ' इति दर्पणः । 'प्रसिद्धौ ख्यातभूषितौ' इत्यमरः । ग्रहपक्षे उदयेन शुभप्रापणेन । स्वस्योदयेन वा अधिगतप्रसिद्ध्य इत्यर्थः । दिवि अन्तरिक्षे दीप्यन्तः द्योतमानाः विविधाः नानारूपाः स्वेषां हेतयः आयुधानि अन्यत्रांशवश्च येषां ते तथोक्ताः । 'हेतिर्ज्वालायुधांशुषु' इति नानार्थरत्नमाला । यदूनां यादवानां वीराः शूराः । सम्बन्धसामान्ये षष्ठी । समानाधिकरणसमासाङ्गीकारे 'पूर्वापरप्रथम' इति सूत्रात् वीरशब्दस्य

पूर्वनिपातः स्यात् । ग्रहा यथा चन्द्रादिग्रहा इव । सुवृत्तिभिः शोभना वृत्तिर्जीवनं अन्यत्र केन्द्रादौ वर्तनं च यासां तास्तयोक्तास्ताभिः । गतिभिर्गमनैः अन्यत्र दशाविशेषैश्च । 'अथ वृत्तिः क्षेत्रजीवनयोरपि कैशिक्यादौ काशिकादौ वर्तने' इति दर्पणः । 'गतिस्तु गमने मार्गे दशायां बुद्ध्युपाययोः' इति नानार्थरत्नमाला । इनं सूर्यं प्रभुम् । 'इनः सूर्ये प्रभौ इत्यमरः । श्रीकृष्णमनुजग्मुः । 'गम्लृ गतौ' लिट् । अनुसृतवन्तः । अत्र श्लेषानुप्राणितोपमालङ्कारः । प्रकृतकार्यस्य रुक्मिणीसम्प्राप्तिरूपस्य सूर्यानुग्रहानुकूल्येन सौकर्यवर्णनात्समाधिरलङ्कारश्च तेन व्यज्यत इत्यलङ्कारध्वनिः ।। ११ ।।

**कवलीकृतभानुवर्त्मना खुरविक्षेपभवेन वाजिनाम् ।**
**रजसाऽन्वमिमीत पद्धतिं जनता यत्र जगाम माधवः**
**।। १२ ।।**

**कवलीकृतेति** ।। जनता जनसमूहः । 'ग्रामजनबन्धुभ्यास्तल्' इति जनशब्दात्समूहे तल्प्रत्ययः । कवलीकृतं ग्रस्तम् । आच्छादितमित्यर्थः । भानोः सूर्यस्य वर्त्म मार्गो येन तत्तथा तेन । व्याप्तनभोभागेनेत्यर्थः । वाजिनामश्वानाम् । 'अश्वतुरङ्गमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । खुराणां शफानाम् । विक्षेपो विन्यासः तस्माद्भवतीति भवं पचाद्यच् । भवत्यस्मादिति भवः । खुरविक्षेपो भवो यस्य तदिति वा । प्रथमपक्षे पञ्चमीति योगविभागत्समासः । द्वितीये बहुव्रीहिः । तेन खुरविक्षेपभवेन । रजसा रेणुना । यत्र पद्धतौ माधवो जगामेष्टदेशं तां पद्धतिं अन्वमिमीत । 'माङ् माने' लङ् अन्वमिनोत् । धूलीपाल्या अयमेव

भवन्मार्गो भवितुमर्हतीत्यनुमितवती । अत्रानुमानालङ्कारेण चतुरङ्गोपेतसेनाभूमा व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ १२ ॥

**अतियन्विविधाग्रहारकान्मुदितग्रामजनानुवीक्षितः ।**
**बुभुजे वनपङ्क्तिमन्तरा पथ आरामलतावलीजुषः ॥ १३ ॥**

**अतियन्निति** ॥ माधव इत्यनुवर्तनीयम् । विविधाग्रहारकान् विविधा नानारूपा अग्रहाराः ब्राह्मणोपभोग्यसंवसथाः त एवाग्रहारकाः । कन्प्रत्ययः । 'अग्रहारो द्विजावासो ग्रामसंवसथौ समौ' इति शब्दरत्नाकरः । तान् अतियन् अतिक्रामन् । मुदिताः मोदं प्राप्ताः ये ग्रामजनाः तैरानुकूल्येन वीक्षितः ग्रामजनानुवीक्षितसन् । वनपङ्क्तिमन्तरा 'अन्तरान्तरेण युक्ते' इति द्वितीया । वनपङ्क्तिमध्ये इत्यर्थः । आरामलतावलीजुषः आरामस्य उपवनस्य या लताः वल्ल्यः तासां आवलिः पङ्क्तिः तां जुषन्त इति तथोक्ताः तान् पथः मार्गान् । बुभुजे भुज पालनाभ्यवहारयोरित्यतो लिट् । 'भुजोऽनवने' इत्यात्मनेपदम् । उपभुक्तवान् । अनुबभूवेत्यर्थः । तदीयरामणीयकं दर्शं दर्शं गतवानिति भावः । अत्रोपभोगार्हताभिप्रायगर्भमारामलतावलीजुष इति विशेषणमिति परिकरालङ्कारः ॥ १३ ॥

'छन्धश्चतुष्टयं त्वेकक्रियान्वयि विशेषकम्' इत्युक्तलक्षणेन विशेषकेन काव्येन चतुश्श्लोक्या लतां वर्णयति—

**विकसत्कुसुमान्यवाकिरन्यदुवंशैकशिखामणेस्तनौ ।**
**लतिका नगरप्रवेशिनस्तनुमध्या इव लाजसन्ततीः**
**॥ १४ ॥**

**विकसदिति** ।। लतिकाः आरामलताः । लताशब्दात् सञ्ज्ञायां कन्प्रत्यय इति ह्रस्वत्वे 'प्रत्ययस्थात्कात्पूर्वस्य' इति अत इत्वे लतिका इति रूपम् । नगरप्रवेशिनः नगरे प्रवेशोऽस्यास्तीति नगरप्रवेशी तस्य । यदुवंशशिखामणेः यदूनां वंशः कुलं तस्य एकश्चासौ शिखामणिश्च चूडारत्नमिव प्रधानं तस्य श्रीकृष्णस्य । तनौ देहे । तनुः सूक्ष्मो मध्यो मध्यदेशो यासां तास्तथा स्त्रियः । लाजानां भर्जितयवसमुद्गतमङ्गलाक्षतानाम् । सन्ततीः समूहानिव । 'सन्ततिस्तनये वंशे पारम्पर्यसमूहयोः' इति दर्पणः । विकसन्ति विकचानि कुसुमानि पुष्पाणि च तानि । अवाकिरन् 'कॄ विक्षेपे' लङ् । अवकीर्णवत्यः । उपमालङ्कारः ।। १४ ।।

**प्रणयप्रवणाग्रमस्तकैरभिगुप्तास्तरुभर्तृभिः सदा ।**
**अपि षट्पदजारपूरुषैरुपगूढा रसविद्भिरन्तरा ।। १५ ।।**

**प्रणयेति** ।। प्रणयेन प्रसरेणैव प्रेम्णा प्रवणानि प्रह्वीभूतानि अग्राणि तान्येव मस्तकाः येषां ते तथोक्ताः । 'प्रणयः प्रेम्णि विस्रम्भे याञ्चाप्रसरयोरपि' इति विश्वः । तरवो वृक्षा एव भर्तारः प्रियास्तैस्सदाभिगुप्ताः परितो गोपायिता अपि रसविद्भिः रसं सुधां मकरन्दं शृङ्गारादिकं च विदन्तीति रसविदः तैः । 'शृङ्गारमुख्यमधुराधिसुवर्णरेतोनिर्यासरागगलद्रवपारदेषु । आस्वादनध्वनिसुधाम्बरवीर्यधामश्रेष्ठोरगेषु रसः' इति नानार्थरत्नमाला । षट्पदाः भ्रमरा एव जारपुरुषाः उपपतयः तैरन्तरा मध्ये 'अथान्तरेऽन्तरा । अन्तरेण च मध्ये स्युः' इत्यमरः । उपगूढाः समाश्लिष्टाः । लतिका एवाङ्गनाः कुसुमान्यवाकिरन्निति पूर्वक्रियाकारकसम्बन्धः । अत्र प्रकृतैर्भर्त्रादिरूपकैरनुकृष्यमाणासु लतिकासु अङ्गनारूपकमाक्षिप्यत इति एकदेशिविवर्तरूपकमलङ्कारः । भर्त्रभिगुप्ता अपि जारपुरुषैरुपगूढा

इति सति प्रतिबन्धकेऽपि कार्योत्पत्तिवर्णनाद्विभावनाविशेषश्चालङ्कार इति तयोरङ्गाङ्गिभावेन सङ्करः । रूपकमुक्तलक्षणम् । 'कार्योत्पत्तिसृतीया स्यात्सत्यपि प्रतिबन्धके' । इति विभावनाविशेषलक्षणम् ।। १५ ।।

**निबिडस्तबकस्तनोपरि प्रचुरामोदविशेषसम्पदः ।**
**प्रतिलोभनशिक्षिका नृणां मनसः स्वावयवैस्सविभ्रमैः**
**।। १६ ।।**

**निबिडेति** ।। निबिडा निरन्तराः स्तबकाः गुच्छा एव स्तनास्तेषामुपरि । 'नेर्बिडच्बिरीसचौ' इति निशब्दात् बिडच्प्रत्ययः । 'निबिडं निबिरीसं स्याद् घनं सान्द्रं निरन्तरम्' इति शब्दरत्नाकरः । 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः । स्तनोपरीति कृदव्ययत्वाभावात्समासः साधुः । प्रचुरा बहुला आमोदविशेषाणां गन्धातिशयानां सम्पत् सम्पत्तिर्यासां तास्तथोक्ताः । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इत्यमरः । 'आमोदः प्रमदे गन्धे' इति दर्पणः । शिष असर्वोपयोग इत्यत्र विपूर्वोऽयमतिशय इति वैयाकरणाः । सविभ्रमैः सविलासैः । 'विभ्रमो भ्रान्तिशोभयोः । विलासे संशये च' इति दर्पणः । स्वावयवैः स्वकीयैरवयवैः । नृणां पुरुषाणां मनसः प्रतिलोभनस्य विमोहनस्य । शिक्षिकाः अनुशासिकाः । पुरुषमनोहारिण्य इत्यर्थः । पूर्ववदेव लतिकाः कुसुमान्यवाकिरन्निति सम्बन्धः ।। १६ ।।

**अतिनूतनपल्लवोल्लसत्करजालाः फलभारगौरवात् ।**
**अवनम्रशरीरयष्टयो विदधाना इव वन्दनं मुदा ।। १७ ।।**

**अतिनूतनेति** ।। प्रकर्षेण नूतनानि अतिनूतनानि च तानि पल्लवानि किसलयानि तान्येव उल्लसन्ति कराणां हस्तानां जालानि समूहाः यासां

तास्तथोक्ताः । 'प्रकर्षे लङ्घनेऽप्यति' इति । पल्लवोऽस्त्री किसलयम्' । 'बलिहस्तांशवः कराः' इति । 'जालं समूह आनाये गवाक्षे क्षारकेऽपि च' इति चामरः । फलानां मातुलुङ्गादीनां भारस्य गौरवात् । शरीराणि यष्टयो दण्डा इवेत्युपमितसमासः । अवनम्राः शरीरयष्टयो यासां तास्तथा । 'यष्टिर्दण्डे हारभेदे' इति नानार्थरत्नमाला । मुदा सन्तोषेण । वन्दनं अभिवादनम् । कुर्वन्त्य इवेत्युत्प्रेक्षा । लतिकाः कुसुमान्यवाकिरन् ॥ १७ ॥

**असितोपल[1]निर्मलत्विषा वपुषा श्यामलयन्नयं दिशः ।**
**विपुलोलपलम्बिनीमलं वनमालां समलब्ध लीलया ॥१८॥**

**असितेति** ॥ असितोपलः नीलोपलः इन्द्रनीलमणिस्तस्येव निर्मला त्विट् द्युतिर्यस्य तत्तथा तेन । असितोत्पलेति कचित्पाठः । वपुषा गात्रेण । दिशः दिग्भागान् । श्यामलयन् श्यामला मेचकाः कुर्वन् । तत्करोतिण्यन्तः श्यामलयच्छब्दः । अयं श्रीकृष्णः । लीलया विलासेन । 'लीला स्याद्विलासक्रीडयोरपि' इति केशवः । विपुलैर्महद्भिः । उपलैर्बल्वजतृणैः । 'उलपा बल्वजाः' इति हलायुधः । लम्बिनीं लम्बमानाम् । वनमालां 'आपादपद्मं या माला वनमालेति सा मता' इति कलिङ्ग इत्यमरव्याख्याता । पुष्पस्रजम् अलं भूषणभूताम् । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । समलब्ध 'डुलभष् प्राप्तौ' लुङ् । सम्यङ् लब्धवान् । पुष्पमालामवहदित्यर्थः । असितोपलनिर्मलत्विषेत्यत्रोपमालङ्कारः । श्यामलयन्निति 'तद्गुणः स्वगुणत्यागादन्यदीपगुणग्रहः' इति लक्षितस्तद्गुणालङ्कार इति केचित् ॥ १८ ॥

---

१. 'असितोत्पल' इति पाठान्तरम् ।

**पृषदश्वगतागतैः स्वनद्विवराः प्रीतिममुष्य कीचकाः ।**
**श्रुतिवल्लभगीतितत्परा विदधुर्मङ्गलपाठका इव ।। १९ ।।**

**पृषदश्वेति** ।। पृषदश्वः अनिलः तस्य गतानि । भावे निष्ठा । गमनानि आगतान्यागमनानि च तैः । 'पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः' इत्यमरः । स्वनन्ति शब्दायमानानि विवराणि सुषिराणि येषां ते तथोक्ताः । 'सुषिरं विवरं बिलम्' इत्यमरः । श्रुतिः श्रोत्रं तस्या वल्लभा प्रिया गीतिर्गानं तस्यां तत्पराः आसक्ताः । 'श्रुतिः स्त्री श्रवणं श्रवः' इति 'दयितं वल्लभं प्रियम्' इति 'तत्परे प्रसितासक्ताविष्टार्थोद्युक्तः' इति चामरः । मङ्गलस्य पाठकाः । सम्बन्धसामान्ये षष्ठी । वन्दिन इव । वैणविका इवेति यावत् । कीचकाः वेणवः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । अमुष्य श्रीकृष्णस्य । प्रीतिं सन्तोषम् । विदधुः चक्रुः । डुधाञ् धारणपोषणयोरित्यतो लिट् । यथा राज्ञः वैणविकाः मङ्गलपाठेन सन्तोषमावहन्ति तथा अनिलोद्धतकीचका अपि श्रीकृष्णस्य प्रीतिमकुर्वन्निति । उपमालङ्कारः ।। १९ ।।

**सरसं पथि रंहसश्च्युतो वनलक्ष्मीमनुभूय भूयसः ।**
**स ददर्श निदर्शनं दिवो नगरं कुण्डिनमण्डजध्वजः ।।२०।।**

**सरसमिति** ।। अण्डजः पक्षी गरुडः ध्वजः केतुश्चिह्नं यस्य स तथा । सः श्रीकृष्णः । पथि वनमार्गे । भूयसो भूरिणः । रंहसो जवात् । 'रंहस्तरसी तु रहस्यदः । जवः' इत्यमरः । च्युतः गलितः उपसंहृतात्यन्तवेगस्सन्नित्यर्थः । वनलक्ष्मीं वनसम्पदम् । सरसं सरागं यथा तथा । अनुभूय दर्शनस्पर्शनादिनोपभुज्य । दिवः स्वर्गस्य । निदर्शनं दृष्टान्तं देवेन्द्रनगरसदृशमित्यर्थः । कुण्डिने कुण्डिननामकनगरम् । ददर्श 'दृशिर्

प्रेक्षणे' लिट् । अत्र वेगेन धावतो वनलक्ष्मीदर्शनादि दुर्घटमिति तस्य समर्थनीयस्य रंहसश्च्युत इति वाक्यार्थेन समर्थनात्काव्यलिङ्गमर्थालङ्कारः । भूयभूयेति दर्शनिदर्शेति कुण्डिनमण्डजेति छेकानुप्रासस्य वृत्त्यनुप्रासस्य च निबन्धनादनुप्रासश्च शब्दालङ्कार इत्युभयोः संसृष्टिः ।। २० ।।

**समदानुसृतालिरुक्मिणीकुचभारार्जितगन्धबन्धुरः ।**
**सुहुताभ्युदयानलालयादनिलः प्रत्युदियाय केशवम् ।।२१।।**

**समदेति** ।। मदेन हर्षेण मृगमदेन वा सहितः समदः । अनुसृताः आलयो वयस्याः यस्याः सा तथा । सा च सा रुक्मिणी च तस्याः कुचयोर्भारोऽतिशयस्तस्मादार्जित आपादितो यो गन्धः आमोदस्तेन बन्धुरः उन्नतानतः । मेदुर इत्यर्थः । 'गजदानं गर्वशर्षरेतोमृगमदा मदाः' इति नानार्थरत्नमाला । 'आलिः सखी वयस्या च' इत्यमरः । 'भारौ तु भरपीवरौ' इति कविदर्पणः । 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः । 'बन्धुरं तून्नतानतम्' इत्यमरः । यद्वा बन्धुरो रम्यः । तथा च रभसः 'बन्धूरबन्धुरौ रम्ये नम्रे हंसे तु बन्धुरे' इति । सुहुतः शोभनैर्होमैराराधितः अभ्युदयस्यानलः माङ्गलिकवह्निः । तस्य आलयाद् गृहात् । अनिलो वायुः । केशवं 'को ब्रह्मा तु समुद्दिष्ट ईशो रुद्र उदाहृतः । सृष्ट्यादिना वर्तयति तौ यतः केशवो हरिः ।।' इति वचनात् ब्रह्मरुद्रनियामकम् । 'शम्भोः पितामहो ब्रह्मा पिता शक्राद्यधीश्वरः' इति पाद्मवचनेन ब्रह्मरुद्ररूपपुत्रपौत्रवत्त्वं केशवशब्दार्थ इति त्वमरव्याख्यानम् । श्रीकृष्णं प्रत्युदियाय उदितो बभूव । कस्तूरिकाचर्चितरुक्मिणीकुचमलयाचल-समुद्भूतः सुरभिरग्निहोत्रगृहान्निर्गतो वायुः श्रीकृष्णमसेवतेति भावः । गन्धबन्धुर इत्यादौ धादिवर्णानुवृत्तेरनुप्रासः शब्दालङ्कारः ।। २१ ।।

**स्पृहणीयमहामहोन्मुखैः पुरनारीपुरुषैः ससम्भ्रमम् ।**
**उदितान् कलमङ्गलध्वनीनशृणोदेष नभस्थलस्पृशः ।।२२।।**

**स्पृहणीयेति** ।। एषः श्रीकृष्णः स्पृहणीयः वाञ्छितव्यः महान्महः उत्सवः तस्मिन् उन्मुखैः । पुरस्य कुण्डिननगरस्य नार्यः पुरुषाश्च तैः । ससम्भ्रमं सविलासं सत्वरं वा उदितान् उत्पन्नान् अभिहितान्वा । नभस्थलमन्तरिक्षप्रदेशं स्पृशन्तीति तथोक्ताः 'स्पृशोऽनुदके किन्' । तान् तारतमानित्यर्थः । कलाः अव्यक्तमधुराश्च ते मङ्गलध्वनयश्च तान् अशृणोत् । 'श्रु श्रवणे' लङ् । श्रुतवान् । अत्र मङ्गलस्वनानामन्तरिक्षा-संस्पर्शेऽपि तद्योगवर्णनात्सम्बन्धातिशयोक्तिरलङ्कारः ।। २२ ।।

**अभिगन्तुमियेष बुद्धिमान्स किलान्तःपुरमब्जलोचनः ।**
**कुलदैवतमन्दिरान्तिके रथिनं स्थापयति स्म दारुकः[१] ।।२३।।**

**अभिगन्तुमिति** ।। बुद्धिमान् बुद्धिशाली । अब्जे इव लोचने यस्य सः अब्जलोचनः पुण्डरीकाक्षः । सः श्रीकृष्णः । अन्तःपुरं पुरस्य मध्ये । विभक्त्यर्थेऽव्ययीभावः । अन्तराभ्यन्तरे पुरमिति वा । अभिगन्तुं प्रवेष्टुम् इयेष । 'इषु इच्छायां' लिट् । अभिललाष किलेति हेतौ । 'अलीके च किल स्मृतः । न्यक्कारेऽनुचिते हेतौ' इत्यमरशेषः । तदैव दारुकः श्रीकृष्णसारथिः कुलदैवतस्य कुलदेवतायाः मन्दिरं भवनं तस्यान्तिके समीपे । रथिनं रथवन्तं श्रीकृष्णं स्थापयति स्म । 'लट् स्मे' इति भूते णिजन्तात्तिष्ठतेर्लट् । अत्र भगवदभिलषितार्थस्य रथस्थापनेनानुकूलनात् समाधिरलङ्कारः । 'समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः । उत्कण्ठिता

---

१. 'सरथं स्थापयतिस्म दारुकः' इति पाठान्तरम् ।

च तरुणी जगामस्तं च भानुमान्' ।। इति सोदाहरणं तल्लक्षणाभिधानात् । सरथं स्थापयतिस्म दारुक इति पाठान्तरम् ।। २३ ।।

**अपि रुक्मिणि रुक्मिणीपतावतिसंरम्भनिबद्धमत्सरे ।**
**पवनोद्धतया पताकया तमिहैवाजुहुवुर्महाध्वजाः ।। २४ ।।**

**अपि रुक्मिणीति** ।। अपि रुक्मिणीपतित्वेन सम्भाव्यमाने । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः । रुक्मिणीपतौ भाविभावाभिप्रायेण तथोक्ते श्रीकृष्णे । रुक्मिणि अतिसंरम्भेण अभिवृद्धाग्रहेण निबद्धः कृतः मत्सरः अन्यशुभद्वेषो येन स तथा तस्मिन् सति । 'संरम्भः क्रोध आग्रहः' इति दर्पणः । महाध्वजाः उन्नतकेतवः पवनेनोद्धतया उच्चलितया वैजयन्त्याख्यकेतुयष्टिसमासक्तपटेन । इह नगराभ्यन्तरे आगन्तव्यमिति पुनः पुनः तं श्रीकृष्णं आजुहुवुः । 'ह्वेञ् स्पर्धायां शब्दे च' इति धातोर्लिट् । 'अभ्यस्तस्य च' इत्यभ्यास्ती-भविष्यतो ह्वयतेः सम्प्रसारणम् । आकारयामासुरिवेत्युत्प्रेक्षा ।। २४ ।।

**वरभूरिविभूषणोज्ज्वलश्शिशुपालश्शिशुतुल्यधीरिह ।**
**ददृशे सुदृशां दृगुत्सवः सफलं यौवनमावहन्निजम् ।।२५।।**

**वरभूरिविभूषणेति** ।। शिशोस्तुल्या धीर्यस्य सः शिशुतुल्यधीः । बालबुद्धिसदृशबुद्धिरित्यर्थः । अत एव वरस्य जामातुः यानि भूरीणि भूयांसि भूषणानि तैरुज्ज्वलः प्रदीप्तः । 'स्यादुज्ज्वलस्तु शृङ्गारे त्रिषु स्वच्छप्रदीप्तयोः' इति दर्पणः । अत एव सुदृशामङ्गनानाम् । दृशां नेत्राणाम् । उत्सवः 'मह उत्सव उत्सेके इच्छाप्रसरकोपयोः' इति नानार्थरत्नमाला । निजं स्वकं यौवनं सफलमावहन्सन् शिशुपालो

जनैर्ददृशे । 'दृशिर् प्रेक्षणे' कर्मणि लिट् । दृष्टः । अत्र शिशुतुल्यधीरिति विशेषणस्य महामूढत्वाभिप्रायगर्भत्वात्परिकरालङ्कारः । यौवनसाफल्यं दृगुत्सवत्वेन समर्थ्यत इति काव्यलिङ्गं चेत्युभयोः सङ्करः ।। २५ ।।

मगधप्रभुणेत्यादित्रिश्लोक्या कलापककाव्यभङ्ग्या भीष्मकस्य रुक्मिणीविवाहानुकूलस्वयंवरनिश्चयं दर्शयति—

**मगधप्रभुणा निजात्मजाद्वयवैधव्यविधानविप्रियम् ।**
**परिहर्तुमजस्रमिच्छताऽसुरभिच्छिद्रविभूतिलाभतः ।। २६ ।।**

**मगधप्रभुणेति** ।। निजयोः स्वकयोरत्मजयोः पुत्र्योः अस्ति-प्रास्तिनामिकयोः द्वयं तस्य वैधव्यं भर्तृराहित्यं तद्विधानं करणं तद्रूपं विप्रियमप्रियम् । कंसवधेन जरासन्धात्मजयोः । अस्तिप्रास्तिसञ्ज्ञयोः वैधव्यकरणेन जरासन्धस्यानिष्टं हि श्रीकृष्णेनापादितमिति पौराणिकी प्रसिद्धिः । असुरभिदः श्रीकृष्णस्य छिद्रं रन्ध्रं दूषणं वा । 'छिद्रं रन्ध्रे दूषणे च' इति रत्नमाला । तदेव विभूतिः सम्पत् तस्या लाभतो लाभात् । सार्वविभक्तिकस्तसिः । लाभेनेति वा । परिहर्तुमजस्रमनवरतम् इच्छता मगधप्रभुणा मगधदेशाधिपतिना जरासन्धेन भीष्मको निश्चयमकरोदिति वक्ष्यमाणक्रियान्वयः । वादिवर्णानुवृत्तेर्वृत्त्यनुप्रासः शब्दालङ्कारः ।।२६।।

**असिचापगदारिधारिणो नरकारेरनुकारिणारिणा ।**
**अनिवार्यवरूथिनीयुजा मदभाजा सह पौण्ड्रकेण च ।।२७।।**

**असिचापेति** ।। असिः खड्गः चापो धनुः गदा अरि चक्रं च तानि धर्तुं शीलमस्येति 'सुप्यजातौ णिनिस्ताच्छील्ये' । नरकासुरस्यारेः शत्रोरनुकर्तुं शीलमस्येति णिनिः । अरिणा शत्रुणा । अनिवार्या

अप्रतिरोध्या । वरूथिनी सैन्यं तया युनक्तीति युक् । तेन । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । युजेः 'सत्सूद्विष' इत्यादिना क्विप् । मदमवलेपं भजतीति भजो ण्विप्रत्ययः । 'अथ मदः । कस्तूरी-हर्षरेतस्सु गजदानावलेपयोः' इति दर्पणः । पौण्ड्रकेण पौण्ड्रकवासुदेवेन च भीष्मको निश्चयमकरोदिति सम्बन्धः । रिणारिणेति द्विर्व्यञ्जनोक्ते-श्छेकानुप्रासः शब्दालङ्कारः । अनुकारिणेत्यार्थी चोपमा ।। २७ ।।

**अकरोदमुना च भीष्मकस्तनयेनायतनीतिवर्त्मना ।**
**दमघोषसुतं पतिंवरा वरयेन्मे दुहितेति निश्चयम् ।। २८ ।।**

**अकरोदिति** ।। भीष्मकः भीष्मकनामा राजा । आयता सुदूरा नीतिर्नयो यस्मिन् तदायतनीति तद्वर्त्म यस्य स तथा तेन आयतनीतिवर्त्मना । 'सुदूरे दीर्घमायतम्' इत्यमरः । यस्मिन्मार्गे नीतिस्सुदूरास्ति तन्मार्गमनुसृतेनेति भावः । यद्वा आयता शास्त्रनीत्या नियता न भवतीति तथाभूता नीतिर्यस्मिन् तद्वर्त्म यस्येति व्याख्येयम् । श्रीकृष्णे बद्धमत्सरेण अमुना रुक्मिनामकेन तनयेन । चशब्दः पौण्ड्रकेण चेत्युक्तपौण्ड्रकेण सहेतरयोगार्थः । पतिंवरा पतिं वृणोतीति तथोक्ता । 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' इति खच् । 'खित्यनव्ययस्य' इति मुमागमः । मे दुहिता पुत्री दमघोषसुतं दमघोषनामक(स्य)राज्ञः पुत्रं शिशुपालं वरयेत् । 'वर ईप्सायां' इति चुरादौ पठितोऽयमदन्तो धातुरिति नोपधावृद्धिः । आप्तुमिच्छेदिति निश्चयमकरोत् । जरासन्धेन पौण्ड्रकेण रुक्मिणा च बोधितो भीष्मकः दुहिता पतिं दमघोषसुतं वरितुमिच्छेत् । स पतिः स्यादिति राजधर्मत्वात्स्वयंवरघोषमेव निरचैषीदिति भावः । पतिंवरेति विशेषणस्याभिप्रायगर्भत्वात्परिकरालङ्कारः ।। २८ ।।

**अथ तत्र विदर्भभूपतेर्गृहरत्नाकरगर्भसम्भवा ।**
**परिणाममिते स्वयंवरे कमला माधवमन्वचिन्तयत् ॥२९॥**

**अथ तत्रेति** ॥ अथ विवाहनिश्चयानन्तरम् । तत्र तस्मिन् स्वयंवरे परिणामं परिपाकं सज्जीभावमिते प्राप्ते सति । विदर्भभूपतेर्भीष्मकस्य । गृहं वेश्म तदेव रत्नाकरो जलनिधिः तस्य गर्भः कुक्षिः । सम्भवत्युत्पद्यतेऽस्मिन्निति सम्भव उक्तगर्भः सम्भवोऽस्या इति रत्नाकरगर्भसम्भवा । सापेक्षत्वेऽपि गमकत्वात्समासः । कमला लक्ष्मीः । 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति पौराणिकप्रसिद्धिः । माधवं श्रीहरिम् । अन्वचिन्तयत् । चिती संस्मृत्यां लङ् । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी तु शेषत्वविवक्षायामेवेति नेहावकाशं लभते । गृहरत्नाकरेति रूपकालङ्कारः ॥ २९ ॥

चिन्ताप्रकारमाह—

**क्व गतः खलु सोऽयमद्य यः प्रसभान्मे मनसि प्रतिक्षपम् ।**
**जगदेकसुखावहं प्रियं प्रकटीभावयति स्वकं वपुः ॥ ३० ॥**

**क्व गत इति** ॥ यो माधवः प्रसभाद् बलात्कारात् । मे मम । मनसि । प्रतिक्षपं सर्वास्वपि रात्रिषु । 'अव्ययं विभक्ति' इत्यादिना वीप्सायामव्ययीभावः । जगदेकसुखावहं जगत एकं मुख्यं सुखमावहति सम्पादयतीति तथोक्तम् । आवहतीत्यावहं सुखावहमिति तु विग्रहः । प्रियं दयितम् । स्वकमात्मीयम् । वपुः शरीरम् । प्रकटीभावयति अप्रकटं प्रकटीकरोति प्रकटीभावयतीत्यभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः । अद्य अस्मिन्नहनि उपस्थिते समय इत्यर्थः । क्व खलुगतः । 'निषेध-

वाक्यालङ्कारजिज्ञासानुनये खलु' इत्यमरोक्तेः खलुरत्र जिज्ञासायां वर्तते । 'गत्यर्थाकर्मक' इति गमेः कर्तरि क्तप्रत्ययः । कं नाम देशं गतवान् । तं देशमहं जिज्ञास इति माधवमन्वचिन्तयदिति पूर्वेण सम्बन्धः । अत्र पूर्वत्र च श्लोके सान्दानितके चिन्ताभावस्य शृङ्गाररसं प्रत्यङ्गत्वात्प्रेयोऽलङ्कारः ।। ३० ।।

पदपद्मेत्यादिकया एकादशश्लोक्या कुलकेन 'प्रकटीभावयति स्वकं वपुः' इत्युक्तवपुरेवापादमस्तकं विवर्णयिषुर्विशिनष्टि—

**पदपद्मरजोभिरञ्जसा विरजीभाव[1]विधायि चेतसः ।**
**अनुसंस्मरतामनारतं सुजनानां जगदेकपावनैः ।। ३१ ।।**

**पदपद्मेति** ।। जगदेकपावनैः जगतो मुख्यैः पावयितृभिः । पदे अङ्घ्री पद्मे इव पदपद्मे तयो रजोभिः पांसुभिः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना नद्वयो रजः' इति चामरः । पदे पद्मे इवेत्युपमितसमासः । अनारतं 'सततानारताश्रान्तसन्ततताविरतानिशम्' इत्यमरः । अनुसंस्मरताम् आनुरूप्येण सम्यग्ध्यायतां विरजीभावविधायि विगतं रजो रजोगुणः अंहो वा यस्मात्तद्विरजः तद्भावस्य विधायि कर्तृ । 'रजः पांस्वार्तवांहसु' इति शब्दरत्नाकरः । 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति सकारलोपः । 'अस्य च्वौ' इतीत्वम् । विरजोभावेति पाठे शब्दप्रवृत्तिनिमित्तं भावः । अत्र रजोभिर्विरजीभावस्य साधनविरुद्धस्य वर्णनाद्विभावनालङ्कारः । विरुद्धकार्यसम्पत्तिर्दृष्टा काचिद्विभावना । शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति ताम्' इति सोदाहरणं तल्लक्षणाभिधानात् ।। ३१ ।।

१. 'विरजोभाव' इति पाठान्तरम् ।

**कलनूपुरकिङ्किणीरवैः कृतलीलं पदविक्रमैः पुरा ।**
**व्रजवाटभुवोभिमुद्रयन्नवचक्रध्वजरेखया मुहुः ।। ३२ ।।**

**कलनूपुरेति** ।। नूपुरौ किङ्किण्यः क्षुद्रघण्टिकाश्च तासां रवाः स्वनाः कलाः नूपुरकिङ्किणीरवाः येषां ते तथोक्ताः तैः । 'ध्वनौ तु मधुरास्फुटे कलः' इति 'मञ्जीरो नूपुरोऽस्त्रियाम्' इति 'किङ्किणी क्षुद्रघण्टिका' इति 'ध्वनिध्वानरवस्वनाः' इति चामरः । पादयोरङ्घ्र्योर्विक्रमैः विन्यासैः । 'विक्रमः क्रमणे शौर्ये' इति कविदर्पणः । कृता लीला विलासो येन तत् । अत एव पुरा पूर्वं बाल्ये । मुहुः पुनः पुनः । व्रजवाटभुवः व्रजस्य गोष्ठस्य वाटा मार्गाः तेषां भुवः स्थानानि । 'गोष्ठाध्वनिवहा व्रजाः' इत्यमरः । 'वाटः पथश्च मार्गश्च' इत्यमरशेषश्च । नवा नूतना चक्रं ध्वजश्च तयो रेखा श्रेणी लेखा वा तया । 'लेखा श्रेणीलेखयोः स्यात्' इति कविदर्पणः । अभिमुद्रयन् अभितोऽङ्कयन् । मुद्रशब्दात् 'तत्करोति' इति ण्यन्तात् लटः शतृप्रत्ययः । वपुः प्रकटीभावयतीति सम्बन्धः । अत्र व्रजवाटाभिमुद्रणं समर्थनीयं पदविक्रमैः कृतलीलमिति वाक्यार्थेन समर्थ्यत इति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।। ३२ ।।

**गरलाग्निकरालकालियप्रबलाशीविषमस्तकाग्रतः ।**
**अपि नृत्तमहोत्सवक्षणे विगतग्लानिपदाग्रपल्लवम् ।। ३३ ।।**

**गरलेति** ।। गरलं विषमग्निरिव तेन । गरलस्याग्निर्गरलाग्निः तेनेति वा । करालो भीषणः स चासौ कालियः तन्नामकप्रबलाशीविषः । सर्पश्च तस्य मस्तको मूर्धा तस्याग्रतोऽग्रे । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम् । 'क्ष्वेलस्तु गरलं विषम्' इत्यमरः । 'करालो दन्तुरे तुङ्गे विशाले भीषणेऽपि

च' इति दर्पणः । आशिषि दंष्ट्रायां विषं यस्य सः आशीविषः । पृषोदरादित्वात्साधुः । 'आशीस्तालुगता दंष्ट्रा यया विद्धो न जीवति' इत्याधुनिकामरव्याख्याता । नृत्तस्य नर्तनस्य महानुत्सवः तस्य क्षणेऽवसरेऽपि विगतग्लानिः ग्लानता यस्य तच्च तत् पदस्याग्रं पल्लवमिव यस्य तत् । 'क्षणो व्यापारकैवल्ये कालभेदाल्पकालयोः । उत्सवे परतन्त्रत्वे मध्यावसरपर्वसु' इति वैजयन्ती । 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । अत्र गरलाग्नीत्यत्र पदाग्रपल्लवमित्यत्र च उपमालङ्कारस्य गरलाग्निसम्बन्धेऽपि ग्लानिलक्षणकार्याजनेर्विगतग्लानीति वर्णनात् । 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे' इत्युक्तविशेषालङ्कारस्य च संसृष्टिः । महोत्सवक्षणपुनरुक्तवदाभासस्य शब्दालङ्कारस्य संसृष्टिश्च । 'पुनरुक्तवदाभासः पुनरुक्तेस्तथात्वतः । तेजोधामबुधामिन्द्रो जिष्णुस्सुधिषणो गुरुः ॥' इति सोदाहरणमलङ्कारमञ्जर्यां पुनरुक्तवदाभासो लक्षितः । वपुः प्रकटीभावयति ॥ ३३ ॥

**चरणौ शरणागताश्रयावरुणाग्रौ तरुणीजनार्चितौ ।**
**तरुणौ करुणाकरौ दधन्मरणे वैरिजनस्य कारणम् ॥३४॥**

**चरणाविति** ॥ शरणागतानाम् । 'शरणं गृहरक्षित्रोः' इत्यमरोक्तेः शरणं रक्षितारम् आगताः । 'गत्यर्थाकर्मक' इति कर्तरि क्तः । तेषा-माश्रयौ । गम्यादित्वात् 'षष्ठी' इति सूत्राच्च समासः । 'शरणं रक्षणे गृहे' इति विश्वोक्तेः शरणं रक्षणं तस्मै आगतानाम् आश्रयाविति वा । अरुणे अव्यक्तरागे अग्रे ययोस्तौ अरुणाग्रौ । तरुणीजनैरर्चितौ । तरुणौ नवौ । 'तरुणः स्यान्नवे यूनि' इति विश्वः । करुणायाः दयाया आकरौ । वैरिजनस्य मरणे कारणं कारणभूतौ चरणौ दधत् । पादस्य

वैरिमरणकारणत्वं शकटासुरमर्दनादिना द्रष्टव्यम् । यद्वा करुणाकरौ चरणौ दधत् वैरिजनस्य मरणे कारणम् वपुः प्रकटीभावयतीति सम्बन्धः । अत्र अनुप्रासश्शब्दालङ्कारः ।। ३४ ।।

**विमलालिकलापकालिमप्रतिलम्ब्यं वरपिङ्गलद्युति ।**
**प्रविडम्बयदम्बुदं नवं दधतं विद्युतमुद्यतं दिवि ।। ३५ ।।**

**विमलेति** ।। विमलो योऽलीनां भ्रमराणां कलापः समूहः तस्य कालिमेव कालिमा नीलत्वं यस्य तत् विमलालिकलापकालिमा । 'षट्पदभ्रमरालयः' इति 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इति 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इति चामरः । कालशब्दात् 'वर्णदृढादिभ्यः ष्यञ्च' इति चकारादिमनिच् । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो न चोत्तरपदलोपश्च' इति बहुव्रीहावुत्तरपदलोपः । प्रतिलम्बिना लम्बमानेन अम्बरेण वाससा पीताम्बरेण पिङ्गला पिशङ्गी द्युतिर्यस्य तत्तथोक्तम् । 'अम्बरं व्योम्नि वाससि' इति 'पिशङ्गौ कद्रुपिङ्गलौ' इति चामरः । दिव्यन्तरिक्षे उद्यतमुत्थितम् । विद्युतं तटितं दधतं वहन्तम् । नवं प्रत्यग्रम् । अम्बुदं मेघम् । प्रविडम्बयदनुकुर्वत् । वपुः प्रकटीभावयति । अत्र बिम्बप्रतिबिम्बभावापन्नधर्मिका आर्थी उपमालङ्कारः ।। ३५ ।।

**दधदच्छमुरश्च सम्प्रति प्रभविष्यत्परिरम्भणान्मम ।**
**अचिरोद्गतपीवरस्तनच्युतकाश्मीरविलेपनाविलम् ।। ३६ ।।**

**दधदिति** ।। सम्प्रति इदानीम् । अच्छं स्वच्छम् । उरो वक्षस्थलं दधत् । परिरम्भणात् परिष्वङ्गात् । अचिरेण सद्यः उद्गतौ उद्भूतौ पीवरौ

स्थूलौ स्तनौ ताभ्याम् । च्युतं गलितं यत्काश्मीरं कुङ्कुमं तस्य विलेपनेन वर्णकेन आविलम् अनच्छं च । पीवरं 'पीनी तु स्थूलपीवरौ' इत्यमरः । 'कुङ्कुमं घुसृणं रक्तं बाह्लीकं पीतनं वरम् ।। वासनीयककाश्मीर-धीरलोहितचन्दनम्' इति शब्दरत्नाकरः । 'वर्णकं स्याद्विलेपनम्' इति 'कलुषोऽनच्छ आविलः' इत्यमरः । प्रभविष्यत् 'लृटस्सद्वा' इति शत्रादेशः । कुङ्कुमपङ्किलं भावीत्यर्थः । उरश्च दधत् वपुरिति पूर्ववत् । अत्रोरसोऽच्छतात्यागेन कुङ्कुमपङ्काङ्केना(न)च्छतावर्णनात्तद्गुणालङ्कारः । 'तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः । पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ।।' इति सोदाहरणं तल्लक्षणात् ।। ३६ ।।

**द्विषदङ्गविदारणोद्यतौ भुजगाभौ दधदायतौ भुजौ ।**
**भविता नखकेतकी ययोः प्रियनर्माचरणोचिता मम ।।३७।।**

**द्विषदङ्गेति** ।। द्विषतां मधुकैटभहिरण्यकशिपुप्रभृतिद्वेषिणाम् अङ्गस्यावयवस्य शरीरस्य विदारणे दलने उद्यतौ उद्युक्तौ । 'अङ्गं स्यादन्तिके गात्रे प्रतीकोपाययोरपि' इति दर्पणः । भुजगस्य सर्पस्य आभेवाभा ययोस्तौ तथोक्तौ । आयतौ दीर्घौ भुजौ दधत् वपुरित्यादि पूर्ववत् । भुजौ विशिनष्टि । ययोर्भुजयोर्नखमेव केतकीकुसुमम् । 'पुष्पमूलेषु बहुलम्' इत्यणो लुपि 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृतिवल्लिङ्गम् । मम प्रियाणां नर्माचरणानां खेलाविधीनाम् । उचिता योग्या भविता । 'भू सत्तायां' लुट् भाविनी । अत्र भुजसम्बन्धिनख एव विदारणनर्माचरण-योरौचित्यवर्णनात् पर्यायालङ्कारः । केतक्याः विषयीभूतायाः नखलक्षण-विषयात्मना नर्मक्रियौचित्यवर्णनात्परिणामालङ्कारश्चेत्युभयोः सङ्करः । 'एकस्मिन्नप्यनेकं वा पर्यायः सोऽपि सम्मतः । अधुना पुलिनं तत्र यत्र

स्रोतः पुराजनि' इति सोदाहरणं पर्यायो लक्षितः । परिणामस्तूक्तलक्षणः ।। ३७ ।।

**अतिमानुषया मुखश्रिया विकचेन्दीवरवर्णचारिम ।**
**निखिलानि मनांसि मज्जयद्विपुलानन्दरसामृताम्बुधौ ।।३८।।**

**अतिमानुषयेति** ।। विकचस्य सम्फुल्लस्य इन्दीवरस्य नीलाम्बुजस्य यो वर्णो नीलिमा तस्य चारिमेव चारिमा सौन्दर्यं यस्य तत् । 'अथ नीलाम्बुजन्म च । इन्दीवरं च' इत्यमरः । चारुशब्दात् 'पृथ्व्यादिभ्य इमनिज्वा' इतीमनिच्प्रत्ययः । तथा च नैषधे । 'किर्मीरितोर्मिचयचारिमचापलाभ्याम्' इत्येकादशसर्गे । अतिमानुषया मानुषमतिक्रान्तया । 'अत्यादयः क्रान्ताद्यर्थे' इति समासः । मानुषदुर्लभयेत्यर्थः । मुखस्य श्रिया शोभया । 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिति कथ्यते' इत्यभिधानम् । विपुलः उरुः आनन्दरसः आनन्दद्रवः स एवामृताम्बुधिः सुधाब्धिः तस्मिन् । 'गुणे रागे द्रवे रसः' इत्यमरः । निखिलानि सर्वजनीनानि । मनांसि मज्जयत् । मज्जतेर्णिच् । वपुरिति पूर्ववत् । अत्र मनस आनन्दाम्बुधौ निमज्जनं समर्थनीयं पूर्वार्धेन समर्थ्यत इति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।। ३८ ।।

**युगलेन दृशोस्सरोजयोरपहासप्रदमायतान्तयोः ।**
**मधुरापुरवाणिनीश्रियां[१] हृदयाकर्षणपाशभूतयोः ।। ३९ ।।**

**युगलेनेति** ।। मधुरापुरस्य वाणिन्यो मत्तयोषितः ताः श्रियो लक्ष्म्य इवेत्युपमितसमासः । तासां हृदयानामाकर्षणे पाशभूतयोः पाशसदृशयोः ।

१. 'वाणिनीस्त्रियां' इति पाठान्तरम् ।

'अथ भूतवाक् । अतीततुल्यलब्धेषु' इति केशवः । पाशायमानकटाक्षजुषोरित्यर्थः । 'वाणिनी स्याद्विदग्धायां नर्तकीमत्तयोषितोः' इति कविदर्पणः । वाणिनीस्त्रियामिति पाठे संहितायामितिवद्विषयसप्तमी । विदग्धवनिताविषय इत्यर्थः । आयतान्तयोः दीर्घान्तभागयोः । दृशोर्नयनोर्युगलेन । सरोजयोः पद्मयोः अपहासप्रदं रक्तारविन्दपलाशपरिहासीत्यर्थः । वपुरिति पूर्ववत् । वाणिनीश्रियामित्युपमालङ्कारः ।।३९।।

**नवनीतरसेन वा पुरा स्वदितेनाधिकशीतलश्रिया ।**
**हसितेन सितेन भूषयद्भुवमन्तर्बहिरस्यता तमः ।। ४० ।।**

**नवनीतेति** ।। पुरा पूर्वं बाल्ये । स्वदितेनोपभुक्तेन । नवनीतस्य नवोद्धृतस्य रसेन द्रवेण वा । 'उपमायां विकल्पे वा' इत्यमरः । नवनीतरसेनेवेति हेतूत्प्रेक्षा । सितेन धवलेन अन्तर्बहिश्च तमोऽन्धकारं शोकं च । अस्यता निरस्यता । 'तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे' इति विश्वः । हसितेन । 'हसे हसन इत्यतो भावे निष्ठा । हासेनैवाधिकशीतलश्रिया अतिशयितशीतांशुना । शीतगुणोऽस्यास्तीति सिध्मादित्वाल्लच् । श्रीः शोभा कान्तिः अधिकशीतलश्रीरिन्दुरित्येक एवार्थः । भुवं भूषयत् अलङ्कुर्वत् । भूमेर्भूषायमाणं वपुरिति पूर्ववत् । अन्तर्बहिस्तमोऽस्यतेति विशेषणेन प्रसिद्धपूर्णचन्द्राददतिशयवर्णनादध्यासाच्च हसितेनाधिकशीतलश्रियेति व्यक्ताभेदरूपकमर्थालङ्कारः । हसितेन सितेनेत्यनुप्रासः शब्दालङ्कारश्चेति तयोः संसृष्टिः ।। ४० ।।

**मकराङ्कितरत्नकर्णिकाकिरणातञ्चितगण्डमण्डलम् ।**
**अधिमौलि दिशः प्रसर्पता ज्वलितं रत्नकिरीटतेजसा ।।४१।।**

**मकरेति** ।। मकरेण नक्रेणाङ्किता चिह्निता रत्नानां कर्णिका कुण्डलं तस्याः किरणैः आतञ्चितमाप्यायितं गण्डमण्डलं वर्तुलो गण्डप्रदेशो यस्य तत्तथोक्तम् । 'मकरो यादसि ज्ञेयो निधिराशिप्रभेदयोः' इति विश्वः । 'मकरो निधौ नक्रे राशिविशेषे च' इति हैमश्च । कर्णशब्दाद्भवार्थे 'कर्ण-ललाटात्कन्नलङ्कारे' इति कन्प्रत्ययः । 'कर्णिका कर्णभूषणम्' इत्यमरः । अधिमौलि मौलौ । विभक्त्यर्थे अव्ययीभावः । 'संयताः कचाः । मौलिः' इत्यमरः । दिशो दिग्भागान् । प्रसर्पता व्याप्नुवता । रत्नानां किरीटं मुकुटम् । 'किरीटं पुन्नपुंसकम्' इत्यमरः । तस्य तेजसा महसा । 'रोचिर्महो वर्चो ज्योतिस्तेजश्च धाम च' इति शब्दरत्नाकरः । ज्वलितं दीप्तम् । वपुरिति पूर्ववत् । अत्र मकराङ्कितेत्यादौ कादिवर्णानुवृत्तेरनुप्रासः शब्दालङ्कारः ।। ४१ ।।

**तदिदं किल तोयशायिनस्तरुणं रूपमहो दिदृक्षते ।**
**नयनं मम शर्मकारणं परमं द्वारवतीपुरश्रियाम्[१] ।। ४२ ।।**

**तदिदमिति** ।। मम नयनम् । तोयशायिनः तोये जले शयितुं शीलमस्येति तोयशायी तस्य । अनेन च विशेषणेन 'आपो नारा इति प्रोक्ताः' इति स्मृतिसिद्धं नारायणत्वमभिसन्धत्ते । तत् एवं वर्णितमिदं मनोगतम् । तरुणं नवीनम् । 'तरुणस्तु नवे यूनि नवीनेऽप्यभिधेयवत्' इति केशवः । द्वारवतीपुरश्रियां द्वारवतीपुरस्य श्रियः स्त्रियः । निगीर्याध्यवसानेन रूपकातिशयोक्तिभङ्ग्याऽभिधानात् श्रिय इव विद्यमाना स्त्रिय इति तात्पर्यम् । तासां शर्मकारणं सुखहेतुः । किलेति वार्तायाम् । 'वार्तासम्भाव्ययोः किल' इत्यमरः । स्त्रियामिति पाठे विषयसप्तमी ।

१. 'पुरस्त्रियाम्' इति पाठान्तरम् ।

नगरस्त्रीजनविषये शर्मकारणमित्यर्थो ज्ञेयः । अत एव परमं रूपं वपुः । 'अथ रूपं नपुंसकम् । स्वभावाकृतिसौन्दर्यवपुष्षु श्लोकशब्दयोः' इति केशवः । दिदृक्षते द्रष्टुमिच्छति । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । अत्र श्रीकृष्णं प्रति रुक्मिण्या औत्सुक्यरूपस्य भावस्योदयः शृङ्गार-रसस्याङ्गमिति भावोदयालङ्कारः । 'भावस्योद्गमावस्था भावोदयः स यत्र रसस्याङ्गं स भावोदयः' इति तल्लक्षणम् ।। ४२ ।।

**स कदा नु मृदूदितस्मितो युगलेनेक्षणयोरधोक्षजः ।**
**कुरुते मयि सौहृदामृतद्रवसंसिक्तमिवावलोकनम् ।। ४३ ।।**

**स कदेति** ।। मृदु कोमलम् उदितमुद्भूतं स्मितमीषद्धसनं यस्य स तथा । 'मृदू चातीक्ष्णकोमलौ' इत्यमरः । उदितं भाषितं स्मितं मन्दहासश्च मृदुनी उदितस्मिते यस्य स इति वा । 'उक्तं भाषितमुदितम्' इत्यमरः । अधोक्षजः श्रीकृष्णः । 'कंसारातिरधोक्षजः' इत्यमरः । ईक्षणयोर्नयनयो-र्युगलेन । मयि सौहृदं सुहृद्भाव एवामृतं तद्द्रवेण संसिक्तम् उक्षितमिवेति क्रियास्वरूपोत्प्रेक्षा । अवलोकनम् । कदा नु कुरुते । नु वितर्के । 'विभाषा कदाकर्ह्योः' इति भविष्यदर्थे लट् । सुहृदयस्य भावः सौहृदम् । युवादित्वादण् । ननु 'हृद्भगसिध्वन्ते पूर्वपदस्य च' इति पाणिनिस्मरणात् सौहार्दमित्येव वक्तव्यम् उभयवृद्ध्यनुशासनात् । वक्ष्यति च कविराकरे 'तव सौहार्दवशादसाविति' इति चेत् । अत्र शरणदेवः– 'सञ्ज्ञापूर्वकस्य विधेरनित्यत्वात्' 'हृद्भग' इत्यस्याप्रवृत्त्या आदिवृद्धिरेव । चान्द्रास्तु 'हृद्भग' इत्यत्र प्रतिपदोक्तस्य हृदयपर्यायस्य हृच्छब्दस्य ग्रहणमिति 'हृल्लेखयदण्लासेषु' इति लाक्षणिकस्य हृदादेशस्याग्रहणात् इहादिवृद्धौ सौहृदमिति साधयन्ति । रक्षितस्त्वाह– केचिदर्थवद्ग्रहणपरिभाषया

'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातितस्य सुहृच्छब्दस्यावयवो यो हृच्छब्दः तदन्तस्योत्तरपदस्य वृद्धिर्भवति । समुदायो हि तत्र तन्त्रम् अवयवस्तु निरर्थक इति व्याचक्षत इति समाधानमभिहितवान् । अत एव 'सख्यं साप्तपदीनं स्यान्मैत्री मैत्रं च सौहृदम्' इति शब्दरत्नाकरः । अत एव च 'भावसाहसपरिग्रहादभूत्तातसौहृदसुखं मनोहरम्' । 'क्षणभिन्नसौहृदः' इत्यादिप्रयोगः एवमेव समर्थितः । अत्र कदेति पदसूचितचिन्ताख्य-व्यभिचारिभावः शृङ्गाररसस्याङ्गमिति प्रेयोऽलङ्कारः ।। ४३ ।।

**प्रणयो मम तत्र यादृशः किमिहास्मासु न तस्य तादृशः ।**
**अपि येन वयं ह्रियामहे प्रसभेनामिततेजसाञ्जसा ।।४४।।**

**प्रणय इति** ।। मम श्रीकृष्णे यादृशः प्रणयः प्रेमा । 'प्रणयास्त्वमी । विस्रम्भयाञ्चाप्रेमाणः' इत्यमरः । तस्य श्रीकृष्णस्य । तादृशः प्रणयः इहास्मासु । न किं किमाक्षेपे । 'किं प्रश्नाक्षेपकुत्सासु' इति नानार्थ-रत्नामाला । किं त्वस्त्येव । अमिते तेजो बलं प्रभावो वा यस्य स तथा तेन । 'तेजो बले प्रभावाग्नौ ज्योतिष्यर्चिषि रेतसि' इति वैजयन्ती । येन अञ्जसा झडि(टि)ति । प्रसभेन बलात्कारेण । 'द्रा(स्रा)क् झटि-त्यञ्जसाह्नाय' इति 'प्रसभं तु बलात्कारो हठः' इति चामरः । अपि ह्रियामहे । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यदर्थे कर्मणि लट् । हरिष्यामह एव । अपिः सम्भावनायाम् । 'सम्भावना च शक्तेर-प्रतिघाताविष्करणम्' इत्यमरव्याख्यानम् । मम हरणे तस्य शक्तिप्रतिघातो न भविष्यतीत्यर्थः । अस्मासु वयमित्युभयत्र बहुवचनं 'अस्मदोद्वयोश्च' इति लक्षणप्राप्तम् । ममेत्यत्र तु बहुत्वस्याविवक्षितत्वात् शास्त्रस्य विकल्परूपत्वाच्च न बहुवचनम् । प्रयोगे सति हि शास्त्रान्वेषणं न तु

शास्त्रमस्तीति प्रयोगनियम इति नैकवचनानुपपत्तिः । अत्र रुक्मिणी-श्रीकृष्णयोः परस्परप्रणयानुबन्धरूपोपकारवर्णनादन्योन्यालङ्कारः । 'अन्योऽन्यं नाम यत्र स्यादुपकारः परस्परम् । त्रियामा शशिना भाति शशी भाति त्रियामया' इति सोदाहरणं तल्लक्षणाभिधानात् । स चामित तेजसेति विशेषणस्य साभिप्रायकत्वेन सङ्कीर्यते ।। ४४ ।।

**इति तत्प्रविषक्तमानसा वरमन्यं चकमे न रुक्मिणी ।**
**परिपूर्णमपास्य चन्द्रिका रजनीशं किमुपाश्रयेदुडुम् ।।४५।।**

**इति तत्प्रविषक्तेति** ।। इति तदिदमित्याद्युक्तप्रकारेण । तस्मिन् श्रीकृष्णे प्रकर्षेण विषक्तमासक्तं मानसं यस्यास्सा । 'उपसर्गात्सुनोति' इत्यादिना वीत्युपसर्गात्परस्य सजेः सस्य षत्वम् । रुक्मिणी । तस्मादन्यं वरं जामातरं वल्लभम् । न चक्रमे । 'कमु कान्तौ' लिट् । नेष्टवती चन्द्रिका परिपूर्णं षोडशकलापूर्णम् । रजनीशं चन्द्रम् । अपास्य निरस्य । उडुं नक्षत्रम् । 'नक्षत्रमृक्षं भं तारा तारकाप्युडु वाऽस्त्रियाम्' इत्यमरः । उपाश्रयेत्किं नोपाश्रयेदेव । अत्रोपमानोपमेययोरेकस्यैव धर्मस्य पृथङ्निर्देशात् प्रतिवस्तूपमालङ्कारः । 'वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता' इति तल्लक्षणात् । अत्र यद्यप्युपमेयवाक्ये न चकम इत्यनिच्छा उपमानवाक्ये अनुपाश्रयणीति धर्मभेदः प्रतिभाति । तथाप्याश्रयमात्रस्य नक्षत्रादाव-वर्जनीयस्य प्रतिषेधानर्हत्वात् इच्छापूर्वक आश्रयप्रतिषेधः । योऽयम-निच्छापर्यवसित इति धर्मैक्यमनुसन्धेयमित्यालङ्कारिकाः ।। ४५ ।।

**अथ तां कुलदेवताभुवं विविधाकल्पसमेधितत्विषम् ।**
**नगरोपवनापदान्तरे गमयामास सखीजनस्सखीम् ।।४६।।**

**अथेति** ।। उक्तचिन्तानन्तरम् । सखीजनः विविधैराकल्पैः भूषणैः । 'आकल्पो मण्डनं वेषः प्रतिकर्म प्रसाधनम् । भूषणं स्यादलङ्कारः नेपथ्याभरणे तथा' इति हलायुधः । समेधिता सम्यक् अभिप्रवृद्धा त्विट् दीप्तिर्यस्यास्सा ताम् । सखीं रुक्मिणीम् । नगरस्य कुण्डिनपुरस्य उपवनमारामस्तस्यापदान्तरे अव्यवहिते स्थाने । 'संसक्ते त्वव्यवहितमपदान्तरमित्यपि' इत्यमरः । विद्यमानां ताम् उक्तविशेषणां कुलदेवतायाः कात्यायन्याः भुवं स्थानम् । 'भूर्भूम्यां स्थामात्रे च' इति केशवः । आलयमिति यावत् । गमयामास । 'गम्लृ गतौ' इत्यतो ण्यन्ताल्लिट् । 'गतिबुद्धिप्रत्यवसानार्थ' इत्यादिना अणौ कर्तुः कर्मत्वम् ।। ४६ ।।

**प्रयते[१] प्रियरूपकान्तिभि[२]स्सुमनोभिः सहितेन वर्त्मना ।**
**कुसुमासवसेवनान्तरस्फुटगीतभ्रमरेण सर्वतः ।। ४७ ।।**

**प्रयत इति** ।। प्रयते परिशुद्धे । 'पवित्रः प्रयतः पूतः' इत्यमरः । नगरोपवनापदान्तर इत्याद्यन्वेति । प्रियाणि कान्तयः अरुणिमपीतिमादिवर्णप्रयुक्तशोभाश्च यासां तास्तथोक्ताः ताभिः । सुमनोभिः पुष्पैः । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः । सर्वतः परितः । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । सहितेन । कुसुमानां पुष्पाणाम् आसवं मकरन्दः तत्सेवनस्य तदास्वादनस्य अन्तरमवसरः । 'अन्तरं रन्ध्रविवरव्यवधानयोः । अवकाशावसरयोः' इति दर्पणः । तस्मिन् स्फुटं प्रव्यक्तं गीतम् । गायतेर्भावे निष्ठा । गानं येषां ते तथोक्तास्तथाविधाः भ्रमराः यस्मिन् तत्तथोक्तं तेन । वर्त्मना मार्गेण 'तां कुलदेवताभुवं गमयामास सखीजनः सखीम्' इति पूर्वश्लोकेनान्वयः । श्लोकद्वयी चेयं सान्दानितकं नाम

१. प्रयतीं इति पाठान्तरम् । २. 'प्रयतप्रियरूपकान्तिभिः' इति पाठान्तरम् ।

काव्यम् । वर्त्मनो भ्रमरगानवत्त्वं समर्थनीयं सुमनस्साहित्येन समर्थितमिति काव्यलिङ्गमलङ्कारः । प्रयतप्रियरूपकान्तिभिरिति पाठे प्रयतत्वं प्रियत्वं यथासङ्ख्यं रूपे कान्तौ चान्वेतीति व्याख्यानम् । प्रयतीमिति पाठे वर्त्मना प्रतियान्तीं गच्छन्तीमिति व्याख्या ।। ४७ ।।

**प्रतिमानिलयं प्रविश्य सा तरुषण्डेष्वकरोत्प्रदक्षिणम् ।**
**विनयावनताऽवनीतले प्रणतिं भीष्मकराजकन्यका ।।४८।।**

**प्रतिमानिलयमिति** ।। सा भीष्मकराजकन्यका । कन्याशब्दात्सञ्ज्ञायां कन्प्रत्यये 'केणः' इति ह्रस्वत्वे क्षिपकादित्वादित्वाभावः । 'कन्यायाः कानीन च' इति निर्देशात् 'वयसि प्रथमे' इति न ङीप् । तरूणां षण्डेषु कदम्बेषु । 'अथ षण्डवाक् । अस्त्री वृक्षसमूहे स्यात्पद्मादीनामितीतरे' इति केशवः । विद्यमानं प्रतिमानिलयं प्रतिमायाः आलयम् । प्रविश्य प्रदक्षिणमकरोत् । डुकृञ् करणे लङ् । विनयेनाचारेण प्रशान्त्या वा अवनम्रा । 'विनयो धर्मविद्यादिशिक्षाचारप्रशान्तिषु' इति वैजयन्ती । अवनीतले भूसमदेशे । 'तलं पाताले समदेशे च' इति केशवः । प्रणतिं नमस्कारं चाकरोत् । स्वभावोक्तिरलङ्कारः । नमस्कारस्य प्रतिमानिलय-प्रवेशतत्प्रदक्षिणविनयादिधर्मवत्ताभिधानात् ।। ४८ ।।

**परिणीर्मम माधवो भवेदिति रत्नाभरणैरमानुषैः ।**
**प्रतिमां प्रतिकुर्वती सती मनसा प्रार्थयते स्म वाञ्छितम्**
**।। ४९ ।।**

**परिणीरिति** ।। माधवः श्रीकृष्णः परिणीः परिणयकर्ता । वोढेत्यर्थः । भवेत् । 'भू सत्तायां' लिङ् । इति अमानुषैः दिव्यैः रत्नाभरणैः ।

भगवत्सन्निधानपात्रं प्रतिमां प्रतिकुर्वती अलङ्कुर्वती । अवर्णान्तत्वाभावात् 'आच्छीनद्योर्नुम्' इति नुम्न प्राप्नोति । सती साध्वी मनसा वाञ्छितम् । अभिलषितं प्रार्थयते स्म । 'अर्थ उपयाञ्चायां' इत्यतो लट् । प्रार्थयत । अयाचतेत्यर्थः ।। ४९ ।।

**गमनाय कृतोद्यमा पुरस्तमिवानारतभावनाबलात् ।**
**हृदि सन्निहितं झडित्यसावपरोक्षं नलिनाक्षमैक्षत ।। ५० ।।**

**गमनायेति** ।। गमनाय गन्तुम् । कृतः उद्यमः उद्योगो यया सा कृतोद्यमा । असौ रुक्मिणी । अनारता सन्ततमनुवर्तमाना या भावना ध्यानं निरन्तरचिन्ता तस्य बलात् । 'भावनालेपने ध्याने' इति विश्वः । हृदि सन्निहितं तं हरिमिव । पुरः अग्रतः । 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः । झडि(टि)ति द्राक् देवताप्रसादसमनन्तरमेव नलिनाक्षं नलिनं पद्ममिवाक्षि यस्य स तथा तम् । अत्र वक्तव्यं पुण्डरीकाक्ष(पद)-व्याख्यावसरे प्रागुक्तम् । अपरोक्षम् ऐक्षत । 'ईक्ष दर्शने' लङ् अपश्यत् । नित्यापरोक्षशालिन्या लक्ष्म्या लोकविडम्बनानुवादः । अत्र रुक्मिण्यु-त्कण्डितस्य भगवद्दर्शनस्य प्रयत्नं विना लाभवर्णनात् प्रहर्षणालङ्कारः । 'उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् । तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका' । इति सोदाहरणं तल्लक्षणाभिधानात् ।। ५० ।।

**सुमुखी नखरालिरक्तया पुलकालङ्कृतया निजे भुजे ।**
**रथगस्य रथाङ्गलक्ष्मणा भुजयाऽग्राहि भुजङ्गशायिनः ।।५१।।**

**सुमुखीति** ।। सुमुखी रुक्मिणी । रथं गच्छतीति रथगः । 'अन्यत्रापि दृश्यते' इति गमेर्डः । रथे स्थितस्येत्यर्थः । भुजगशायिनः शेषे शयानस्य

श्रीकृष्णस्य नखराणां नखानाम् आल्या रक्तया शोणिमगुणोपेतया नखरालिरक्तया । 'नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । पुलकै रोमाञ्चैः अलङ्कृतया 'पुलकः कृमिरोमाश्वमणिदोषास्त्रराजिषु' इति कविदर्पणः । रथाङ्गं चक्रं लक्ष्म चिह्नं यस्याः सा तया रथाङ्गलक्ष्मणा । भुजया 'भुजवाहू द्वयोः' इति शब्दरत्नाकरः । निजे भुजे रुक्मिणीभुजदेशे । अग्राहि गृहीता । 'ग्रह उपादाने' लुङ् । अत्र खादिवर्णानुवृत्तेरनुप्रासश्शब्दालङ्कारः ।।५१।।

**त्रपयातुरमानसा मनाङ्नवसंसर्गभुवाऽत्र नाभवत् ।**
**न हि चेतस आदिपूरुषश्शशिमुख्या निरियाय जात्वपि**
**।। ५२ ।।**

**त्रपयेति** ।। रुक्मिणीति योग्यतया संयोज्यम् । अत्र रथे । नवसंसर्गभुवा नवेन नूतनेण संसर्गेण कान्तकरस्पर्शनादिरूपेण भुवा उत्पन्नया । त्रपया लज्जया 'त्रपा लज्जाकुलटयोः' इति विश्वः । अपीति योज्यम् । मनागीषत् 'ईषदर्थे मनागपि' इत्यमरः । आतुरं त्वराशीलं भ्रान्तं मानसं मनो यस्यास्सा आतुरमानसा । नाभवत् 'भू सत्तायां' लङ् । शशिमुख्या । शशी चन्द्र इव मुखं यस्यास्सा शशिमुखी । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । तस्याश्चेतसो हृदयात् । जातु कदाचिदपि । 'कदाचिज्जातु' इत्यमरः । न निरियाय हि । निरित्युपसर्गादिण्गतावित्यतो लिट् । अत्र पूर्ववाक्यार्थस्य लज्जाभावस्य उत्तरवाक्यार्थेन समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।। ५२ ।।

**परिहर्तुमलं जुगुप्सितां वनितातस्करतां यदृत्तमः ।**
**निजशङ्खमपूरयद्दृढं न हि मानी खलवृत्तिमृच्छति ।। ५३ ।।**

**परिहर्तुमिति** ।। यदूत्तमः यदुषूत्तमः श्रीकृष्णः । सप्तमीति योगविभागात्समासः । स्वस्येति शेषः । जुगुप्सितां निन्दिताम् । वनितातस्करतां वनितायाः स्त्रियः तस्करश्चोरः तस्य भावस्तस्करता ताम् । अलं परिहर्तुम् । निजशङ्खं स्वकीयं पाञ्चजन्यं दृढं यथा तथा अपूरयत् । 'पूरी आप्यायन' इत्यतो लङ् । पूरितवान् । तथाहि । मानी चित्तसमुन्नतिमान् । खलस्य नीचस्य वृत्तिं वर्तनम् । 'खलं भूस्थानकल्केषु क्रूरे नीचेऽधमेऽन्यवत्' इति विश्वः । न ऋच्छति । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेष्वित्यतो लट् । गच्छति । ऋगतावित्यस्य 'पाघ्राध्मे'त्यादिना ऋच्छादेशो वा । अर्थान्तरन्यासोऽलङ्कारः ।। ५३ ।।

**धनुषस्तृषितस्य संयुगे स्फुटविष्फाररवोपबृंहितः ।**
**द्विषतामिव दारयन्मनो ध्वनिरक्षोभयदाशु कुण्डिनम् ।।५४।।**

**धनुष इति** ।। संयुगे युद्धे । तृषितस्य पिपासुनः । तृष पिपासायामिति धातोः कर्तरि क्तः । धनुषः शार्ङ्गस्य । स्फुटः प्रव्यक्तः विष्फारश्चासौ रवश्च विष्फाररवः । तेन उपबृंहितो वर्धितः । विस्तारित इत्यर्थः । 'स्फुटं प्रव्यक्तमुल्बणम् ।' विष्फारो धनुषः स्वानः' इति चामरः । स्फुरतिस्फुलत्योर्घञीत्यात्वम् । 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इति षत्वम् । द्विषतां द्वेषिणाम् । मनो दारयन् भेदयन् इवेति क्रियास्वरूपोत्प्रेक्षालङ्कारः । ध्वनिः पाञ्चजन्यनिनादः । कुण्डिनं नगरमाशु अक्षोभयत् । 'क्षुभ सञ्चलन' इत्यतो णिजन्ताल्लङ् । समकम्पयत् ।। ५४ ।।

**मगधाधिपतिर्मधुद्विषा सह सङ्ग्रामरसाभियोगवान् ।**
**अपि मानधनो विनिर्ययौ रभसादक्षतचक्रविक्रमः ।।५५।।**

**मगधाधिपतिरिति** ।। मधुद्विषा मधुनामकदैत्यद्वेषिणा श्रीकृष्णेन । सह सङ्ग्रामो युद्धं तस्य रसः पराक्रमः तेनाभियोगः अपचिकीर्षया प्रबलेन दुर्बलस्याक्रमणमिति सुभूतिचन्द्र इत्यमरव्याख्या तद्वान् । यद्वा अभियोगः उद्योगः रसे अभियोगः तद्वान् । मानधनः अपिशब्दः शक्तेरप्रतिघाताविष्करणं सम्भावनेत्यमरव्याख्यानोक्तलक्षणसम्भावनायां वर्तते । मानश्चित्तसमुन्नतिः धनं यस्य स तथा । अप्रतिहतशक्तिकगर्वशालीत्यर्थः । अक्षतचक्रविक्रमः अक्षतः अहिंसितः चक्रस्य अनीकस्य विक्रमः शौर्यं यस्य स तथा । मगधाधिपतिः मगधदेशेश्वरः जरासन्धः । रभसाद्वेगात् । विनिर्ययौ निर्जगाम । 'या प्रापणे' लिट् । 'सङ्ग्रामाभ्यागमाहवाः । युद्धम्' इत्यमरः । 'रसो रागे विषे द्रव्ये शृङ्गारादौ पराक्रमे' इति शब्दरत्नाकरः । 'अभियोगस्त्वभिग्रहः' इति । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इति 'मानश्चित्तसमुन्नतिः' इति चामरः । 'रभसो हर्षवेगयोः' इति नानार्थरत्नमाला । 'क्षिणु हिंसायां' इति धातोः क्तप्रत्यये 'अनुदात्तोपदेशवनतितनोति' इत्यादिनानुनासिकलोपः । न क्षतः अक्षतः 'चक्रं चानीकमस्त्रियाम्' इत्यमरः । अत्र मधुसूदनेन कथमस्य सङ्ग्राम इति समर्थनीयस्य अपि मानधन इति अक्षतचक्रविक्रम इति च समर्थनात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।। ५५ ।।

**हलकृष्टशरीरनिर्गलद्रुधिरार्द्रो गमितो जरासुतः ।**
**हलिना बलिनाऽवलेपवान्न कथञ्चिच्चरमां दशां नृपः ।।५६।।**

**हलकृष्टेति** ।। बलमस्यास्तीति बली तेन । हलिना बलभद्रेण । अवलेपो गर्वः तद्वान् । 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः । जरासुतो नृपः जरासन्धः । हलेन लाङ्गलेन कृष्टमाकृष्टं यच्छरीरं

तस्मान्निर्गलदवस्रंसद्रुधिर रक्तं तेन आर्द्रः क्लिन्नः । हलकृष्टशरीर-निर्गलद्रुधिरार्द्रः । 'लाङ्गलं हलम् । गोदारणं च सीरः' इति 'रुधिरेऽ-सृग्लोहितास्त्ररक्तक्षतजशोणितम्' इति 'आर्द्रं सार्द्रं क्लिन्नम्' इति चामरः । चरमामन्त्याम् । 'अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः' इत्यमरः । दशामवस्थां 'दशावर्ताववस्थायाम्' इति विश्वः । कथञ्चित् कृच्छ्रेण । न गमितः गमेर्ण्यन्तात्कर्मणि क्तः । न प्रापितः । अत्र प्राणात्ययसामग्र्यां सत्यामपि प्राणावियोगोक्तेर्विशेषोक्त्यलङ्कारः । 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे । हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि ।।' इति सोदाहरणं तल्लक्षणाभिधानात् ।। ५६ ।।

**प्रसभात्किल कोऽपि यादवः सहजां मे हरतीति सस्मयः ।**
**शिशुपालहितोत्सुको ययौ नृपसूनुर्मधुसूदनो यतः ।।५७।।**

**प्रसभादिति** ।। कोऽपि यादवः । किलेति न्यक्कारे । 'अलीके च किल स्मृतः । न्यक्कारेऽनुचिते हेतौ' इत्यमरशेषः । न्यक्कृतौ यादव इत्यर्थः । मे मम । सहजां स्वसारम् । प्रसभात् बलात्कारात् । 'प्रसभं तु बलात्कारो हठः' इत्यमरः । हरत्यपहरतीति सस्मयः सगर्वः । 'स्मयो गर्वोद्भूते' इति विश्वः । शिशुपालाय हितं शिशुपालहितं तस्मिन्नुत्सुकः उद्युक्तः । 'चतुर्थी तदर्थीबलिहितसुखरक्षितैः' इति सप्तमीति च चतुर्थीसप्तमीसमासौ । यद्यपि 'इष्टार्थोद्युक्त उत्सुकः' इत्याहामरः । तथाप्यत्र हितपदसन्निधानात् करिकलभादिशब्द इव उद्युक्तमात्रार्थत्वं वक्तव्यम् । यद्वा हितश्चासावुत्सुकश्च हितोत्सुकः शिशुपालस्य हितोत्सुक इति व्याख्येयम् । विशेषणयोः समासोऽपि बहुलग्रहणात् सोढव्यः । अत एवानल्पदग्धारिपुरानलोज्ज्वलैरिति श्रीहर्षः । नृपसूनुर्भीष्मकपुत्रः रुक्मी ।

यतो यत्र । मधुं सूदयतीति मधुसूदनः । नन्द्यादित्वात्कर्तरि ल्युः । तं देशं ययौ प्राप्तवान् । अत्र सकारानुवृत्तेरनुप्रासः शब्दालङ्कारः । सहजापहारस्य यादवः किलेत्यसम्भाव्यत्ववर्णनादसम्भवोऽर्थालङ्कारः । 'असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम् । को वेद गोपकशिशुः शैलमुत्पाटयेदिति ।।' इति तल्लक्षणोदाहरणे इत्युभयोः संसृष्टिः ।। ५७ ।।

**हरिमेष विषादयन्निव न्यरुणद्रोषकषायितेक्षणः ।**
**मृगराजमिव द्विपाधिपः पुनरेनं प्रजहास साहसी ।। ५८ ।।**

**हरिमिति** ।। रोषकषायितेक्षणः रोषेण कोपेन कषायिते सञ्जातरागे ईक्षणे यस्य स तथोक्तः । 'कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौ स्त्रियाम्' इत्यमरः । 'कषायस्तु रसे रागे' इति दर्पणः । कषायशब्दात् 'तदस्य सञ्जातं तारकादिभ्य इतच्' इति इतच्प्रत्ययः । 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः । एष रुक्मी । हरिं श्रीकृष्णम् । विषादयन् विषादिनं कुर्वन् । विषादश्चित्तावसादः । 'विषादस्तु विषस्यात्तरि भेद्यवत् । चित्तावसादे तु पुमान्' इति केशवः । सीदतेः 'हलश्च' इति घञि 'षदिरप्रतेः' इति षत्वे विषादोऽस्यास्तीति विषादी तं कुर्वन्निति 'तत्करोति' इति णिचि णाविष्टवत्प्रातिपदिकस्येतीष्टवद्भावाट्टेरिति टिलोपे शतरि विषादयन्निति रूपम् । उत्पादितोऽपि विषादो लोकस्य दृष्ट्यपेक्षयैव न तु तत्त्वत इतीवशब्दः । द्विपाधिपः गजपतिः । 'द्विरदोऽनेकपो द्विपः' इत्यमरः । सुपीति योगविभागात्पिबतेः कः । मृगराजः मृगाणां राजा मृगराजः । 'राजाहस्सखिभ्यष्टच्' इति टच्प्रत्ययः । तं सिंहमिव । 'सिंहो मृगेन्द्रः' इत्यमरः । न्यरुणत् । रुधिर् आवरण इति धातोर्लङि रुधादित्वाच्छ्नमि तिपि 'इतश्च' इतीकारलोपे 'हल्ङ्याब्' इत्यादिना तलोपे

धातुधकारस्य जश्त्वे 'वावसाने' इति चर्त्वविकल्पे न्यरुणदिति रूपम् । विरुद्धवान् । पुनः अप्रथमे । 'पुनरप्रथमे भेदे' इत्यमरः । निरोधानन्तर-काले । साहसी साहसं वीरकर्म अनालोचितकार्यं वा अस्यास्तीति तथोक्तः । 'अथ चान्यायवचसि साहसं वीरकर्मण । अनालोचितकर्येऽपि' इति कविदर्पणः । एनं 'द्वितीयाटौस्वेनः' इत्यन्वादेशे इदम एनादेशः । प्रजहास । 'हसे हसन' इति धातोर्लिट् । हसितवान् । अत्रोपमालङ्कारः । षादिवर्णानुवृत्तेरनुप्रासः शब्दालङ्कारः स्फुटः ।। ५८ ।।

**अयि नन्दसुत व्रजाङ्गनासहवासाहितमानसम्पदः ।**
**न बिभर्ति मनोज्ञतामयं तव दर्पो मम सन्निधौ बत ।।५९।।**

**अयीति** ।। अयि नन्दसुत भो नन्दगोपनन्दन व्रजस्य गोष्ठस्य । अङ्गनानां स्त्रीणां सहवासेनाहिता आपादिता या मानस्य चित्तसमुन्नतेः सम्पत् श्रीः यस्य स तथा तस्य तव । अयं मत्सहजाहरणरूपः । दर्पः अहङ्कारः । दर्पोऽहङ्कारकस्तूर्योः' इति । मनोज्ञता मञ्जुलत्वम् । न बिभर्ति । 'डुभृज् धारण' इत्यतो लट् । बत हर्षे । 'खेदानु-कम्पासन्तोषविस्मयामन्त्रणे बत' इत्यमरः । अत्र मम पुरुषस्य सन्निधौ तव गर्वो न युक्त इत्यस्य व्रजाङ्गनेत्यादिविशेषणेन समर्थनात्काव्य-लिङ्गमलङ्कारः ।। ५९ ।।

**अधुना मम सायको रणे प्रकटं पाटयिता तवोरसः ।**
**सुहृदामयि ते व्रजौकसां नयनाम्बूनि निपातयिष्यति ।।६०।।**

**अधुनेति** ।। अयि नन्दसुत । अधुना इदानीम् । मम सायको बाणः । 'शरे खड्गे च सायकः' इत्यमरः । रणे समरे । तव उरसः वक्षसः ।

'उरो वत्सं च वक्षश्च' इत्यमरः । कर्मणि षष्ठी । प्रकटं प्रकाशं यथा तथा । 'प्रकाशं प्रकटं स्पष्टम्' इति शब्दरत्नाकरः । पाटयिता । पटधातुः स्वार्थे णिजन्तो हिंसार्थः । भेत्ता । व्रजो गोष्ठमोको निवसनं येषां ते व्रजौकसः तेषां सुहृदां मित्राणाम् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातितो मित्रशब्दपर्यायः सुहृच्छब्दः । 'अथ मित्रं सखा सुहृत्' इत्यमरः । नयनाम्बून्यश्रूणि । 'अश्रु नयनाम्बु' इत्यमरः । निपातयिष्यति । 'पत्लृ गतौ' हेतुमण्णिच् । निर्गमयिष्यति । प्रकटं पाटयितेत्यादौ वर्णानुवृत्तेः शब्दालङ्कारः ।। ६० ।।

उक्तबिभीषिकायाः फलं दर्शयति—

**तदियं गजराजगामिनी तव गोपाल न धर्षणोचिता ।**
**वरटा कलहंसमध्यगा न हि काकस्य वशं गता भुवि**
**।। ६१ ।।**

**तदियमिति** ।। गजराज इव गच्छतीति गजराजगामिनी । 'कर्तर्युपमाने' इति णिनिः । इयं रुक्मिणी । हे गोपाल तव धर्षणोचिता धर्षणे आक्रान्तौ उचिता योग्या न भवति । 'सुरताक्रान्तिधार्ष्ण्येषु धर्षणम्' इति शब्दरत्नाकरः । 'उचितं ज्ञातयोग्ययोः' इति कविदर्पणः । कलहंसाः कादम्बाः तेषां मध्यं गच्छतीति मध्यगा । मधुरवाक् हंसमध्यवर्तिनी । 'कलहंसस्तु कादम्बः किञ्चिदाधूसरच्छदः' इति शब्दरत्नाकरः । वरटा हंसी । 'हंसस्य योषिद्वरटा' इत्यमरः । भुवि काकस्य वशमधीनत्वम् । 'वशः प्रभुत्वाधीनत्ववाञ्छासु' इति कविदर्पणः । 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । गतवती नहीति प्रतिवस्तूपमालङ्कारः । 'वाक्ययोरेकसामान्ये

प्रतिवस्तूपमा मता' इति तल्लक्षणमभिधाय 'स्थिरा शैली गुणवतां खलबुद्ध्या न बाध्यते । रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते ।।' इत्युदाहृतम् ।। ६१ ।।

**इति रुक्मिणि रुक्मतेजसि प्रलपत्यल्पधियि स्मयन्निव ।**
**भगवानददात्तदुत्तरं दृढमुक्तैः प्रदरैरुदारधीः ।। ६२ ।।**

इतीति ।। इति पूर्वश्लोकत्रयोक्तप्रकारेण । रुक्मस्य तेजस्त्विविडिव तेजो यस्य स तथा तस्य । 'तेजो बले प्रभावेऽग्नौ त्विषि' इति रत्नमाला । अल्पा धीर्यस्य तस्मिन् । प्रलपति अनर्थकवचसि । क्षुल्लकबुद्धेरित्थं वचनगुम्भो वन्ध्य एवेति भावः । उदारा महती धीर्यस्य सः उदारधीः । 'उदारो दातृमहतोः' इत्यमरः । यद्वा उदारे संयुगे धीर्यस्य स तथोक्तः । 'उदारं तु नना ज्ञेयं जठरेऽस्त्री तु संयुगे' इति केशवः । 'सप्तमीविशेषणे बहुव्रीहौ' इति सप्तम्यन्तस्य पूर्वनिपातः । भगवान् श्रीकृष्णः । स्मयन्निव ईषद्धसन्निव । दृढमुक्तैः दृढं यथा तथा मुक्तैः च्युतैः । शार्ङ्गादिति शेषः । प्रदरैः सायकैः । 'सायकः प्रदरः काण्डः कङ्कपत्रः शिलीमुखः' इत्यमरः । तदुत्तरं तस्य प्रतिवाक्यम् । 'प्रतिवाक्योत्तरे समे' इत्यमरः । रुक्मिप्रलापस्य प्रतिक्रियामेव क्रियाकेवलमुत्तरमिति भावेन । अददात दत्तवान् । 'डुदाञ् दाने' लङ् । ननु कथं स्मयन्निति प्रयोगः यावता ष्मिङ् ईषद्धसन इति धातुर्ङित् ङिच्चासौ 'अनुदात्तङित आत्मनेपदम्' इत्यात्मनेपदं लभेत । प्रयोगश्च स्मयमानमुखाम्बुज इति । अतोऽत्र परस्मैपदमयुक्तमिति चेत् । उच्यते । 'अनुदात्तङित आत्मनेपदम्' इत्येतदनित्यम् । चक्षिङोऽनुबन्धद्वयकरणाज्ज्ञापकात् । शरणदेवस्तु 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति सूत्रान्मण्डूकप्लुत्यान्यतरस्याङ्ग्रहणानुवृत्तेः 'अनुदात्तङित आत्मनेपदम्'

इत्यात्मनेपदम् वैकल्पिकमिति । यद्वा ष्मिङ् ईषद्धसन इति धातोः 'अन्येभ्योऽपि दृश्यते' इति विचि निष्पन्नत्वात् स्मेरिति शब्दात् 'सर्वप्रातिपदिकेभ्यः क्विबाचारे' इति क्विपि शतरि स्मेरिवाचरति स्मयन्निति रूपम् । एवं च सति 'त्राहि मां पुण्डरीकाक्ष शयामि किमतः परम्' इत्यादयः प्रयोगास्सङ्गच्छन्त इत्यवोचत् । 'अचः परस्मिन्' इति सूत्रे नैतेभ्यो विविज्दृश्यत इति कैयटवचनं तु ईकारान्तादूकारान्ताच्च विच्प्रत्ययो नोत्पाद्य इत्येवम्परम् । अत एव ने इति लो इति चोदाहृतमिति वैयाकरणाः ॥ ६२ ॥

**श्रवणावधिकृष्टशिञ्जिनीजवसम्प्रेरितगाढपातितैः[१] ।**
**स तिरस्कृतवातवर्त्मभिश्शरजालैरकिरज्जगद्गुरुः ॥ ६३ ॥**

**श्रवणेति** ॥ जगतां गुरुः जगद्गुरुः । स भगवान् । श्रवणं श्रोत्रम् अवधिः सीमा यस्याः सा । कृष्टा आकृष्टा शिञ्जिनी ज्या आकर्षण-क्रियाविशेषणं वा । श्रवणावधिपदं श्रवणावधि यथा तथाकृष्टशिञ्जिन्या जवो वेगस्तस्य सम्प्रेरितो भावे निष्ठा । सम्प्रेरणं तेन गाढं दृढं यथा तथा पतितुं शीलमेषामिति तथोक्ताः तैः जवसम्प्रेरिताश्च ते गाढपातिनश्चेति विग्रहे 'पूर्वकालैक' इति समास इति व्याख्यानं तु अर्थात् क्तेनैव समासो विज्ञायत इति हरदत्तवचनात् स्नातानुलिप्तः कृष्टसमीकृत इत्यादिलक्ष्यानु-साराच्चायुक्तम् । गाढपतितैरिति पाठे तु उक्तलक्षणः समासो नानुचितः । 'श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । 'अवधिः स्यात्परिच्छेदेऽवधाने कालसीमयोः' इति दर्पणः । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । 'जवो वेगो रयस्यदः' इति शब्दरत्नाकरः । 'गाढबाढदृढानि च' इत्यमरः ।

१. 'गाढपतितैः' इति पाठान्तरम् ।

तिरस्कृतं निराकृतं वातस्य वायोर्वर्त्म पदवी यैस्तानीति तिरस्कृतवातवर्त्मानि तैः । अवधीरितवायुवेगैरित्यर्थः । 'तिरसोऽन्यतरस्याम्' इति सत्वम् । यद्वा तिरस्कृतमाच्छादितं वातवर्त्म विहायसमन्तरिक्षं यैस्तैः । 'वियद्विष्णुपदं दिव्यं वायुवर्त्म विहायसम्' इति वैजयन्ती । शरजालैर्बाणसमूहैः । कलम्बमार्गणशराः' इति 'जालं समूह आनाये' इत्यमरः । अल्पधियीत्यनुवर्तते । अकिरत् 'कॄ विक्षेपे' लङ् । अवाक्षिपत् । अत्र श्रवणावधि कृष्टचापच्युतिगाढपातनादिक्रियावर्णनात् स्वभावोक्तिरलङ्कारः । यद्वा वायुवेगतिरस्करणं समर्थनीयं तज्जगद्गुरुरिति समर्थ्यते । 'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु' इति रुद्रकोश इत्यमरव्याख्याने जगच्छब्दस्य वाय्वर्थत्वोक्तेरत्र तद्गुरुत्वादिति काव्यलिङ्गमलङ्कारः ॥ ६३ ॥

**जगदादिरदीनविक्रमो धनुरस्याच्छिनदेष रुक्मिणः ।**
**स च सत्वरमुत्पतन् रथादसिमादत्त भयङ्कराकृतिम् ॥६४॥**

**जगदादिरिति** ॥ अदीनः अदरिद्रः अनल्पः विक्रमः पराक्रमो यस्य स तथोक्तः । जगतामादिः प्रथमः । 'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः' इत्यमरः । एष भगवान् श्रीकृष्णः । अस्य रुक्मिणो धनुरच्छिनत् । 'छिदिर् द्वैधीकरणे' लङ् । स च रुक्मी । सत्वरं तूर्णम् । 'सत्वरं चपलं तूर्णम्' इत्यमरः । रथादुत्पतन् उत्प्लवमानः । भयङ्करा आकृतिराकारो यस्य स तथा तं 'मेघर्तिभयेषु कृञः' इति करोतेः 'खचि खित्यनव्ययस्य' इति मुमागमः । असिं खड्गम् आदत्त । आङ्पूर्वाद् 'डुदाञ् दान' इत्यतो लङ् । अगृह्णात् । अत्र दादिवर्णानुवृत्तेरनुप्रासः शब्दालङ्कारः ॥६४॥

**क्वचिदुत्पतताऽभिधावता पिहितेन स्फुटितेन च क्वचित् ।**
**अणुना कुहचिन्महीयसा समरे व्यह्रियतामुना चिरम् ॥६५॥**

**क्वचिदिति** ।। क्वचित् 'किमोत्' इत्यतिप्रत्यये 'क्वाति' इति किमः क्वादेशः । कस्मिंश्चिद्देशे । उत्पतता उत्प्लवमानेन । क्वचिदभिधावता आभिमुख्येन धावनं कुर्वता पिहितेन खेटादिना छन्नेन । क्वचित् स्फुटितेन प्रकाशितेन कुहचित् कविप्रयोगात्साधुत्वम् । क्वचित्प्रदेशे अणुना । क्वचिच्च महीयसा स्थूलरूपभाजा । अमुना श्रीकृष्णेन । समरे युद्धे चिरं भूयसा कालेन व्यह्रियत । हरतेर्भावे लङ् । विहृतम् । विपूर्वो हरतिरकर्मक इति 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति भावे लकारः ।। ६५ ।।

**भ्रमतीह निघातनेच्छया प्रकटीकुर्वति लाघवं रिपौ ।**
**अमुना स विदर्भभूभुजः करगो[१]ऽसिः शकलीकृतः शरैः**
**।। ६६ ।।**

**भ्रमतीति** ।। रिपौ रुक्मिणि । प्रतिघातनेच्छया मारणेच्छया । 'मारणं प्रतिघातनम्' इत्यमरः । लाघवं लघुभावं प्रकटीकुर्वति स्फुटं कुर्वति अत एव भ्रमति अनवतिष्ठमाने सति । अमुना श्रीकृष्णेन । 'विदर्भभूमुजः विदर्भाधिपतेः रुक्मिणः । करगः करे विद्यमानः । असिः खड्गः । शरैः शकलीकृतः खण्डीकृतः । 'भित्तं शकलखण्डे वा' इत्यमरः । चूर्णित इत्यर्थः । करत इति पाठे 'आद्यादिभ्य उपसङ्ख्यानम्' इति तसिः । कर एव चूर्णित इत्यर्थः । अत्र कृष्णप्रतिघातनेच्छया प्रवृत्तस्य न केवलं स्वाभिलषितार्थालाभः असिखण्डनाद्यनिष्टावाप्तिश्च वर्ण्यत इति विषमालङ्कारः । यदाह । 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् । भक्ष्याशया हि मञ्जूषां दृष्ट्वाखुस्तेन भक्षितः' इति लक्षणश्लोके चशब्देन विषमपरिग्रहः ।। ६६ ।।

१. 'करतः' इति पाठान्तरम् ।

**इषुधिद्वितये कृशोदरे मधुजिन्मर्मनिकर्तनैः शरैः ।**
**विषरूपितसर्पसन्निभैः स निषङ्गं विततान रुक्मिणम् ।।६७।।**

**इषुधीति** ।। सः शकलीकृतपरासिः मधुजित् मधुनामकदैत्यजेता । मधुहेति पाठे 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति सूत्रे नियमद्वयमभिमतमिति पक्षे साधुत्वं दुर्घटवृत्तावुक्तम् । इषुध्योस्तूणीरयोर्द्वितयम् । 'सङ्ख्याया अवयवे तयप्' इति द्विशब्दात्तयप् । द्वयं तस्मिन् । कृशोदरे कृशे सूक्ष्मे बाण-विरहिते उदरे यस्य तस्मिन् । 'कृश तनूकरण' इति धातोः 'उपसर्गा-त्फुल्लक्षीबकृशोल्लाघाः' इति क्तप्रत्ययतकारलोपनिपातनात् कृशेति रूपम् । मर्मणो जीवस्थानस्य निकर्तनाः छेदकाः तैः । 'जीवस्थानं भवेन्मर्म' इति हलायुधः । निपूर्वात्कृती छेदन इत्यतो नन्द्यादित्वात्कर्तरि ल्युः । विषरूषिताः विषेण रूषिताः अभिभूताः 'गुण्ठितरूषिते' इत्यमरः । ते च ते सर्पाश्च तेषां सदृशैरित्यस्वपदविग्रहः । अत एव 'स्युरुत्तरपदे त्वमी । निभसङ्काशनीकाशप्रतीकाशोपमादयः' इत्यमरः । शरैर्बाणैः । रुक्मिणं निषङ्गं तूणीरम् । विततान । 'तनु विस्तारे' लिट् । स्वस्य निषङ्गालाभे तमेव निषङ्गं कृतवानित्यस्य स्वबाणास्तत्रैव संसक्ता इत्यर्थे तात्पर्यम् । 'पर्यायोक्तं तु गम्यस्य वचोभङ्ग्यन्तराश्रयम्' इति लक्षितं पर्यायोक्तमलङ्कारः ।। ६७ ।।

**रथकूबरमाश्रितं श्रमात्प्रदराक्रान्ततनुं[1] विमोहितम् ।**
**विनिहन्तुमरिं सुदर्शनं जगृहे चक्रमशेषपावनः ।। ६८ ।।**

**रथेति** ।। अशेषान्पावयतीत्यशेषपावनो हरिः । रथकूबरं रथस्य

१. 'प्रदरप्रेततनुम्' इति पाठान्तरम् ।

युगन्धरम् । 'कूबरस्तु युगन्धरः' इत्यमरः । युगधारणानुकूलदारुविशेषः । तमाश्रितम् । प्रदरैः शरैः आक्रान्ता तनुर्यस्य स तथा । प्रदरप्रोततनुमिति पाठे प्रोता स्यूता तनुर्देहो यस्येति विग्रहः । विमोहितं विमोहं प्रापितम् । अरिं रुक्मिणम् । विनिहन्तुम् । सुदर्शनं शोभनं दर्शनं यस्येति सुदर्शननामकं चक्रम् । जगृहे । 'ग्रह उपादाने' लिट् । गृहीतवान् ।। ६८ ।।

**अथ जैत्ररथाधिरोपिता स्वजनस्नेहरसार्द्रमानसा ।**
**दयिता प्रणयादयाचत प्रणता भ्रातृवधोद्यतं प्रियम् ।।६९।।**

**अथेति** ।। जैत्रः जयशीलस्यायं जेतैव जैत्रः प्रज्ञादित्वात्स्वार्थे अणप्रत्यय इति वा । 'जेता जैतश्च जित्वरः' इत्यमरः । स चासौ रथश्च तमधिरोपिता । गत्यादित्वात्समासः । स्वजने स्नेह एव रसो द्रवस्तेनार्द्रं क्लिन्नं मानसं यस्याः सा तथोक्ता । दयिता वल्लभा । प्रणयात् प्रकर्षमानीतः प्रेमा प्रणयः । तस्मात् 'प्रेमानीतः प्रकर्षश्चेत् स एव प्रणयो मत' इति हरिदीक्षितोदाहृतवचनम् । तेन स्नेहप्रणययोर्भेदः सिद्ध्यति । प्रणयप्रकर्षेण नतवती । भ्रातृवधे सहोदररुक्मिहनने उद्यतं हरिम् । अयाचत । टुयाचृ याच्ञायामिति धातोर्लङ् । प्रार्थितवती । प्रणतेत्यत्र 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । यद्यपि नमतिः सकर्मकः । श्लिषादावगणितश्च तथापि । नमनं गतिविशेष एव । यदाहुर्वैशेषिकाः 'भ्रमणाकुञ्चन-प्रसारणोर्ध्वज्वलनगमनादयो गतिविशेषाः' इति तथा च गत्यर्थत्वात् उक्तशास्त्रेण क्तप्रत्यय उत्पादयितुं युक्तः । अत एव 'द्वितीयाश्रितातीत-पतितगतात्यस्तप्राप्तापन्नैः' इति सूत्रोदाहरणे कृष्णं श्रित इत्यत्र श्रितादिषु गत्यर्थत्वात्कर्तरि क्तः । श्रयणं प्राप्तिः प्राप्तिश्चेह गतिरेवेति प्राञ्चः । यद्वा 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका

क्रिया' इति वैयाकरणवचनेन कर्मणोऽविवक्षया अकर्मकत्वेन उक्तशास्त्रेण नमेः क्तप्रत्ययः । प्रणतं प्रणतिः तदस्यास्तीति अर्शआद्यजन्तत्वेन वा प्रणतेति रूपम् । भक्तः मुक्ता ब्राह्मणाः पीतप्रतिबद्धवत्सामिति यथा । अथ चादिकर्मणि क्तः कर्तरि चेति कर्तरि क्रियाप्रारम्भरूपादिकर्मणि क्तप्रत्ययः । सर्वमेतद्दुर्घटवृत्तिमनोरमादौ प्रपञ्चितम् ।। ६९ ।।

**क्षमयाम्यखिलेश विप्रियं चरितं यत्त्वयि दीर्घसूत्रिणा ।**
**करुणाविषयेऽत्र साहसं बहुमूर्खं न हि कर्तुमर्हसि ।।७०।।**

**क्षमयामीति** ।। हे अखिलेश । त्वयि दीर्घसूत्रिणा दीर्घं च तत् सूत्रं च सूचनमस्यास्तीति दीर्घसूत्री तेन । 'सूत्रं तु सूचने तन्तौ ग्रन्थभेदव्यवस्थयोः' इति कविदर्पणः । चिरक्रियेण वा । रुक्मिणा यच्चरितं कृतम् । विक्रियम् अप्रियम् । तत्क्षमयामि 'क्षमूष् सहन' इति धातोर्णिजन्ताल्लट् मर्षयामीति । तथाचात्र एतस्मिन् करुणाविषये दयापात्रे । बहवो मूर्खाः अज्ञा यस्य तत्तथा । 'मुहेः खो मुर्च' इति खप्रत्ययः । मुह्यते मरादेशश्च । साहसं वीरकर्म अनालोचितकार्यं वा कर्तुं न ह्यर्हसि । वैयात्यं कर्तुं योग्यो न भवसीत्यर्थः । अत्र साहसाकरणे क्षमापनस्य हेतोर्हेतुमता सह वर्णनाद्धेतुरलङ्कारः । काव्यलिङ्गमित्यन्ये ।। ७० ।।

**उदिते वचसीति भीरुणा विनिवर्त्यायुधमाह माधवः ।**
**सुमुखि व्रजतादपेतभीस्तव सौहार्दवशादसाविति ।। ७१ ।।**

**उदित इति** ।। भीरुणा अनेन जनेन । रुक्मिण्येति यावत् । इति पूर्वोक्तप्रकारेण । वचस्युदिते उद्गीर्णे सति । माधवः श्रीकृष्णः । आयुधं चक्रम् । विनिवर्त्य विशेषेण निवृत्तं विधाय । हे सुमुखि । तव

सौहार्दवशात् प्रेमाधीनत्वात् 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः असौ रुक्मी । अपेतभीः अपेता व्यपगता भीर्भयं यस्मात्स तथा स सन् । व्रजतात् 'व्रज गतौ' इत्यतो लोट् । तुह्योस्तातङिति तोस्तातङ् गच्छतु इत्याह । अत्र यकारमकारादिवर्णानामनुवृत्तेरनुप्रासः शब्दालङ्कारः । "उदिते वचसीति भीरुणा स्म निवर्त्यायुधमाह माधवः" इति पाठस्सुगमः ॥ ७१ ॥

**प्रतिपद्य धियं पुनस्तया सह सोदर्यबलावलम्बनात् ।**
**कथमप्यगमद्विलम्बयन्नगरं गारुडतुण्डमोक्षितः ॥ ७२ ॥**

**प्रतिपद्येति** ॥ स रुक्मी पुनर्धियं सञ्ज्ञाम् । प्रतिपद्य प्राप्य । सोदर्या इदं सोदर्यं तच्च तत् बलं च तस्यावलम्बनादाश्रयणात् । गारुडतुण्डमोक्षितः गरुडसम्बन्धिचञ्चुमोचितः तया धिया बुद्ध्या विलम्बयन् विलम्बं कुर्वन् सन् । जयकृतोत्साहाभावाद्विलम्बमान इत्यर्थः । कथमपि केनापि प्रकारेण । नगरमगमत् । 'गम्लृ गतौ' लङ् गतवान् ॥ ७२ ॥

**प्रतिपालयतो नृपात्मजां शिशुपालस्य हतो मनोरथः ।**
**हरिणा जलदर्तुना यथा मधुपस्याम्बुजिनीरसार्थिनः ॥७३॥**

**प्रतिपालयत इति** ॥ हरिणा श्रीकृष्णेन । नृपात्मजां भीष्मकपुत्रीं रुक्मिणीम् । प्रतिपालयतः प्रतीक्षमाणस्य 'प्रतीक्षा प्रतिपालनम्' इति शब्दरत्नाकरः । शिशुपालस्य । मनोरथो वाञ्छा । अम्बुजिन्याः पद्मिन्याः रसं मकरन्दम् अर्थयितुं शीलमस्येति अम्बुजिनीरसार्थिनो मधुपस्य भ्रमरस्य । जलदानामृतुर्जलदकालः वर्षाकालः तेन यथा वर्षर्तुनेव । हतः हिंसितो भग्न इत्यर्थः । उपमालङ्कारः ॥ ७३ ॥

**हृदयं तु बभूव रुक्मिणो दमितस्यापि निबद्धमन्युमत् ।**
**कुशलैरपि मार्जितो जनैरपि नाङ्गारमुपैति पाण्डुताम् ।।७४।।**

**हृदयमिति** ।। दमितस्यापि दम उपशमे दान्तस्येति वा 'वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' इति दान्तेन विकल्पेन इडभावनिपातनादिटि दमितस्येति रूपम् । रुक्मिणो हृदयम् । तुः पादपूरणे । 'तुहिचस्महवै पादपूरणे' इत्यमरः । यद्वा शिशुपालस्य मनोरथो हतः रुक्मिणस्तु हृदयमिति सम्बन्धः । निबद्धः सन्दानितः मन्युः क्रोधः अस्यास्तीति निबद्धमन्युमत् । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । 'कृष्णसर्पवान् वल्मीकः । लोहितशालिमान् ग्राम' इति महाभाष्यप्रयोगात् । 'न कर्मधारयान्मत्वर्थीय' इति वचनं नादरणीयमिति मतुबुपपत्तिः । कुशलैर्जनैः जलैर्मार्जितः परिशोधितोऽपि अङ्गारः अग्निविट् । 'अङ्गारस्तु पुमान् भौमे स्यात्कृष्णगुण एव च । त्रिषु तद्वति निर्वाणे ज्वाले त्वग्नौ नृशण्डयोः । निर्वाणाग्राविन्धवे च' इति केशवः । अपिशब्दो विमर्शे । तथा चोपसर्गनिघण्टौ । 'अपि काकः श्येनायत' इति । पाण्डुतां धावल्यं नोपैति नोपगच्छति । अत्र क्रोधाभावहेतौ दमे सत्यपि कार्याजनिवर्णनाद्विशेषोक्तिरलङ्कारः ।। ७४ ।।

'सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम् । काव्यं कल्पान्तरस्थायि' इति दण्डिवचनमनुरुन्धानो वृत्तान्तरेणोक्तमर्थमुपसंहरन्नाह—

**इत्थं हृतायां नरदेवपुत्र्यां पश्यत्सु राजप्रवरेषु तेषु ।**
**धुरन्धराणामिव नीतिहीनं मनो न शोभां नगरं बभार**
**।। ७५ ।।**

**इत्थमिति** ।। राजप्रवरेषु जरासन्धप्रभृतिषु । पश्यत्सु 'षष्ठी चानादरे' इति सप्तमी । पश्यतो राजप्रवराननादृत्येत्यर्थः । नरदेवपुत्र्यां भीष्मकसुतायाम् । शार्ङ्गरवादित्वात् ङीन् । रुक्मिण्याम् । इत्थं 'भुजयाग्राही'त्युक्तप्रकारेण । हृतायाम् अपहृतायां सत्याम् । धुरन्धराणां धूर्वहानाम् । 'सञ्ज्ञायां भृतॄवृ' इत्यादिना धारयतेः खच् । 'खचि ह्रस्वः' इत्युपधाह्रस्वत्वम् । पूर्वपदस्य वाचयमपुरन्दरौ चेत्यत्र चकारस्यानुक्त-समुच्चायकत्वादमन्तत्वम् । अत एव च 'धुरीणश्च धुरन्धरः' इत्यमरः । नीतिहीनं मन इव नगरं शोभां कान्तिम् । न बभार । 'डुभृञ् भरणे' लिट् । अत्र रुक्मिण्याहरणकार्यतया वर्णनीयस्य प्रतिभटराजमनसो नगरस्य चाशोभालक्षणैकधर्मान्वयात् तुल्ययोगितालङ्कारः । 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता । सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च ।।' इति सोदाहरणं तल्लक्षणाभिधानादिति व्याख्यानं मञ्जुलम् । इवशब्दसत्वात् । अतः स्फुटप्रतिभासोपमैवात्रालङ्कार इति शोभते पक्षः । अत्र पूर्वार्धमिन्द्रवज्रा उत्तरार्धमुपेन्द्रवज्रेत्युपजातिः । वृत्तरत्नाकरे 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति पादग्रहणेऽपि छन्दस्सूत्रे वज्राभ्यामुपजातिसामान्योक्तेः पादग्रहणमतन्त्रमिति छन्दोविचितिवेदिनः ।। ७५ ।।

**अथ रथमधिरूढः प्रौढलक्ष्म्या समेतः**
**सबलबलसहायो बालनीलोत्पलाक्ष्याः ।**
**दधिघटघटिताभिः सङ्गतस्सुन्दरीभिः**
**प्रतिगमनवतीभिर्द्वारकामाप शौरिः ।। ७६ ।।**

।। इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यविरचिते उषाहरणे महाकाव्ये तृतीयः सर्गः ।। ३ ।।

**अथेति** ।। अथ प्रतिभटराजन्यजयानन्तरम् । प्रौढलक्ष्म्या प्रौढानां जैत्राणां लक्ष्मीः वीरश्रीः तया । यद्वा प्रौढाः प्रगल्भाः लक्ष्म्यः शोभाः यस्यास्सा तया । बहुवचनान्तलक्ष्मीशब्देन विग्रहाश्रयणात् कप्रत्ययाभावः । तथा च मनोरमायां 'नद्यृतश्च' इति सिद्धे उरःप्रभृतिषु लक्ष्मीरित्येकवचनान्तपाठे एकवचनान्तस्यैव नित्यो यथा स्यात् अन्यत्र शेषादिति विकल्प एव तेन अकृशमकृशलक्ष्म्यश्चेतसा शंसितं स इति सिद्धम् । अकृशा लक्ष्म्यो यस्येति विग्रह इति । बालं प्रत्यग्रं यन्नीलोत्पलं तदिव अक्षि यस्यास्सा तथा तया बाला च सा नीलोत्पलाक्षी च तयेति वा । 'पुंवत्कर्मधारयजातीयदेशीयेषु' इति बालाशब्दस्य पुंवद्भावः । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति अक्षिशब्दात् षच्प्रत्ययः । षित्वात् ङीष् । समेतः सम्यङ्मिलितः रथमधिरूढः । 'गत्यर्थाकर्मक' इत्यत्र रुहेरुपादानात् कर्तरि क्तः, स्यन्दनमारूढवान् । बलैः सहितः सबलः स चासौ बलो बलभद्रश्च स सहायो यस्येति विग्रहाश्रयणात् । बलं च बलश्च बलबलाविति विग्रहे सरूपाणामेकशेषापत्तिरिति दूषणमनवकाशम् । दधिघटैर्दधिपूरितैर्घटैः घटिता सङ्गताः ताभिः प्रतिगमनम् आभिमुख्येन गमनं तद्वतीभिः सुन्दरीभिः सङ्गतः । शौरिः बाह्वादित्वादीङ् । श्रीकृष्णः द्वारकां पुरीमाप । 'आप्लृ व्याप्तौ' इत्यतो लिट् । अत्रानुप्रासः शब्दालङ्कारः स्फुटः । मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणात् । अष्टभिः सप्तभिश्च यतिमती मालिनीत्यर्थः ।। ७६ ।।

**।। इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यविरचितोषाहरणव्याख्यायां रसिकरञ्जनीसमाख्यायां सुमतीन्द्रयतिकृतायां तृतीयः सर्गः ।।**

## ।। अथ चतुर्थः सर्गः ।।

अस्मिन्सर्गे श्रीरुक्मिणीदेव्याः श्रीकृष्णस्य सङ्गमं तत्र प्रद्युम्नजन्मादि च वर्णयति—

**कान्तिमन्तमथ कान्तया तया यान्तमात्मभुवमान्तरं पुरम् ।**
**आकिरन्नगरसुन्दरीजनास्साधुलाजनिचयैस्समन्ततः ।। १ ।।**

**कान्तिमन्तमिति** ।। अथ रुक्मिणीसमाहरणानन्तरम् । नगरसुन्दरीजनाः द्वारकाललामायितस्त्रीजनाः । तया रुक्मिण्याख्यकान्तया प्रमदया । 'प्रमदा मानिनी कान्ता' इत्यमरः कान्तिमन्तं शोभावन्तम् । आन्तरम् अन्तर्भवं पुरमन्तःपुरमित्यर्थः । आन्तरं पुरम् आत्मीयं पुरमिति वा । आयान्तमागच्छन्तम् । आत्मभुवं हरिम् । 'आत्मभूर्मन्मथे विष्णौ विरिञ्चे च' इति केशवः । साधूनामुचितानाम् । लाजानां भ्रष्टयव-समुद्भवसुमङ्गलाक्षतानाम् । निचयैः समूहैः । 'साधुः स्यात्सज्जने सौम्ये वार्धुषावुचितेऽपि च' इति दर्पणः । 'लाजाः स्युर्भ्रष्टधान्येऽपि च' इति विश्वः । 'लाजाः पुंभूम्नि चाक्षताः' इत्यमरश्च । समन्ततः सर्वतः । आकिरन् । 'कॄ विक्षेपे' लङ् कीर्णवन्तः । तकारादेरसकृदावृत्तेर्वृत्त्यनुप्रासः शब्दालङ्कारः ।। अत्र सर्गे रथोद्धतानामकं वृत्तम् । तथा च छन्दस्सूत्रं 'रात्रलिङ्गा रथोद्धता' इति । एतच्च 'रो नराविह रथोद्धता लगौ' वृत्तरत्नाकरे विवृतम् ।। १ ।।

**लोचनैरपि हरिः सुलोचनापातितैः प्रमदबाष्पसङ्कुलैः ।**
**सङ्गतस्सुखकरैश्शरन्निशाचन्द्रिकाभिरिव चन्दनद्रुमः ।। २ ।।**

**लोचनैरिति** ।। हरिः श्रीकृष्णः । सुलोचनाभिः स्त्रीभिः । पातितैः । उत्पातितैरिति यावत् । सुलोचनापातितैः । प्रमदो हर्षस्तस्य बाष्पं नेत्राम्बु तेन सङ्कुलैर्व्याप्तैः । 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः । 'सङ्कुलं तु भवेद्व्याप्ते' इति केशवः । सुखं कर्तुं शीलवद्भिः । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति करो तेष्टः । सुखकरैर्लोचनैः । 'लोचृ दर्शन' इत्यतो भावे ल्युट् । अवलोकनैः न केवलं लाजनिचयैः । शरत् शरदृतुः । तस्या निशा रात्रयः तदुदितचन्द्रिकाभिः शरन्निशाचन्द्रिकाभिः । चन्दनद्रुम इव सङ्गतः सम्बद्धः । उपमालङ्कारः । चन्दनद्रुमकृष्णयोरुपमानोपमेयभावाभ्युपगमात् । लोचनैश्चन्द्रिकाभिरिति न लिङ्गव्यत्यय उपमानदोषः । शब्दालङ्कारः स्वयमूह्यः ।। २ ।।

**सस्नुषास्फुरणसम्मदोच्चलत्कन्धरं प्रणतिमत्कृताशिषम् ।**
**प्रीतिमान्पितरमभ्यपूजयन्मातरं च रचिताञ्जलिर्वरः ।। ३ ।।**

**स इति** ।। रचितः अञ्जलिः संहतौ पाणी येन स तथा । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । 'वरः कन्यापतिः' इति धनञ्जयः । सः कृष्णः प्रीतिमान् । स्नुषायां वध्वाम् । स्फुरणं प्रथमदर्शनं तस्य सम्मदः प्रमोदः तेन उच्चलन्ती कन्धरा ग्रीवा यस्मिन्कर्मणि तद्यथा तथा । सन्तोषातिशयेन कम्पमानं शिलो बिभ्रतमिति तात्पर्यम् । 'स्नुषा जनी पुत्रवधूः स्यात्' इति हलायुधः । 'कन्धरो वारिवाहे स्याद्ग्रीवायां कन्धरा मता' इति विश्वः । 'अथ शिरोधिः कन्धरेत्यपि' इत्यमरश्च । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनत्वं च वाच्यम् । प्रणतिमत्सु कृतनमस्कारेषु । कृता आशीर्येन यया वा तादृशम् । कृताशिषं पितरं मातरं च वसुदेवं देवकीं च ।

उच्चलत्कन्धरमिति पितृविशेषणं वा । अभ्यपूजयत् । पूजायां लङ् । चुरादि ॥ ३ ॥

**तावतीं न मुदमाददे पुरा पुत्रवत्यपि पतत्रिकेतुना ।**
**यावतीं नृपसुताकराम्बुजद्वन्द्ववन्दितपदा तु देवकी ॥ ४ ॥**

**तावतीमिति** ॥ पतत्री गरुडः केतुश्चिह्नं यस्य सः । पतत्रिकेतुः गरुडध्वजः । तेन श्रीकृष्णेन । इत्थम्भूतलक्षणे तृतीया । पुत्रवत्यपि देवकी । देवकशब्दस्य तदपत्ये लक्षणया वृत्तौ 'पुंयोगात्' इति ङीष् । न हि तत्र (अपत्यलक्षणयेव?) दाम्पत्यलक्षणमेव पुंयोगः किन्तु जन्यत्वाद्यपीति हरदत्तादयः । अत एव 'प्राक्कैकयीतो भरतस्ततोऽभूत्' इति भट्टिः । पुरा उद्वाहात्पूर्वम् । तावतीं सा परिमाणमस्यास्तावती ताम् । 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुपि 'आ सर्वनाम्नः' इत्यात्वे 'उगितश्च' इति ङीप् । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' । मुदं हर्षम् । नाददे । 'डुदाञ् दाने' लिट् । न प्राप्तवतीत्यर्थः । यावतीं या परिमाणमस्या इति यावती ताम् । पूर्ववत्प्रक्रिया । मुदम् । नृपसुतायाः रुक्मिण्याः । करावम्बुजे इवेत्युपमितसमासः । तयोर्द्वन्द्वं युग्मम् । द्वन्द्वं रहस्येति प्रयोगात्साधुः । 'द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः' । इति अमरव्याख्याने मेदिनीत्युक्तम् । तेन वन्दिते पदे पादौ यस्यास्सा नृपसुता कराम्बुजद्वन्द्ववन्दितपदा । तुशब्दो विशेषद्योतनार्थः । आददे स्वीकृतवती । कराम्बुजेत्युपमालङ्कारः ॥ ४ ॥

**युग्मके चरणयोः प्रणामिनीं रुक्मिणीं प्रति कुटुम्बिनीजनः ।**
**वर्तमानविभवानुवादवान्वेत्ति नैव हि ततोऽधिकं पदम् ॥ ५ ॥**

**युग्मक इति** ।। कुटुम्बिनीजनः कुटुम्बं पोष्यवर्गोऽस्या अस्तीति कुटुम्बिनी सा चासौ जनश्च लोकश्च । स तथा । 'कुटुम्बं पोष्यवर्गे च' इत्यमरमाला । 'दाराः स्यात्तु कुटुम्बिनी' इत्यमरः । 'जनो लोके महर्लोकात्परलोके च पामरे' इति विश्वः । देवकीचरणयोः पादयोः युग्मके । युग्मशब्दात् अज्ञाने कन् । युग्मे प्रणामिनीं नमस्कारवतीम् । रुक्मिणीं प्रति । प्रतेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । वर्तमानो यो विभवस्सम्पत्तिस्तस्या अनुवादवान् । 'विभवौ हर्षसम्पत्ती' इति कविदर्पणः । विद्यमानानामखण्डमण्डलाधिपतिमहिषीत्वादिविभवानां केवलमनुवाद एव न पुनराशीर्वचनेन विधेयं किमप्यस्ति । महालक्ष्मीत्वेन सांसिद्धिकसकलविभवत्वात् । वर्तमानसम्पत्त्यनुवादवानेवासीदिति भावः । कुतः हि यतः ततः नित्यसिद्धविभवात् अधिकम् । पदं स्थानम् । नैव वेत्ति न जानाति । अत्र विद्यमानविभवमात्रानुवादस्य समर्थनीयस्य नैव वेत्तीत्यादिना समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।। ५ ।।

**योषितस्समुपगूहनोद्यता दूषिता मनसि तामसूयया ।**
**आलिलिङ्गुरपि जातयौवनाः को जहाति पुर आगतां श्रियम्**
**।। ६ ।।**

**योषित इति** ।। जातं यौवनं यासां तास्तथोक्तास्तरुण्यः । अत एव मनसि असूयया गुणेषु दोषत्वारोपरूपया । 'असूया तु दोषारोपो गुणेष्वपि' इत्यमरः । दूषिता अपि समुपगूहने संश्लेषे । 'संश्लेष उपगूहनम्' इत्यमरः । उद्यता उद्युक्ताः । योषितः स्त्रियः । 'स्त्री योषिदबला योषा' इत्यमरः । तां रुक्मिणीम् । आलिलिङ्गुः । लिगि गतौ लिट् । आश्लिष्टवत्यः । तथाहि । पुरः पुरतः । 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः ।

आगतां सम्प्राप्ताम् । श्रियं सम्पत्तिम् । 'सम्पत्तिः श्रीश्च लक्ष्मीश्च' इत्यमरः । को जनः जहाति । ओहाक् त्यागे लट् । अत्र स्त्रिय आलिलिङ्गुरिति विशेषमभिधाय को जहातीति सामान्योक्त्या अर्थान्तरन्यासालङ्कारः 'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके' इत्युक्तलक्षणविभावनालङ्कारं प्रत्यङ्गीत्युभयोरङ्गाङ्गिभावेन सङ्करः ॥ ६ ॥

**आप्तयौवनगुणां वपुःश्रिया हारिणीमुरुघनस्तनोरसाम् ।**
**मानसं पुररिपोरवेक्ष्य तामैहिकेष्वपि रसेष्ववातरत् ॥ ७ ॥**

**आप्तयौवनगुणामिति** ॥ मुररिपोः मुरारेः श्रीकृष्णस्य । मानसं चित्तम् । वपुश्श्रिया देहशोभया । इत्थम्भूतलक्षणे तृतीया । आप्ताः यौवनस्य गुणा रूपादयो यया सप्ता ताम् । मुख्यौ स्तनौ स्तनोरसे । घने सान्द्रे (कठिने) च स्तनोरसे च घनस्तनोरसे उरुणी विपुले घनस्तनोरसे यस्यास्सा ताम् । उरुघनस्तनोरसाम् । 'वड्रोरुविपुलम्' इत्यमरः । 'घनस्तु संहते सान्द्रे सङ्घाते कठिनेऽपि च' इति शब्दरत्नाकरः । 'अग्राख्यायामुरसः' इति उरसष्टच् । 'उरो वक्षसि मुख्ये च' इति केशवः । अत एव हारिणीं मनोहराम् । 'वल्गु हारि मनोहारि' इत्यमरशेषः । तां रुक्मिणीमवेक्ष्य ऐहिकेषु इहशब्दाद्भावार्थे अध्यात्मादित्वात् ठञ् । अपिर्गर्हायाम् । गर्हितेष्वैहिकेषु । रसेषु आस्वादनेषु । लोकदृष्ट्या निन्दितेषु वैषयिकभोगेष्वित्यर्थः । अवातरत् । अवपूर्वात् 'तॄ प्लवनतरणयोः' इत्यतो लङ् । अवतरणमकरोत् । अत्र उरुघनस्तनोरसां हारिणीमिति विशेषणद्वयस्य साभिप्रायत्वात्परिकरालङ्कारः ॥ ७ ॥

**सेवनावसरविन्मधुस्तदा द्वारकागतमुपाचरद्धरम् ।**
**आत्मचिह्नकुसुमैरुपायनं हारयन्नुपवनाद्रिकिङ्करैः ॥ ८ ॥**

**सेवनेति** ।। तदा भगवतो वैषयिकरसोपभोगेच्छाकाले । सेवनस्य सेवायाः अवसरः प्रस्तावः तं वेत्तीति वित् । विदेः 'सत्सूद्विष' इत्यादिना क्विप् । 'प्रस्तावः स्यादवसरः' इत्यमरः । मधुर्वसन्तः । 'वसन्ते तु मधुः पुष्पसमयः सुरभिः स्त्रियाम्' इति शब्दरत्नाकरः । उपवनानामद्रयो द्रुमास्ते च ते किङ्करास्तैः । 'अद्रिश्शैलद्रुमादिषु' इति विश्वः । किंयत्तद्बहुषु कृञोऽज्विधानमिति वक्तव्यत्वात्किंशब्दोपपदे करोतेरच्प्रत्ययः । आत्मनः स्वस्य । चिह्नालि लक्षणानि कुसुमानि तैः । करणे तृतीया । उपायनमुपहारम् । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । हारयन् धारयन् । 'हृक्रोरन्यतरस्याम्' इति हरतेरणौ कर्तुः कर्मसञ्ज्ञायां विकल्पितत्वात् कर्मत्वाभावः । द्वारकामागतं प्राप्तम् । 'द्वितीया श्रिता' इत्यादिना समासः । वरं कन्यापतिम् उत्तमं वा । श्रीकृष्णमुपाचरत् । असेवतेत्यर्थः । उपवनाद्रय एव किङ्करा इति रूपकालङ्कारः ।। ८ ।।

**सान्द्रपल्लवनिवारितातपे पुष्पिते समदषट्पदारुते ।**
**आर्तवीमनुबभूव स श्रियं भूयसीमुपवने प्रियानुगः ।।९।।**

**सान्द्रपल्लवेति** ।। सः श्रीकृष्णः । सान्द्रा निरन्तराः पल्लवाः किसलयानि तैर्निवारितः आतपो यस्मिंस्तत्तथा तस्मिन् । पुष्पिते पुष्पाण्यस्य सञ्जातानि पुष्पितम् । 'तदस्य सञ्जातम्' इति इतच् प्रत्ययः तस्मिन् । मदसहिताः षट्पदाः । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । तेषाम् आरुतो ध्वनिस्तेन मदषट्पदारुतेन सहितं समदषट्पदारुतं तस्मिन् । समदं षट्पदारुतं यस्मिन्निति वा । उपवने प्रिया अनुगा अनुचरी यस्य सः प्रियानुगः । 'सहायोऽनुचरोऽनुगः' इति रत्नाकरः । भूयसीं बहुलाम् । आर्तवीम् ऋतुसम्बन्धिनीम् । 'समयस्तदस्य प्राप्तम्'

इत्यधिकारे 'ऋतोऽण्' इति सूत्रादृतुरस्याः प्राप्त इत्यर्थे ऋतुशब्दादण्प्रत्ययो वा । श्रियं सम्पत्तिम् । अनुबभूव । अनुपूर्वाद्भवतेर्लिट् । अनुभूतवान् ॥ ९ ॥

**तां निशासु शशिमण्डलाननां व्रीडितां रहसि नूत्नसङ्गमात् ।**
**रुक्मिणीं भुजगभोगकोमले प्राप चारुशयने यशोनिधिः ॥ १० ॥**

**तामिति** ॥ यशश्श्रीरिह ग्राह्या तस्याः कान्तेर्निधिर्यशोनिधिर्भगवान् । शृङ्गारपूर्ण इति यावत् । 'यशश्श्रीः' इति केशवः । शशिनो मण्डलमिवाननं यस्यास्सा तथा ताम् । 'न क्रोडादिबह्वचः' इति स्वाङ्गवाचिनोऽप्याननशब्दान्न ङीष् । नूत्नसङ्गमात् नूत्नो नूतनश्चासौ सङ्गमश्च तस्मात् । नवशब्दस्य 'नवस्य नूआदेशः त्नप्तनप्खाश्च प्रत्यया वक्तव्याः' इति नूआदेशस्त्न(स्तन?)प्प्रत्ययश्च । व्रीडितां सञ्जातलज्जाम् । रुक्मिणीं निशासु रात्रिषु रहस्येकान्ते भुजगभोगकोमले भुजगस्य सर्पस्य भोगः काय इव कोमलं मृदुलं तस्मिन् । 'भोगस्सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । चारु मनोहरं च तच्छयनं तस्मिन् प्राप । आप्नोतेर्लिट् । पूर्वसर्गे त्रपयातुरमानसेत्यत्र रुक्मिण्या लज्जाभाव उक्तः सम्बन्धसामान्यमात्रेण । अत्र तु परिष्वङ्गादिसङ्गमोऽभिसंहित इति न विरोधः ॥१०॥

**सा दृढप्रणयबन्धनक्रमप्रेरितेन मनसाऽनुवर्तिनी ।**
**पत्युरत्यगमयद्दिनक्षपाः कुर्वती रतिरसान्दिने दिने ॥११॥**

**सेति** ॥ सा रुक्मिणी । दृढो गाढश्चासौ प्रणयस्सौहार्दं तस्य बन्धने करणे यः क्रमः प्रत्यहमभिवृद्धपरिपाटी तेन प्रेरितम् । 'क्रमः शक्त्यांघ्रि-

विक्षेपपरिपाटीषु कथ्यते' इति कविदर्पणः । अनुवर्तितुं शीलमस्या इति णिनिप्रत्यये नान्तत्वान्ङीष् । अनुवर्तनस्वभावा । यद्यपि 'सुप्यजातौ' इत्यत्र सुपीत्यनुवृत्तौ पुनस्सुब्ग्रहणं उपसर्गनिवृत्त्यर्थमित्युक्तं तथापि तत्सूत्रभाष्ये उदासारिण्या इत्याद्युदाहरणात्सुब्मात्रेऽपि यथा स्यादिति भाष्यवचनात् स उपसर्गोपपदेऽपि भवितेति दिक् । श्रीकृष्णस्य दिने दिने । रतिरसान् स्नेहान् । 'रतिः कन्दर्पभार्यायां सुरतोत्कण्ठयोः' इति केशवः । कुर्वती दिनानि क्षपा रात्रयश्च ताः अहोरात्रान् अत्यगमयत् । 'गम्लृ गतौ' अत्यक्रमयत् अत्रोत्तरार्धवाक्यार्थस्य मनोऽनुवर्तिनीति समर्थनात्काव्य-लिङ्गमलङ्कारः ।। ११ ।।

**नैव तस्य सुरतस्य वर्णना शक्यते भुवि जनस्य मादृशः ।**
**येन दग्धवपुषोऽपि नूतनं रूपमाविरभवन्मनोभुवः ।।१२।।**

**नैवेति** ।। भुवि विद्यमानस्य मादृशः । युष्मद्युपपदे दृशेः 'त्यदादिषु दृश' इति क्विन्प्रत्यये 'प्रत्ययोत्तरपदयोश्च' इति युष्मदो मादेशे 'आसर्वनाम्न' इत्यात्वे मादृगिति रूपं तादृशः जनस्य । तस्य श्रीकृष्णरुक्मिणी-सम्बन्धिनः सुरतस्य । वर्णना निरूपणम् । नैव शक्यते नैव सहते । शकविभाषितो मर्षण इति दिवादिषु पठितस्य शकेः कर्तरि श्यन्नन्तस्य रूपम् । तद्वर्णना मम दुष्करेति यावत् । तेन कर्तरि तृतीया स्यादिति चोद्यं निरस्तम् । येन सुरतेन दग्धवपुषोऽपि मनोभुवो मन्मथस्य । नूतनं रूपं वपुः । 'स्वभावाकृतिसौन्दर्यवपुष्षु रूपम्' इति केशवः । आविरभवत् प्रकाशितमभवत् । अत्र पूर्वार्धोक्तार्थस्य उत्तरार्धेन समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । केचित्तु जनेन मादृशा' इति पठित्वा शक्यत इति 'शक्लृ शक्तौ' इत्यस्य कर्मणि यकि रूपम् । कर्तुमिति शेष इत्यप्याहुः ।। १२ ।।

**साथ सारसविकासिलोचना सारभूतमसुरासुहारिणाम् ।**
**सुन्दरी सुतमसूयतासतां सूदनस्य सुदतीसुदुर्लभम् ।।१३।।**

**साथेति** ।। अथ श्रीकृष्णेन सह रत्यनन्तरम् । सारसे सरसीरुहे इव विकासिनी विकसनशीले लोचने नयने यस्यास्सा तथा । सा असुराणामसवः तान् हर्तुं शीलमेषामिति असुरासुहारिणाम् । 'असवः प्राणाः' इत्यमरः । अनिरुद्धबृहस्पत्यादिदेवानां मध्ये सारभूतम् उत्कृष्टत्वं प्राप्तम् । 'सुन्दरोत्कृष्टयोस्सारः' इति केशवः । भूतं 'प्राप्तवृत्तयोरभिधेयवत्' इति विश्वः । सारत्वं प्राप्तं सारभूतमित्यर्थः । प्रमाणभूत आचार्य इति भाष्यप्रयोगः । एवमेव व्याख्यातः । उक्तकोशात्सुन्दरमिति वा । असताम् असज्जनानाम् । सूदनस्य 'षूद रक्षण' इत्यतो नन्द्यादित्वात्कर्तरि ल्युः । सुन्दरी । सुदतीनां सुदुर्लभम् अत्यन्तकृच्छ्रेण लभ्यम् । 'वयसि दन्तस्य दतृ' इति सुपूर्वस्य दन्तशब्दस्य तारुण्यार्थे विवक्षिते दत्रादेशः । 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल्प्रत्ययः । सुदती सुन्दरीति विशेषणविशेष्यभावो वा । ननु कथं सुदुर्लभमिति । यावता 'नसुदुर्भ्यां केवलाभ्यां' इति केवलाभ्यामेव सुदुर्भ्यां परस्य लभेर्नुमागमः प्रतिषिद्धः । नासौ दुरुपसर्गः । केवलः । उच्यते खादयः उपसर्गसंज्ञाः कर्मप्रवचनीयसंज्ञाश्च । यदाह 'उपसर्गाः क्रियायोगे' इति उपसर्गसंज्ञा । स्वतीपूजायामिति कर्मप्रवचनीयसंज्ञा उपसर्गसंज्ञाया बाधिकेति वैयाकरणाः । तथा च यदा स्वती कर्मप्रवचनीयसंज्ञौ तदा नुमागमप्रतिषेधो भविष्यतीति सिद्धान्तकौमुदीकृत् इति । सुतम् असूयत । षूङ् प्राणिप्रसवे लङ् । अजनयदित्यर्थः । अत्र सुदती सुदुर्लभसुतप्रसवः समर्थनीयः । असुरसूदनसुन्दरीति समर्थ्यत इति काव्यलिङ्गमलङ्कारः । सकारस्यासकृदावृत्तेर्वृत्त्यनुप्रासश्शब्दालङ्कारश्चेत्युभयोस्संसृष्टिः ।। १३ ।।

**जात एष हृदयानि केवलं प्राणिनामहरदित्यविस्मयः ।**
**प्रागपि स्ववशमानयज्जगत्का कथा सति शरीरसङ्ग्रहे ।।१४।।**

**जात इति** ।। एष कुमारः जातः केवलं प्रादुर्भूत एव । 'केवलम् ।। ज्ञाने तु पूर्णे क्लीबं स्यात्केचिदन्यथाधार' इति केशवः । 'निर्णीते केवलमिति' इत्यमरव्याख्याने इतिशब्देन रूपान्तरेण निराकरणात् अव्ययत्वमिति सुबोधिनीकार इत्युक्तम् । प्राणिनां हृदयानि मनांसि हारयन् । सौन्दर्यातिशयाज्जनमनस्तत्रैव लग्नमिति भावः । इति अविस्मयः विस्मयाभावः अनाश्चर्यः । अर्थाभावेऽव्ययीभावेन सह नञ्तत्पुरुषो विकल्प्यते । 'रक्षोहागमलध्वसन्देहाः प्रयोजनमद्रुतायामसंहितम्' इति भाष्यकारप्रयोगादिति वैयाकरणाः । यः प्रागपि अनङ्गतादशायामपि । जगत् स्ववशं स्वाधीनमानयत् । तस्य शरीरसङ्ग्रहे शरीरप्राप्तौ का कथा किं वक्तव्यम् । अत्र जगदेव जितवतः जगदन्तःपातिप्राणिहृदयजयोऽस्तीति किमु वक्तव्यमिति काव्यार्थापत्तिरलङ्कारः । 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते । स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम्' इति सोदाहरणं तल्लक्षणाभिधानात् ।। १४ ।।

**सप्तमेऽत दिवसे कुमारकं तं जहार कुहकश्च कश्चन ।**
**नन्दनद्रुमनवाङ्कुरं यथा मारुतो भुवनलोपलम्पटः ।। १५ ।।**

**सप्तम इति** ।। अथ जननानन्तरम् । कश्चन कोऽपि । कुहकः कापटीकः शठः । 'कापटीकोऽनृजुः कुहकः' इति शब्दरत्नाकरः । सप्तमे दिवसे सति जननापेक्षयेति शेषः । तं च कुमारकम् । अनुकम्पायां कन् । भुवनलोपलम्पटः भुवनं जगत्तस्य लोपो नाशः तस्मिन् लम्पटः

अभिलाषुकः । 'विष्टपं भुवनं जगत्' इत्यमरः । 'तृष्णुर्लम्पट ईप्सुः' इति शब्दरत्नाकरः । मारुतो वायुः । नन्दनस्योद्यानस्य यो द्रुमस्तस्य यो नवाङ्कुरः तं यथा तमिव जहार । हृञ् हरणे लिट् । अपहृतवान् । उपमालङ्कारः ।। १५ ।।

**बिभ्रदेष मधुसूदनात्मजं स्वायुषोऽपचयकारणं जडः ।**
**उत्पपात कृतधीर्निघातने सिंहपोतमिव काननद्विपः ।।१६।।**

**बिभ्रदिति** ।। 'जडोऽज्ञे' इत्यमरः । अत एव स्वायुषः अपचयस्यापहारस्य कारणम् । 'अपहारस्त्वपचयः' इत्यमरः । मधुनामकदैत्यस्य सूदनो हन्ता मधुसूदनस्तस्यात्मजं पुत्रं बिभ्रत् वहन् । निघातने मारणे । 'मारणं प्रतिघातनम्' इत्यमरः । कृता विहिता धीर्यस्य स तथा । 'कृतं युगेऽपि पर्याप्ते विहिते हिंसिते पले' इति विश्वः । स सन् कुहकः शम्बरः । काननद्विपो वनगजः । सिंहपोतः सिंहशिशुस्तमिव । 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः । उत्पपात 'पत्लृ गतौ' लिट् । उज्जगाम । अत्राप्युपमालङ्कारः । स्वायुषोऽपचयकारणं बिभ्रदित्येतज्जड इत्यनेन समर्थ्यत इति पदार्थहेतुकं काव्यलिङ्गमलङ्कार इत्यप्याहुः ।। १६ ।।

**दैत्यबाहुयुगमण्डलार्पितं बालकस्य शुशुभे कलेवरम् ।**
**प्रावृडादिबहुलाम्बुदावलीमध्यलग्नमिव तारकं दिवि ।।१७।।**

**दैत्याबाहुयुगेति** ।। दिवि प्रावृषः आदिः प्रावृडादिः तत्सम्बन्धिनी । बहुला कृष्णा प्रभूता वा अम्बुदानां मेघानामावलिः पङ्क्तिस्तस्या मध्यं तस्मिन् लग्नं संसक्तम् । 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । 'बहुलस्त्रिषु तु कृष्णे प्रभूते च' इति केशवः । तारकं नक्षत्रमिव । दैत्यस्य

शम्बरस्य बाहुयुगस्य मण्डले चक्रवाले । अर्पितं प्रापितं बालकस्य कलेवरम् । 'अथ कलेवरम् । गात्रं वपुस्संहननं शरीरम्' इत्यमरः । शुशुभे 'शुभ शुम्भ शोभार्थे' लिट् । उपमालङ्कारः ।। १७ ।।

**दानवः करकपेशलाकृतिं[1] निन्दयञ्जलनिधौ न्यपातयत् ।**
**तं निशीथ इव शीतदीधितिं पूर्वपक्षभवमष्टमीमितम् ।।१८।।**

**दानव इति** ।। दानवः शम्बरः । निशीथः अर्धरात्रः । पूर्वपक्षभवं शुक्लपक्षसमुद्भवम् । अष्टमीमितं अष्टम्या मितः अवच्छिन्नस्तम् । शीतदीधितिं चन्द्रमिव । दीधितिशब्दो वैदिकोऽपि कविभिः प्रयुज्यते । करकः वर्षोपल इव पेशला चारुराकृतिर्यस्य स करकपेशलाकृतिः तम् । पेलवाकृतिमिति पाठे पेलवा तनुराकृतिर्यस्य तमित्यर्थः । 'वर्षोपलस्तु करकः' इति 'चारौ दक्षे च पेशलः' इति 'पेलवं विरलं तनु' इति चामरः । निन्दयन् तत्करोतिण्यन्ताच्छतृत्ययः । कुत्सयन् । जलनिधौ समुद्रे । न्यपातयत् । हेतुमण्ण्यन्ताल्लङ् । निपातितवान् । अर्धरात्रौ हि यथा शुक्लपक्षाष्टमीचन्द्रमम्बुधौ निपातयेत् तथा दैत्योऽपि शिशुमपातयदित्युपमालङ्कारः ।। १८ ।।

**शम्बरेण कुटिलान्तरात्मना पातितं कुवलयामलच्छविम् ।**
**वीर्यसारमुदधिर्मुदा हरेराग्रहेण जगृहे भुजिष्यवत् ।। १९ ।।**

**शम्बरेणेति** ।। उदधिः समुद्रः । कुटिलो वक्रः अन्तरात्मा अन्तरिन्द्रियं मनः । 'आत्मेन्द्रियेऽनिले जीवे' इत्यमरः । यस्य स तथा तेन । शम्बरेण कर्त्रा । आग्रहेण स्पर्धया 'आग्रहः स्यात्स्वीकरणे विरोधस्पर्धयो-

---

१. 'करकपेलवाकृतिम्' इति पाठान्तरम् ।

रपि' इति कविदर्पणः करणे तृतीया । पातितम् । कुवलयामलच्छविम् इन्दीवरस्वच्छकान्तिम् । हरेर्वीर्यसारं वीर्यस्यांशभूतं शिशुं भुजिष्यवत् परिचारक इव । 'भुजिष्यस्तु द्वयोर्दासे' इति केशवः । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । जगृहे । 'ग्रह उपादाने' लिट् । गृहीतवान् । आर्थी पूर्णोपमालङ्कारः ।। १९ ।।

**तत्र मीनजठरं गतोऽम्बुधौ मीनकेतुरुदभासतौजसा ।**
**स्थूलसूक्ष्मवपुषोरिवान्तरश्चिद्गुणेन पुरुषः स्वयम्प्रभः ।।२०।।**

**तत्रेति** ।। तत्राम्बुधौ । मीनस्य । जठरमुदरं गतो जठरान्तर्वर्ती । मीनकेतुर्मन्मथः । प्रद्युम्नः । स्वयमात्मना सिद्धा प्रभा यस्य सः स्वयम्प्रभः । चिद्गुणेन ज्ञानरूपगुणेन स्थूलसूक्ष्मे च ते वपुषी च तयोः स्थूलदेहे सूक्ष्मे लिङ्गदेहे च अन्तरे मध्ये भवः आन्तरः स्थूले सूक्ष्मे च वपुषि सन्नपि तत्कृतदोषास्पृष्ट इत्यर्थः । पुरुष इव परमात्मेव । 'पुरुषः परमात्मनि । नरे धातरि पुन्नागे जीवेऽपि' इति कविदर्पणः । ओजसा बलेन । 'ओजो दीप्तौ बले' इत्यमरः । उदभासत 'उत्पूर्वाद्भासृ दीप्तौ' इत्यतो लङ् । अराजत । उपमालङ्कारः ।। २० ।।

**प्राभृतार्थमुपनीत आदरान्मत्स्य एष किल मत्स्यबन्धिभिः ।**
**शम्बरस्य सदनं विधेर्वशादर्भकोऽयमधितिष्ठति प्रभोः ।।२१।।**

**प्राभृतार्थमिति** ।। यं मत्स्यम् अर्भको बालोऽधितिष्ठति । 'अधिशीङ्-स्थासां कर्म' इत्याधारस्य कर्मत्वम् । एष मत्स्यः मत्स्यान्बन्धितुं शील-मेषामस्तीति मत्स्यबन्धिनो धीवराः इति व्याख्यानमयुक्तम् । 'सुप्यजातौ' इत्युक्तेर्मत्स्यशब्दस्य जातिवाचित्वात् बन्धेर्भावे घञ् । बन्धो बन्धनं

मत्स्यानां बन्धो मत्स्यबन्धः स एषामस्तीति अत इनिः । बध्यते अनेन वा गुणेनेति बन्धो जालश्चेति करणे घञ् । स एषामस्तीति बन्धिनः दाशाः तैः । आदरात् हर्षादिना कर्मसु त्वरणादित्यमरव्याख्यानम् । 'संवेग आदरः' इत्यमरशेषश्च । 'आदरानादरयोस्सदसती' इत्यत्र प्रीतिः सम्भ्रम आदर इति वृत्तिश्च । प्रभोश्शम्बरस्य । सदनं गृहम् । विधेर्दैवस्य वशादिच्छातः । 'दैवं दिष्टं भागधेयम्' इत्यमरः । 'वशमायत्ततायां स्याद्वशमिच्छाप्रभुत्वयोः' इति विश्वः । प्राभृतार्थम् 'उपग्राह्यं प्राभृतं तदुपहारम्' इति शब्दरत्नाकरः । प्राभृतमुपायनम् अर्थः प्रयोजनं यस्मिन्कर्मणि तद्यथा भवति तथेति क्रियाविशेषणम् । उपनीतः किल । 'जघान कंसं किल वासुदेवः' इत्यादाविव वार्तायां किलशब्दः ।।२१।।

**तस्य या सहचरीति कथ्यते मायिनी कुसृतिकल्पनारता ।**
**साऽऽददे प्रणयदत्तमङ्गना लोकविस्मयकरं महाझषम् ।।२२।।**

**तस्येति** ।। तस्य शम्बरस्य कुसृतिः शाठ्यं कैतवं तस्या निर्माणे रता आसक्ता । 'कुसृतिर्निकृतिः शाठ्यम्' इत्यमरः । अत एव मायिनी मायावती । व्रीह्यादित्वादिनिः । सहचरतीति सहचरी पत्नी । 'पत्नी सहचरी समे' इत्यमरशेषः । सा अङ्गना प्रणयेन प्रेम्णा दत्तम् । दाशैरिति शेषः । लोकस्य विस्मयकरम् । करोतेः 'कृञोहेतु' इत्यादिना टः । महाझषं महान्तं मत्स्यम् । 'आस्महतः' इति महच्छब्दस्यात्वम् । आददे 'डुदाञ् दाने' लिट् स्वीकृतवती । स्वप्रयोजनमस्तीति सूचयितुमात्मनेपदम् । मायावतीति वक्तव्ये मायिनीति वदन् 'तस्या महिष्या मायिन्याः दानवः कालचोदितः' इति हरिवंशकथां स्मारयति । कुसृतिकल्पनारतेति वदन् 'पिधाय तां निजां तनुं जगाम चान्ययासुरम् ।। गृहेऽपि

सासुरे स्थिता निजस्वरूपतोऽसुरम् ।। न गच्छति स्म सा पतिं निजम् समीक्ष्य हर्षिता' । इति भगवत्पादाभिप्रेतां कथां च । अत्र कुसृति-कल्पनारता मायिनीति हेतोर्हेतुमता सह वर्णनात् हेतुरलङ्कारः ।।२२।।

**छेदिते जलचरे यदृच्छया भास्करोदय इवाम्बुजन्मनि ।**
**प्रत्यदृश्यत पुरस्य कान्तया भृङ्गराज इव भर्तृकामया ।।२३।।**

**छेदित इति** ।। यदृच्छया स्वैरितया । 'यदृच्छा स्वैरिता' इत्यमरः । स्वेच्छयैवेति यावत् । जलचरे मीने छेदिते विदारिते सति । भास्करोदये । 'दिवाविभा' इत्यादिना करोतेष्टः । कस्कादित्वात्सत्वम् । भास्करस्सूर्यः तस्योदये । अम्बुजन्मनि कमले । भृङ्गाणां भ्रमराणां राजा भृङ्गराजः स इव प्रद्युम्नः । भर्तृकामया भर्तारं पतिं कामयतीति भर्तृकामा । 'शीलिकामिभिक्षाचरिभ्यो णः' इति वक्तव्यत्वात्कामयतेर्णप्रत्ययः इत्यतः कर्मण्यरोऽप्रसक्तेः न ङीप् । कान्तया स्त्रिया । पुरः पुरतः । प्रत्यदृश्यत दृशेः कर्मणि लङ् दृष्टः उपमालङ्कारः ।। २३ ।।

**प्रत्यहं रहसि तं कुमारकं निर्व्यलीकमचिरादवर्धयत् ।**
**त्रासिनी दिवकृदोजसोऽसुराच्छुक्लपक्ष इव यामिनी विधुम्**
**।। २४ ।।**

**प्रत्यहमिति** ।। दिनकृदोजसः दिनकृतः सूर्यस्य ओजो दीप्तिरिवौजो यस्य स तथा तस्मात् । 'दीप्तौ प्रकाशेऽवष्टम्भे स्यादोजोबलतोययोः' इति केशवः । शम्बरात् त्रासिनी भयवती 'त्रासो भये मणेर्दोषे' इति केशवः । त्रासोऽस्यास्तीति इनिः । शुक्लपक्षे यामिनी रात्रिः दिनकृतो दीप्तिरित्यस्य च व्याख्यानम् । विधुं चन्द्रमिव । प्रत्यहं अहन्यहनि । वीप्सायामव्ययी-

भावः । 'नपुंसकादन्यतरस्याम्' इत्यहृष्टच् । रहसि विजने देशे । 'अथ रहश्शम्बौ मैथुने विजने च तत् । अव्ययं च' इति केशवः । तं कुमारकम् अज्ञाते कप्रत्ययः । इतराज्ञातं कुमारं निर्व्यलीकं निर्लज्जमिति क्रिया-विशेषणम् । 'व्यलीकनिश्वासमिवोत्ससर्ज' इति कुमारसम्भवे व्यलीकं लज्जेति व्याख्याय तत्सम्मतित्वेन दक्षिणावर्तनाथः । 'व्रीडार्थेऽपि व्यलीकम् स्यात्' इत्यमरसिंहाभिधानं पपाठेति हरिदीक्षितः व्याचख्यौ । 'पीडार्थेऽपि व्यलीकं स्यात्' इत्यमरपाठे निर्व्यलीकं निष्पीडं निर्बाधमिति प्रकृतं व्याख्येयम् । अचिरादविलम्बेनावर्धयत् । 'वृधु वृद्धौ' णिच् लङ् । 'रसायनैः कुमारकं व्यवर्धययद्रतिः पतिम् । स पूर्णयौवनोऽभवच्चतुर्भिरेव वत्सरैः' । इति भगवत्पादोक्तेः अचिरादवर्धयदित्यक्तम् । उपमालङ्कारः ।। २४ ।।

**लब्धमध्यमदशाकृशाकृतेस्तस्य बाल्यमभवन्निवर्तितम् ।**
**तत्त्वबोधवितुषीकृतात्मनः कर्मवृन्दमिव नन्दतः सतः**
**।। २५ ।।**

**लब्ध इति** ।। लब्धया मध्यमदशया यौवनावस्थया अकृशा पुष्टा आकृतिराकारो यस्य स तथा तस्य प्रद्युम्नस्य तत्त्वबोधेन वितुषीकृतः आत्मा जीवस्वभावो यस्य स तथा तस्य । नन्दतः आनन्दं प्राप्नुवतः सतः सज्जनस्य कर्मवृन्दमिव कर्मणां निवहमिव । यदाह सूत्रकारः ।। 'ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ' ।। इति । बाल्यं निवर्तितं निवृत्त्युन्मुखमिति यावत् । अभवत् । बाल्यं निवृत्तमासी-दिति भावः । 'कृश तनूकरण' इति धातोः क्तप्रत्यये फुल्लक्षीबकृशोल्लाघाः' इति क्तप्रत्ययतकारलोपो निपातितः । 'तुषस्तु पुंसि धान्यानां त्वचि

तत्सदृशेऽपि च' इति केशवाभिधानादत्र तुषशब्देन हृदयग्रन्थिर्गृह्यते । 'आत्मार्कचन्द्रवाताग्निजीवेषु परमात्मनि' इति केशवः । 'स्त्रियां तु संहतिर्वृन्दं निकुरुम्बं कदम्बकम्' इत्यमरः । उपमालङ्कारः ।। २५ ।।

**सद्विचिन्त्यतनयं विचिन्त्य सा चेतसाऽतिचतुरावलोकिनी ।**
**कान्तिमन्तमनुरूपमात्मनो मन्दमन्दममनिष्ट तं रतिः ।।२६।।**

**सद्विचिन्त्येति** ।। अतिचतुरं यथा तथा अवलोकितुं शीलमस्या इति णिनिप्रत्यये अतिचतुरावलोकिनी । सा वर्धयन्ती रतिः । चेतसा मनसा । सद्भिस्सज्जनैर्विचिन्त्यस्य विशेषाकारेण चिन्तनीयस्य भगवतः तनयं विचिन्त्य । आत्मनोऽनुरूपं रूपस्य योग्यम् । तं कान्तं प्रियं मन्दं मन्दम् । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । क्रियाविशेषणं द्वितीयैकवचनान्तं चेदम् । अन्तः अन्तरङ्गे । अमनिष्ट 'मन अवबोधे' इत्यतो लुङि 'तनादिभ्यस्तथासोः' इति सिचो विकल्पेन लुगभावे रूपम् ।।२६।।

**प्रेरितौ प्रणयगन्धवाहिना रुक्मिणीसुतमुखाम्बुजे मुहुः ।**
**लोलतामतिशयेन जग्मतुर्नीलचारुदृगपाङ्गषट्पदौ ।। २७ ।।**

**प्रेरिताविति** ।। रतिरिति पदमिह अर्थवशात् षष्ठ्यन्तमनुवर्तते । गन्धं वोढुं शीलमस्येति णिनौ गन्धवाही वायुः प्रणयः प्रेमैव गन्धवाही तेन 'गन्धवाहिनामिमं न विषहे' इति प्रौढप्रयोगोऽप्यस्ति । रुक्मिण्याः सुतः प्रद्युम्नः तस्य मुखमेवाम्बुजं तस्मिन् । मुहुः पुनःपुनः । प्रेरितौ नीलौ चारू मनोहरौ । दृशोरपाङ्गौ अन्तौ कटाक्षावित्यर्थः । तावेव षट्पदौ भृङ्गौ अतिशयेन लोलतां चञ्चलतां सतृष्णतां वा जग्मतुः गतवन्तौ । 'गम्लृ गतौ' लिट् । रूपका(उपमा?)लङ्कारः ।। २७ ।।

**तामुवाच विनयान्नयान्वितो मातृबुद्धिबहुमानबन्धुरः ।**
**आत्मवक्त्रसरसावलोकनच्छेदकातरविकासिलोचनाम् ॥२८॥**

**तामिति** ॥ नयेन न्यायेनान्वितो युक्तः । 'नयो न्याये' इत्यमरः । मातृबुद्ध्या मातेयमिति बुद्ध्या उपजनितो यो बहुमानः सम्मानस्तेन बन्धुरः नम्रः । 'बन्धुरस्तु द्वयोर्हंसे त्रिषु सुन्दरनम्रयोः' इति केशवः । आत्मनः स्वस्य वक्त्रस्य सस्नेहमवलोकनं वीक्षणं तस्य यच्छेदनं कर्तनं तस्मात्कातरं भीरु । विकासि फुल्लं लोचनं यस्यास्सा तथोक्ता तां रतिम् । विनयात् । ल्यब्लोपनिमित्ता पञ्चमी । विनयमुपशममवलम्ब्य । 'विनयस्तूपशमे भवेत्' इति केशवः । उवाच 'वच परिभाषणे' लिट् यथासम्भवं शब्दालङ्कारः ॥ २८ ॥

**किन्निमित्तमिदमम्ब कथ्यतां मय्यरागविषयेऽपि रागवत् ।**
**दृश्यते तव कटाक्षपातनं भाति मे कुलिशपातनिष्ठुरम् ॥२९॥**

**किन्निमित्तमिति** ॥ हे अम्ब मातः इदं वक्ष्यमाणं किं निमित्तं यस्य तत्तथा केन निमित्तेन तव दुश्चरितमिदं कथ्यताम् । तदेवाह—अरागविषये रागविषयो न भवतीत्यरागविषयस्तस्मिन्नपि अनुरागाविषयेऽपि । 'रागोऽनुरागे मात्सर्ये रक्तवर्णे रजस्यपि' इति केशवः । मयि रागवत् अनुरागयुक्तम् । तव कटाक्षाणाम् अपाङ्गवीक्षणानां पातनं प्रापणम् । 'कटाक्षोऽपाङ्गदर्शनम्' इत्यमरः । दृश्यते तच्च कुलिशं वज्रस्तस्य पातो घात इव निष्ठुरं परुषम् । 'निष्ठुरं तु कठोरस्त्रिषु परुषाक्षेपवाच्यपि' इति केशवः । मे मम भाति । 'भा दीप्तौ' लट् ॥ २९ ॥

**किं न वेत्सि विहितं स्थितिक्रमं भेदितं च पतिपुत्रबन्धुषु ।**
**येन मां स्मितयुतेन चक्षुषा वीक्षसे स्वतनयं प्रियं यथा ॥ ३० ॥**

**किं न वेत्सीति** ॥ अम्बेति वर्तते । पतिपुत्रबन्धुषु विषये पत्यावेवं पुत्रे एवं बन्धुष्वेवं वर्तितव्यमिति विहितं शास्त्रेषु भेदितं नानाविभागेन भावितं च स्थितेरवस्थितेः परिपाटीम् । न वेत्सि किम् । 'विद ज्ञाने' इत्यतो लट् । न जानासि किमिति । येन स्थितिक्रमज्ञानेन स्मितं मन्दहसितं तेन युतेन चक्षुषा प्रियं यथा प्रियमिव । स्वतनयं स्वस्यास्तनयं तम् । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । वीक्षसे वीक्ष दर्शनाङ्कनयोरित्यतो लट् । पश्यसि ॥ ३० ॥

**नो ममाथ भवती घनस्तनी जन्मभूमिरनतीतयौवने ।**
**शक्नुयां कथमिवान्यथेदृशं वोढुमङ्गमुपगूहनोन्मुखम् ॥३१॥**

**नो ममाथेति** ॥ अतीतं न भवतीत्यनतीतं यौवनं तारुण्यं यस्यास्सा तथा तत्सम्बुद्धिः अनतीतयौवने घनस्तनी भवती जन्मभूमिर्जन्मस्थानं मातेत्यर्थः । अतो ममेति शेषः । अङ्गं नो ममाथ । 'मथे विलोडने' लिट् । न विलोडितवती । अन्यथा विलोडने । उपगूहने आलिङ्गने उन्मुखमभिमुखम् ईदृशं सम्प्राप्तयौवनम् । अङ्गम् अवयवं गात्रं वा । 'अङ्गं स्यादन्तिके गात्रे प्रतीकोपाययोरपि' इति कविदर्पणः । कथमेव केन वा प्रकारेण वोढुं शरीरस्य वहनायेत्यर्थः । शक्नुयां 'शक्लृ शक्तौ' लिङ् । समर्थो भवेयम् । लिङ्प्रत्ययश्चायं वर्तमानार्थः । 'विभाषा कथमि लिङ् च' इत्यनुशासनात् । घनस्तन्यपि त्वं ममाथेति त्वया न मम मनः

क्षुभितम् । अहं युवापि न त्वां युवतीमालिङ्गामीति भावः । अत्र पूर्वार्धोक्तार्थस्योत्तरार्धेन समर्थनात्काव्यलिङ्गमलङ्कारः ।। ३१ ।।

**इत्युपात्तवचनेन तेन सा शङ्किता मृदुमुदाहरद्गिरम् ।**
**स्तन्यपानमपहाय यद्बलादादरादधरमेव पास्यति[१] ।। ३२ ।।**

**इतीति** ।। इति पूर्वोक्तप्रकारेण उपात्तं गृहीतं वचनं यस्य स तथा तेन प्रद्युम्नेन । शङ्किता भीता वितर्किता वा । 'शङ्का वितर्कभययोः' इति केशवः । मृदुं कोमलां 'वोतो गुणवचनात्' इति वा ङीषभावः । 'कोमलं मृदुलं मृदु' इत्यमरः । गिरं वाचम् । उदाहरत् उक्तवतीति यावत् । यद्बलात् यत्कथाश्रवणबलात् स्तन्यस्य स्तने भवस्य क्षीरस्य । शरीरावयवाद्यत् । पानम् अपहाय विसृज्य । आदरात् हर्षादिना कर्मसु त्वरणात् । अधरं ओष्ठमेव पास्यति । प्रद्युम्न इति कविवचनम् । तादृशं वचनमुदाहरदिति पूर्वेण सम्बन्धः । पास्यसीति पाठे यद्बलादधरमेव पास्यसि तां वाचं वच्मीति गिरमुदाहरदिति व्याख्यानं द्रष्टव्यम् । केचित्तु पास्यसीति यदिति सामान्ये नपुंसकं तदेव सामान्यं गिरमुदाहरदिति विशेषरूपेण निर्दिष्टमिति व्याख्याय एवंविधव्याख्याने 'मेघोदरविनिर्मुक्ताः कल्हारसुखशीतलाः । शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः ।। इति रामायणप्रयोगव्याख्यानं शरणीकृतवन्तः । शब्दालङ्कारः स्फुटः ।। ३२ ।।

तामेव वाचमाह—

**मा कृथा बहुमतिं महामते पुत्रवन्मयि रसं कुरुष्व[२] च ।**
**अस्ति ते मदनुरागकारणं श्रूयतां मदन यन्निवेद्यते ।।३३।।**

---

१. 'पास्यसि' इति पाठान्तरम् । २. 'रसः क्रियया' इति पाठान्तरम् ।

**मा कृथा इति** ।। हे महामते रमण त्वं मयि पुत्रवत् पुत्रेण तुल्यं यथा तथा । बहुमतिं बहुमानम् । मा कृथाः न कुरुष्व । करोतेर्लुङ् । 'नमाङ्योगे' इत्यडभावः । किञ्च रसं रागं कुरुष्व । रसः क्रियेयेति पाठे रागस्त्वया कर्तव्य इति भावः । ते तव मयि अनुरागस्य कारणमस्ति । किं तत् । यन्निवेद्यते मया विज्ञाप्यते तच्छ्रूयताम् । 'श्रु श्रवण' इत्यतः कर्मणि लोट् । 'अकृत्सार्वधातुकयोः' इति दीर्घः । अत्र हेतुरलङ्कारः । शब्दालङ्कारः स्पष्ट इति तयोस्संसृष्टिः ।। ३३ ।।

**अश्वयन्विरहिणं च पश्चतां पश्चबाण इति यः प्रपञ्च्यते ।**
**सत्यमेव किल माधवप्रियः पूर्वजन्मनि जनानुरञ्जनः**
**।। ३४ ।।**

**अश्वयन्निति** ।। यो विरहिणं जनम् । पञ्चतां पञ्चत्वं मरणम् । अश्वयन् गमयन् सन् । पञ्चबाण इति सत्यमेव प्रपञ्च्यते । 'पचि विस्तारवचन' इति धातोः कर्मणि लट् । किल वार्तायाम् । माधवो वसन्त एव प्रियो यस्य स सन् । पूर्वजन्मनि जनान् अनुरञ्जयतीति जनानुरञ्जनश्च । स त्वं मया अन्वगम्यथा इति वक्ष्यमाणक्रियापदेनान्वयः । अत्र पञ्चबाणपदस्य पञ्चप्राणापहारपरबाण इत्यन्वर्थताभिप्रायान्निरुक्तमलङ्कारः । 'निरुक्तिर्योगतो नाम्नामन्वर्थत्वप्रकल्पनम् । ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ।।' इति तल्लक्षणम् ।। ३४ ।।

**यन्नियोगमतिलङ्घ्य वर्तितुं देवराडपि सहेत न क्षणम् ।**
**यत्प्रसादमवलम्ब्य सन्ततिं वर्धयन्त्यविरलां शरीरिणः**
**।। ३५ ।।**

**यन्नियोगमिति** ।। यस्य तव निदेशम् । अतिलङ्घ्य उल्लङ्घ्य वर्तितुम् । देवराट् देवेन्द्रोऽपि क्षणं न सहेत 'षह मर्षणे' लिङ् । स्वात्मानं सोढुं न शक्नुयात् । मन्मथनियोगातिलङ्घने एकस्मिन्नपि क्षणे आत्मानमपि स्थापयितुं न समर्थ इति भावः । अत्र देवेन्द्रस्य यत्तन्नियोगातिलङ्घने न वर्तनमुक्तं तदन्तर्गतप्रद्युम्नशक्तिमपेक्ष्य । ब्रह्मवाय्वोरिव देवेन्द्रकामयोरपि परस्परापेक्षत्वाशयेनेयमुक्तिरित्यपरे । देवान् राजयतीति देवराट् । स च कामशासनमतिलङ्घ्य क्षणमपि वर्तितुं न शक्नोतीति व्याख्याने न काप्यनुपपत्तिः । शरीरिणो जनाः । यस्य ते प्रसादमवलम्ब्य । अविरलाम् अदभ्राम् । सन्ततिं सन्तानं वर्धयन्ति । 'वृधु वर्धन' इत्यतो णिजन्ताल्लट् अभिवृद्धां तन्वन्ति । स त्वं मया अन्वगम्यथा इति सम्बन्धः ।।३५।।

**ज्योत्स्नयेव शरदिन्दुरम्बुधिस्स्रोतसेव[1] च धियेव कोविदः ।**
**छाययेव पुरुषस्तदा मुदा त्वं मया दयितयाऽन्वगम्यथाः**
**।। ३६ ।।**

**ज्योत्स्नयेवेति** ।। शरत्कालसम्बन्धी इन्दुः शरदिन्दुः । ज्योत्स्नया चन्द्रिकयेव । अम्बुधिः समुद्रः । स्रोतसेव 'स्रोतस्त्वप्सु जलस्रुतौ' इति दर्पणः । अम्बुधिर्वेलयेवेति पाठे तु 'वेलाम्बुधेस्तीरवृध्द्योः' इति दर्पणः । अम्बुधिस्तीरेणेत्यर्थः । कोविदः बुधः धिया बुध्द्येव । पुरुषः छाययेव च । स इति शेषः । त्वं मया दयितया वल्लभया । अन्वगम्यथाः । गमेः कर्मणि लिट् । उपमालङ्कारः स्फुटः । अश्वयन्नित्यादित्रिश्लोकी च कलापकं नाम काव्यलक्षणमुक्तम् ।। ३६ ।।

---

१. 'अम्बुधिर्वेलयेव' इति पाठान्तरम् ।

**त्वां सखायममरावतीपतेरात्मविष्टरवरार्धभोगिनम् ।**
**सेवकामरशिरश्शिखामणिश्रेणिशोणकिरणा व्यरोचयन् ।।३७।।**

**त्वामिति** ।। अमरावत्याः पत्युः अमरावतीपतेः । अमरशब्दस्य मतुप्दीर्घः । 'वृन्दारकाणाममरावतीव' इत्यत्र द्वितीये व्याख्यातः । सखायं 'सखामित्रसहाययोः' इति दर्पणः । मित्रम् । आत्मनः यद्विष्टराणां वरं भोगस्यार्धम् अर्धभोगः विष्टरवरस्यार्धभोगः सोऽस्यास्तीति विष्टरवरार्धभोगी तम् । देवेन्द्रार्धासनम् अध्यारूढमित्यर्थः । सेवकानाममराणां यानि शिरांसि तेषु शिखामणयः रूढ्या रत्नानि तेषां याः श्रेणयः पङ्क्तयः तासां ये शोणाः किरणाः कान्तयः ते व्यरोचयन् । 'रुच दीप्तौ' इत्यतो ण्यन्ताल्लङ् । प्रकाशितवन्तः ।। ३७ ।।

**मामशेषजगदङ्गनाजनो नाभ्यसूयति सरूपतोऽधिकाम् ।**
**सेव्यमेव हृदयं सृजन् स्त्रिया मय्यनुग्रहमिव व्यधाद्विधिः**
**।। ३८ ।।**

**मामिति** ।। अशेषं च तज्जगच्च तस्य सम्बन्धी योऽङ्गनाजनः स्त्रीजनः । सः रूपतः । सार्वविभक्तिकस्तसिः । सौन्दर्येण 'अथ रूपं नपुंसकम् । स्वभावाकृतिसौन्दर्यवपुष्पु श्लोकशब्दयोः' इति केशवः । अधिकामतिशयितां मां नाभ्यसूयति । 'असुञ् उपतापे' इति कण्ड्वादिः । 'यम्प्रतिकोप' इत्युक्तोपाधेरभावान्न चतुर्थी । द्वितीयैव युक्ता । स्त्रियाः हृदयमेव । जातावेकवचनम् । स्त्रीणां हृदयान्येव । सेव्यं सेवनार्हाणि सृजन् । इममनुग्रहम् इतरकान्ताजनानसूयापात्रतालक्षणं प्रसादम् । विधिर्ब्रह्मा । मयि व्यदधात् । 'डुधाञ् धारणपोषणयोः' इत्यतो लङ् ।

विहितवान् हि । सर्वासां स्त्रीणां हृदयानि रतेर्ममावस्थानं विधिर्व्यदधादिति न कस्यापि मय्यसूयेति भावः । अत्र पूर्वार्धोक्तार्थस्योत्तरार्धेन समर्थनात्काव्यलिङ्गमलङ्कारः ।। ३८ ।।

**इत्थमुत्थितविभूतिकाष्ठयोरावयोरतिरतोपरक्तयोः ।**
**हन्त विप्रकृतिमातनोद्धरश्चक्रवाकवयसोः प्रदोषवत् ।।३९।।**

**इत्थमिति** ।। इत्थमेवंप्रकारेण । उत्थितविभूतिकाष्ठयोः उत्थिता विभूतेरैश्वर्यस्य काष्ठा उत्कर्षो ययोस्तथोक्तयोः । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । अतिरते अतिशयितसुरते 'रतं सुरतगुह्ययोः' इत्यभिधानम् । उपरक्तयोरनुरक्तयोः । आवयोर्हरः चक्रवाकौ च ते वयसी तयोः । प्रदोषवत् प्रदोषेण तुल्यं विप्रकृतिं विरहमिति यावत् । आतनोत् हन्त । 'तनु विस्तारे' अकरोत् लङ् । 'हन्तशब्दो विषादे' इति विश्वः । 'हन्त हर्षेऽनुकम्पायां कार्यारम्भविषादयोः' इत्यमरः । वतिग्रहणादार्थी उपमालङ्कारः ।। ३९ ।।

**आस्थिते त्वयि तदा दशान्तरं म्लानतामहमहो मुहुर्गता ।**
**पाटिते द्रुमवरे यथा लता पातिता स्वयमियं निराश्रया**
**।। ४० ।।**

**आस्थित इति** ।। तदा हरक्रोधकाले । त्वयि दशान्तरम् अन्या दशा दशान्तरं तत् । मयूरव्यंसकादित्वात्समासः । आस्थिते प्राप्ते सति । अहं मुहुः पुनः पुनः म्लानतां तान्तताम् । 'म्लै हर्षक्षय' इत्यतो निष्ठायां तकारस्य 'संयोगादेरातो धातोर्यण्वतः' इति नकारः । 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । यातवती । अहो इत्यव्ययं निन्दायाम् । 'अहो

निन्दाहेतुचित्रे' इति शब्दरत्नाकरः द्रुमवरे वृक्षश्रेष्ठे पातिते दलिते सति इयं तदाश्रिता लता यथा स्वयमात्मना निराश्रया पातिता भवति तथेति ॥ ४० ॥

**साऽसुरस्य गृहिणी गृहेऽभवं वञ्चकं तमपि वञ्चयन्त्यहम् ।**
**मायिनी तव सती प्रतीक्षणं चातकीव जलदस्य कुर्वती ॥ ४१ ॥**

**सेति** ॥ सा पूर्पश्लोकोक्तविशेषणा । वञ्चकमपि धूर्तमपि । तं वञ्चयन्ती परिहरन्ती । यद्यपि 'ग्रन्धिवञ्च्योः प्रलम्भने' इति वञ्चतेरात्मनेपदविधानात् वञ्चयमानेति शानचा भाव्यम् । तथापि तत्सूत्रे हरदत्तेन अहिं वञ्चयतीति प्रत्युदाहरणे वञ्चयति परिहरति वर्जयतीत्यर्थः । इति व्याख्याततत्वादिह वर्जनार्थकस्य वञ्चयतेर्युक्तं परस्मैपदमिति शता नानुचितः । अत एव मायिनी मायावती अहम् । जलदस्य चातकीव तन्नाम्नी पक्षिणीव । 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । तव प्रतीक्षणं कुर्वती सती असुरस्य शम्बरस्य गृहिणी । 'कुटुम्बिनी गृहिणी' इति शब्दरत्नाकरः । अभवं भवतेर्लङ् । यद्वा असुरगेहे गृहिण्यपि अहं सती पतिव्रतैव । 'सती साध्वी पतिव्रता' इत्यमरः । अभवमिति योजना । उपमालङ्कारः ॥ ४१ ॥

**निष्प्रभा सुरपुरी त्वया विना मण्डिता त्रिदशमण्डलैरभूत् ।**
**हृद्यहेमवलया ह्यलङ्कृता भाति नैव विगतांशुका वधूः ॥४२॥**

**निष्प्रभेति** ॥ भो रमण । त्रिदशानां देवानाम् । मण्डलैस्समूहैः । 'मण्डलं चक्रवालम्' इत्यमरः । मण्डिता भूषितापि । सुरपुरी अमरावती । त्वया विना । 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इति तृतीया । त्वदृते

निष्प्रभा निर्गतदीप्तिः 'इदुदुपधस्य चाप्रत्ययस्य' इति सस्य षत्वम् । अभूत् भवतेर्लुङ् । तथा हि । हृद्यैः हृदयप्रियैः । 'हृदयस्य प्रियः' इति यत्प्रत्यये 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदयशब्दस्य हृद्भावः । हेम्नो वलयः कटकं स आदिर्येषां कङ्कणकेयूरकर्णिकादीनां तानि तथा तैः । अलङ्कृता शोभितापि वधूः सीमन्तिनी । विगतमंशुकं वसनं यस्यास्सा तथा । नैव भाति । 'भा दीप्तौ' दीप्यते । विलसतीत्यर्थः । अत्र पूर्वोत्तरार्धवाक्ययोरेकसामान्यात्प्रतिवस्तूपमालङ्कारः । 'वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता' इति हि तल्लक्षणम् ।। ४२ ।।

**चक्रिरे प्रणयिनोऽप्यतत्पराः स्त्रीजने सुरतसङ्गमोद्यमम् ।**
**रागरूढमनसो यथा द्विजा ब्रह्मचर्यनियमस्थितिं भुवि ।।४३।।**

**चक्रिर इति** ।। स्त्रीजने प्रणयस्सौहार्दं तद्वन्तः प्रणयिनो नायकाः । 'प्रणयस्तु याच्ञायां सौहृदेपि च' इति केशवः । सुरतस्य सङ्गमस्सुरतार्थे मिथुनीभावः तस्योद्यमः उद्योगः तम् । सुरतसङ्गमोद्यमम् । 'मैथुनं स्यान्निधुवनं सुरतम्' इति शब्दरत्नाकरः । अतत्पराः । 'तत्परे प्रसितासक्तौ' इत्यमरः । अनासक्ता एवेत्यर्थः । चक्रिरे करोतेर्लिट् । आत्मनेपदम् । कृञ् हिंसायामिति धातोश्चक्रिरे हिंसितवन्त इति वा । भुवि रागेण विषयाभिलाषेण रूढं रूषितं मनो येषां ते रागरूढमनसः । द्विजा यथा विप्रा इव । ब्रह्मचर्यस्येन्द्रियसंयमस्य । 'ब्रह्मचर्यं बुधाः प्राहुः समस्तेन्द्रियसंयमम्' इति हलायुधः । यद्वा 'कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते ।।' इति कूर्मपुराणवचनात् । ब्रह्मचर्यममैथुनं तस्य यो नियमः तस्य स्थितिं व्यवस्थाम् । अतत्परा एव कुर्युरिति शेषः । यद्यपि स्त्रीजने प्रणयिनो नायकाः ।

तथाप्यनासक्ता एव शास्त्रबलात्केवलं तत्सुरते प्रवृत्ताः । तवाभावेनोद्दीपना-योगात् । यथा रागिणोऽपि ब्रह्मचर्यमिति भावः । यद्वा ब्रह्म वेदस्तध्ययनार्थं व्रतं च ब्रह्म तस्य चर्यम् । भावे घञ् । 'गदमदचरयमश्चानुपसर्गे' इति शास्त्रात् । तस्य नियम इत्यादि प्राग्वत् । 'चरणे ब्रह्मचारिणि' इत्यत्र ब्रह्मशब्द एवमेव व्याख्यातो वैयाकरणैः । उपमालङ्कारः स्फुटः ।।४३।।

**गच्छता विधिबलादनेहसा द्वारकापतितनूजतां गतः ।**
**रुक्मिणीं प्रियतमां गदाभृतो वीरसूरिति जगत्स्ववापिथाः**
**।। ४४ ।।**

**गच्छतेति** ।। गच्छता अनेहसा चिरकालेन । हेतौ तृतीया । 'कालो दिष्टोप्यनेहापि' इत्यमरः । विधिबलाद्दैवबलात् । 'विधिर्विधाने दैवेऽपि' इत्यमरः । द्वारकापतितनूजतां द्वारकायाः पत्युः श्रीकृष्णस्य तनूजतां पुत्रतां गतः । 'गत्यर्थाकर्मक' इति कर्तरि क्तः । प्राप्तवान् । त्वमिति शेषः । गदाभृतः श्रीकृष्णस्य । प्रियतमाम् अतिशयेन प्रियेत्यत्र 'तसिलादिष्वाकृत्वसुचः' इति सुत्रे परिगणनात् तमपि पुंवद्भावः । तां रुक्मिणीम् । जगत्सु । वीरसूरिति प्रथामिति शेषः । वीरमातेति प्रसिद्धिम् । अवापिथाः प्रापितवानसि । 'आप्लृ व्याप्तौ' इत्यतो ण्यन्ताल्लिट्
।। ४४ ।।

**जातमात्रमपनीय मायया प्राक्षिपज्जलनिधौ महासुरः ।**
**त्वामदृश्य इव शुश्रुमः श्रियः को ह्यदृश्य इह माधवस्य**
**कः ।। ४५ ।।**

**जातमात्र इति** ।। महानसुरः शम्बरः । अदृश्य इव स्वयमदृश्य इति

भ्रान्त इति यावत् । जातमात्रं जातमेव । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । त्वां मायया । वञ्चनशक्त्येति यावत् । अपनीय अपहृत्य । जलनिधौ समुद्रे । प्राक्षिपत् । 'क्षिप प्रेरणे' प्रास्यत् । इतीति शेषः । शुश्रुमः । 'श्रु श्रवण' इति लिडुत्तमपुरुषबहुवचनम् । श्रुतवत्यः 'बहु जगद पुरस्तात्तस्य मत्ता किलाहम्' । 'सुप्तोऽहं किल विललाप' । 'मत्तोऽहं किल विललाप' इत्यादि माघकाव्यमहाभाष्यप्रयोगादुत्तमपुरुषेऽपि वैचित्र्यात्पारोक्ष्यम् । इह प्रपञ्चे । श्रियः श्रीदेव्याः रुक्मिण्या इत्यर्थः । 'रुक्मिणी कृष्णजन्मनि' । तस्याः श्रीदेवीरूपत्वात्को ह्यदृश्यः न कोऽपि । तथा माधवस्य कः अदृश्य इत्यनुषज्यते । अत्र हिशब्दो विस्मये विषादे वा । तथा च विश्वः 'हि विस्मयविषादयोः' इति । को ह्यदृश्य इह माधवस्य च इति पाठान्तरम् ।। ४५ ।।

**त्वं कथञ्चिदिह दैवयोगतो जालिकैर्जलनिधेरिहाहृतः ।**
**पीयसे स्म सरसं दृशा मया चन्द्रमा इव चकोरकन्यया**
**।। ४६ ।।**

**त्वं कथञ्चिदिति** ।। त्वमिति प्रद्युम्नं प्रति मायावतीवचनम् । इह दैवयोगतः एतद्देशसम्बन्धिभाग्ययोगात् । आद्यादित्वात्तसिः । जालमानायः स एषामस्तीति जालिकाः । 'अत इनिठनौ' इति मत्वर्थीयः ठन्प्रत्ययः । जलनिधेः समुद्रात् । इह शम्बरगृहं प्रतीति यावत् । आहृतः त्वं कथञ्चित् असि । यद्वा आहृतस्त्वं चन्द्रमाः । 'चन्द्रे मो डिच्चे'ति चन्द्रशब्द उपपदे माङ् मान इत्यतोऽसुन्प्रत्ययः । चन्द्रः चकोरस्य चन्द्रिकाप्रियपक्षिणः । कन्या कुमारी तया बालचकोर्येत्यर्थः । 'कन्या राश्यन्तरे पुत्र्याम्' इति दर्पणः । 'कन्यायाः कनीन च' इति निर्देशात्कन्याशब्दो न ङीबन्तः ।

तयेव मया । दृशा करणेन । सरसं सस्नेहम् । पीयसे स्म पीतः । 'अपरोक्षे च' इति स्मयोगे लङोऽपवादो लट् अपीयथाः । पापान इत्यतः कर्मणि लकारः । उपामलङ्कारः ।। ४६ ।।

**त्वामहं न विदितं सुरद्विषा द्वेषिणा सकरुणा व्यवीवृधम् ।**
**यावदेव दृढपातितौ स्तनौ शक्नुयामुरसि रोद्धुमात्मनः**
**।। ४७ ।।**

**त्वामहमिति** ।। अहं सुरद्विषा देवद्विषा अत एव द्वेषिणा त्वयि मात्सर्यवता । न विदितं यथा तथा । सुप्सुपेति समासः । सकरुणा सदया । त्वां व्यवीवृधं वृधु वृद्धौ णौ लुङ् वर्धितवती । आत्मनः स्वस्याः स्तनौ । उरसि तवेति शेषः । दृढपातितौ गाढं सङ्घट्टितौ । रोद्धुम् आवरीतुं वक्षोजमण्डनस्य आपूरणायेत्यर्थः । यावदेव यावन्तं कालम् । अहं शक्नुयां शक्ता भवेयं तावदवीवृधमित्यन्वयः ।। ४७ ।।

**तत्कुरुष्व शमनं सुरद्विषो मायया सकलया समाहिताः ।**
**मोदयाशु जननीं निजामजां नित्यतुष्टिमपि पुत्रवत्सलाम्**
**।। ४८ ।।**

**तत्कुरुष्वेति** ।। तत्तस्माद्वेषित्वात् । कुरुष्वेति श्रवणात्त्वमिति गम्यते । स्थानिन्यपीत्युक्तत्वात् । सकलया मायया । समाहितः यतात्मा । 'समाहितः प्रतिज्ञाते समाधिस्थे यतात्मनि' इति विश्वः । समाधानोपेतमनास्सन् । सुरद्विषः शम्बरस्य । शमनं वधम् । 'शमनं शान्तिवधयोः' इति विश्वः । कुरुष्व । निजां स्वकीयां नित्या तुष्टिस्तोषो यस्यास्सा तां पुत्रवत्सलां पुत्रे वत्सलां स्निग्धाम् । 'स्निग्धस्तु वत्सलः' इत्यमरः ।

'वत्सांसाभ्यां कामबले' इति वत्सशब्दात् स्नेहवचनाल्लच्प्रत्ययः । अजाम् अजशब्दवाच्यां प्रकृतिम् । 'अजा तु प्रकृतौ मेष्याम्' इति कविदर्पणः । जननीं जनयतीति जननी । 'कृत्यल्युटो बहुलम्' इति ग्रहणात्कर्तरि ल्युटि टित्त्वात् ङीबिति भट्टः । तामाशु अविलम्बितं मोदय । 'मुद हर्षे' इत्यतो ण्यन्ताल्लोट् हर्षय । हर्षकार्येण सह शम्बरवधस्य कारणस्य वर्णनाद्धेतुरलङ्कारः ।। ४८ ।।

**वाक्यमेतदनयोदितं मुदा तस्य तत्त्वमतुलं न्यबूबुधत् ।**
**भ्राम्यतो हृतमतेरतद्धिया स्वाधिकारिण इव त्रयीशिरः**
**।। ४९ ।।**

**वाक्यमिति** ।। अनया मायावत्या । मुदा सन्तोषेण । उदितं निगदितम् । एतद्वाक्यं कर्तृ । त्रयीशिरः त्रयी त्रयो वेदाः तस्याश्शिरश्शिखरमुपनिषदित्यर्थः । अतद्धिया अतद्विषयबुद्ध्या तत्त्वानवगाहिन्या बुद्ध्या । हृतमतेः अपहृतज्ञानस्य । अत एव भ्राम्यतो भ्रमतः । अनवस्थितिमतस्स्वाधिकारिणः । वेदान्ताधिकारिण इव । तस्य प्रद्युम्नस्य । अतुलमसदृशं तत्त्वम् । बोद्धव्यार्थसारमिति यावत् । न्यबूबुधत् । 'बुध अवगमने' इत्यतो ण्यन्ताल्लुङ् । अवगमयत् । 'गतिबुद्धिप्रत्यवसानार्थ' इत्यणौ कर्तुर्णौ कर्मत्वेऽपि तस्य शेषत्वविवक्षायां तस्येति षष्ठी । भजे शम्भोश्चरणयोरिति यथा । उपमालङ्कारः ।। ४९ ।।

**तं निहत्य दनुजं तमस्समं तामुपेत्य रमणीमुमोपमाम् ।**
**द्वारकामुदयवेदिका[१] शुचिं प्राप्तवान्हरिसुतो रविद्युतिः ।।५०।।**

---
१. 'वेदिता' इति पाठान्तरम् ।

**तमिति** ।। रवेः सूर्यस्य द्युतिर्दीप्तिरिव द्युतिर्यस्य स तथोक्तः । श्रीकृष्णस्य सुतः प्रद्युम्नः तमस्समं तमसा सदृशम् । 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' इति समासः । तृतीया 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' इति सूत्रात् । तं शम्बरनामकं दनुजं दानवं निहत्य । उमायाः कान्तेः सदृशीम् उमोपमाम् । 'उमा हरिद्रापार्वत्यां कीर्तिकान्त्यतसीषु च' इति दर्पणः । हरिद्राभामिति वा उमा उपमा यस्यास्सा उमोपमा तामित्यत्र पक्षे विग्रहः । तां मायावतीं रतिम् । रमणीं स्त्रियम् । उपेत्य । उदयवेदिकाभिरभ्युदयवेदिकाभिः । शुचिमनुपहतां शुद्धां वा । 'शुचयोऽग्निहरीन्दवः । शुभानुपहतश्वैत्यविप्रशृङ्गारपाण्डराः । उपधाशुद्धसचिवविशुध्द्या पाठशुद्धयः' इति कविदर्पणः । द्वारकां प्राप्तवान् । उदयवेदितेति पाठे उदयस्याभ्युदयस्य वेदिता लब्धा । 'विदॢ लाभ' इत्यतस्तृचः 'विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते । व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम्' इति वैयाकरणवचनात् । व्याघ्रभूत्यादिमतेन विन्दतेस्तृच इडागमः । शुचिमिति पूर्ववदर्थो बोद्धव्यः । आर्थी उपमालङ्कारः ।। ५० ।।

**आपतन्तमिभराजगामिनं मन्दिरं भगवतोऽतिसुन्दरम् ।**
**रुक्मिणी सुखचिदात्मिकाऽप्यमुं वीक्ष्य तत्क्षणमिवातिमोहिता ।। ५१ ।।**

**आपतन्तमिति** ।। भगवतः श्रीकृष्णस्य । अतिसुन्दरम् अत्यन्तमनोहरम् । आपतन्तमभिगच्छन्तम् । इभराज इव गच्छतीति इभराजगामी तम् । 'कर्तर्युपमाने' इति णिनिः । अमुं सूतिकागृहादपहृतम् । प्रद्युम्नं वीक्ष्य । सुखचिदात्मिका आनन्दज्ञानस्वरूपापि रुक्मिणी । 'तत्क्षणं

'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । सपदि अभिमोदितेव । न पुनः पूर्वमविद्यमानां मुदमिदानीं प्राप्तवतीति इवशब्दः । आसीदिति शेषः । 'सदैव मोदरूपिणो मुदोक्तिरस्य लौकिकी' इति यथा । 'मुद हर्षे' इत्यतः स्वार्थे ण्यन्तात् निष्ठातः । अथवा 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इति मुदेः परस्या निष्ठायाः कित्त्वविकल्पे गुणः । न च प्रशब्दयोग एवादिकर्मण उपस्थितिः प्रस्वेदितश्चैत्र इत्यादौ तथा दर्शनादिति वाच्यम् । 'द्वितीयाश्रिता' इति सूत्रे श्रुतशब्दस्य आदिकर्मणि निष्ठान्तत्वं वदता मनोरमाकारेणैवास्य नियमस्य त्याजितत्वादिति ।। ५१ ।।

**यावती तदपहारकालिकी शोकसन्ततिरभूत्पुरे नृणाम् ।**
**तावती मुदभवन्न केवलं तत्समागममहोत्सवे सति ।।५२।।**

**यावतीति** ।। नृणां पुरे द्वारकायां यत्प्रमाणमस्याः यावती । 'यत्तदेतेभ्यः परिमाणे वतुप्' इति प्रमाणे वतुप्प्रत्ययः । तस्य शिशुरूपस्य प्रद्युम्नस्य अपहारकालिकी कालठञ् । शिवभागवतादिवदेकदेशान्वयः । शोकसन्ततिः क्लेशप्रवाहः । अभूत् भवतेर्लुङ् तस्य प्रद्युम्नस्य । समागमः प्रत्यागमनं तस्य महानुत्सवः तस्मिन् सति तत्समागममहे सतीत्यर्थः । तावती केवलं तावत्येव मुदभवदिति न किं तु ततोऽप्यतिमहतीत्यर्थः ।। ५२ ।।

**अग्रहीत्स सहधर्मचारिणीं रुक्मिणोऽथ तनयां यदूत्तमः ।**
**अन्ववायपरिशुद्धिसाधिनीं जाह्नवीमिव पयोनिधिः शुभाम् ।। ५३ ।।**

**अग्रहीदिति** ।। अथ भगवन्मन्दिरे अवस्थानानन्तरम् । यदूत्तमः

प्रद्युम्नः । यदूनां यदुषु यदुभ्यो वा उत्तमः स प्रद्युम्नः । पयोनिधिः समुद्रः । शुभां जाह्नवीं गङ्गामिव अन्ववायः सन्तानः तस्य परिशुद्धिस्तस्यास्साधिनीं साध्यते अनयेति साध्नोतेः करणे लुटि टित्त्वात् ङीप् । रुक्मिणः स्वमातुलस्य तनयां सहैव धर्मांश्चरितुं शीलमस्या इति सहधर्मचारिणी तां भार्याम् । उदग्रहीत् ऊढवान् । 'ग्रह उपादाने' लुङ् । 'ह्यन्तक्षणे'ति न वृद्धिः । समुपेतवती । (कस्यापि) प्रद्युम्नस्य पुनः रुक्मितनयाविवाहः कविना वर्णितः । तच्च 'विप्रलम्भो विवाहश्च' इति महाकाव्याङ्गम् ॥ ५३ ॥

**रुक्मवत्यरणिगोचरस्ततो यज्वनेव विमलेन पावकः ।**
**तेन सद्य उदपादि दारकः प्रत्यनीकतमसां विदारकः ॥ ५४ ॥**

**रुक्मवत्यरणीति** ॥ ततो विवाहानन्तरम् । रुक्मवती अरणिरिव तस्य गोचरो विषयः । विमलेन यज्वना इष्टवता यजमानेनेति यावत् । पावक इव तेन प्रद्युम्नेन । प्रत्यनीकतमसां प्रत्यनीकाः शत्रुसेनाः तमांसीव तेषां विदारकः भेत्ता । दारकः नन्दनः । 'दारको नन्दनोऽर्भकः' इति धनञ्जयः । 'दारको भेदके बाले' इति दर्पणः । सद्यः तत्क्षणे । उदपादि पद गतावित्यतो हेतुमण्ण्यन्तात्कर्मणि लुङ् । उत्पादितः ॥ ५४ ॥

**सोऽनिरुद्ध इति नाम लब्धवान् सोऽप्युषाकुचयुगेन निर्दयम् ।**
**सन्निरुध्यत नवेऽपि यौवने को ह्यनर्गल इवामनोरथः ॥ ५५ ॥**

**सोऽनिरुद्ध इति** ॥ यो दारकः अनिरुद्ध इति नाम नामधेयम् ।

लब्धवान् प्राप्तवान् सोऽपि । उषाकुचयोः युगेन निर्दयं निर्गता दया यस्मिन्कर्मणि तद्यथा भवति तथा । नवेऽपि यौवने यौवनप्रादुर्भावमात्रेऽपि । सन्न्यरुध्यत । सम्पूर्वान्निपूर्वात् रुधिर् आवरण इत्यतः कर्मणि लङ् । सम्यङ्निरुद्धः । अपीत्यस्य सन्न्यरुध्यतेति क्रियापदेन समन्वये गर्हार्थत्वम् । 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु' इति सूत्रात् । अनिरुद्धस्यापि निरुद्धत्वमासीत् बतेति भावः । निरूढयौवनस्तु निरुध्यत इति किमु वक्तव्यमिति नवेऽति यौवन इत्यनेनैव विभावयति । तदुपपादयति । कोऽहीति । सर्वत्रानर्गलः को हि विधिः । इह अनिरुद्ध नामविषये अमनोरथ इव अप्राप्तवाञ्छितार्थ इव । 'मनोरथो वाञ्छितार्थः' इति केशवः । यद्वा अमनोरथ इव अनर्गलः को ह्यस्ति वाञ्छारहितः । विरक्त एव हि अनर्गलोऽनङ्कुशो भवति । 'निस्पृहस्य तृणं जगत्' इति न्यायात् । विषयतृष्णारहितस्याप्रतिहतप्रसरत्वात् । अस्य चोषाभिलाषशालिनः निरुद्धत्वमेवोचितम् । अनिरुद्धत्वं तु नान्वर्थं नामेति भावः । काव्यलिङ्ग-मर्थान्तरन्यासश्चालङ्कारः इत्याहुः ।। ५५ ।।

**तं निरीक्ष्य मुमुदे पितामहः स्वानुकारचतुराङ्गचेष्टितम् ।**
**वीर्यशौर्यबलतेजसामहो भाजनं भगवदंशयोगतः ।। ५६ ।।**

**तमिति** ।। पितामहः पितुः प्रद्युम्नस्य पिता पितामहः । 'पितामहः पितृपिता' इत्यमरः । 'पितृव्यमातुलमातामहपितामहाः' इति पितृशब्दो डामहच्प्रत्ययान्तो निपातितः । स्वस्यात्मनः अङ्गस्यानुकारे अनुकरणे चतुरं समर्थम् । अङ्गचेष्टितम् अवयवचेष्टा यस्य तं स्वानुकारचतुराङ्ग-चेष्टितम् । भगवदंशस्य अनिरुद्धनामकभगवद्रूपस्य योगतः सन्निधानात् । वीर्यं पराक्रमः । शौर्यं शक्त्याह्वयं बलं यशो वा । 'शक्त्याह्वयबले तथा ।

शूरस्य भावे यशसि शौर्यम्' इति केशवः । बलं शरीरबलं तेजो वर्चः । 'तेजः पराक्रमे प्राणे वर्चस्यर्चिषि रेतसि' इति रत्नाकरः । तेषां वीर्यशौर्य-बलतेजसां भाजनं पात्रम् । 'अमत्रं भाजनं पात्रम्' इति केशवः । तम-निरुद्धं वीक्ष्य दृष्ट्वा । मुमुदे 'मुद हर्षे' लिट् । अहो विस्मय इति कविवचनम् । स्वसन्निधानाहितवीर्यादिसम्पत्तिमनिरुद्धं दृष्ट्वा मुमुदे भगवानित्येतदद्भुतमित्यर्थः । हेतुरलङ्कारः ।। ५६ ।।

**तदनु मकरकेतोरौरसस्योरुकीर्तेः**
**अविकलरुचिरोद्यद्यौवनस्यात्मजस्य ।**
**यदुकुलयुवतीनामाकुलभ्रूलतानां**
**नयनसुखविलासस्थानमासीन्मुखश्रीः ।। ५७ ।।**

**।। इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्य-**
**विरचिते उषाहरणे महाकाव्ये चतुर्थः सर्गः ।। ४ ।।**

**तदन्विति** ।। तदनु तस्मात्पश्चात् वीर्यादिप्राप्त्यनन्तरमित्यर्थः । 'पश्चात्सादृश्ययोरनु' इत्यमरः । अविकलमनूनं रुचिरं हृद्यम् उद्यत्प्रादुर्भवत् यौवनं यूनो भावो यस्य स तथोक्तः । तस्य 'हायनान्तयुवादिभ्योऽण्' इत्यण्प्रत्ययः । उर्वी महती कीर्तिर्यस्य स तथा तस्य । मकरः केतुः यस्य सः मकरकेतुस्तस्य औरसस्य । व्यधिकरणे षष्ठी । उरसा निर्मितस्य । 'उरसोऽण् च' इत्यण्प्रत्ययः । आत्मजस्य तनयस्य । मुख-श्रीर्मुखशोभा । आकुला व्याकुला व्यासङ्गवत्यः भ्रूलता यासां तास्तथा तासाम् । यदूनां पुरं द्वारका तस्य युवतीनां तत्रत्यानां तरुणीनां नयनानां नेत्राणां यत्सुखं तस्य विलासो लीला तस्य स्थानम् आश्रयः । आसीत् ।

मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणात् । 'सर्वत्रभिन्नसर्गान्तैरुपेतं लोकरञ्जकम्' इति कविसमयमनुरुन्धानो वृत्तान्तरमचीक्लृपत् ।। ५७ ।।

**।। श्री श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्य-विरचितोषाहरणाख्यमहाकाव्यस्य व्याख्यायां रसिकरञ्जनीसमाख्यायां सुधीन्द्रगुरुपादशिष्यसुमतीन्द्रयतिविरचितायां चतुर्थः सर्गः ।। ४ ।।**

## ।। अथ पञ्चमः सर्गः ।।

अथास्मिन् पञ्चमे सर्गेऽनिरुद्धविलासं वर्णयितुमुपक्रमते—

**अथासुरेन्द्रे नरके निपातिते जिते शचीभर्तरि चक्रपाणिना ।**
**मुदानिरुद्धः सखिभिः प्रियैः समं समाजगामोपवनं रिरंसया ।। १ ।।**

**अथेति** ।। अथ यौव्वनप्रादुर्भावानन्तरमनिरुद्धः चक्रपाणिना चक्रं पाणौ यस्य स चक्रपाणिस्तेन । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति वार्तिकात् सप्तम्याः परनिपातः । श्रीकृष्णेन । असुराणामिन्द्रे नरके नरकनामके निपातिते घातिते मारिते सतीत्यर्थः । शचीभर्तरि पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः । देवेन्द्रे जिते पराभूतिं प्राप्ते च । मुदा सन्तोषेण । प्रियैः सखिभिः समं सह । रिरंसया रन्तुमिच्छया । उपवनमारामं समाजगाम प्राप्तवान् । अत्र नरकवधशचीपतिपराजययोरुपवनरिरंसां प्रति हेतुत्ववर्णनाद्धेतुरलङ्कारः । अस्मिन् सर्गे प्रायेण वंशस्थनामकं वृत्तम् । सप्तश्लोक्यामुपजातिरिति वक्ष्यते । अन्तिमश्लोकवृत्तं तत्रैव वक्ष्यामः । केचित्तूपेन्द्रवंशानामकं वृत्तमित्युक्त्वा 'उपेन्द्रवंशा जतजैरसंयुतैः' इति लक्षणमाहुः । कल्पितमेतल्लक्षणमित्यपरे ।। १ ।।

**सुगन्धपुष्पद्रुमषण्डमण्डितं वनं व्रजन्तं तमनङ्गचोदिताः ।**
**अनुप्रपेतुः प्रमदा मदालसा बृहन्नितम्बस्तनभिन्नरंहसः ।।२।।**

**सुगन्धेति** ।। पुष्पाणां द्रुमाः पुष्पद्रुमाः शोभनो गन्धो येषां ते सुगन्धाः ते च ते पुष्पद्रुमाश्च ते । तेषां षण्डेन समूहेन मण्डितं भूषितम् । यद्यपि केशवः 'अस्त्री वृक्षसमूहे स्यात्षण्ड' इति वृक्षसमूह एव षण्डशब्दार्थ

इत्यवादीत् । तथापि करिकलभादिशब्द इव समूहमात्रवचनत्वमत्रापि वक्तव्यम् । वनं नगरोपवनं व्रजन्तं गच्छन्तम् । अनङ्गेन मन्मथेन प्रचोदिता मदालसा मदेन हर्षेणालसा मन्दाः बृहद्भ्यां नितम्बभ्यां स्तनाभ्यां च भिन्नं तिरस्कृतं रंहो वेगो यासां तास्तथा । प्रमदास्तरुण्योऽनुप्रपेतुरनुसृतवत्यः । सुगन्धपुष्पेत्यत्र 'गन्धस्येदुत्पूतिसुसुरभिभ्य' इतीत्त्वं न भवति । 'गन्धस्येत्त्वे तदेकान्तग्रहणम्' इति वार्तिकिनाविभागेन लक्ष्यमाण एव इत्वनियमात् । अत एव 'सुगन्ध आपणिक' इति प्रत्युदाहरन् । अनङ्गचोदिता इति विशेषणस्य साभिप्रायत्वात् परिकरालङ्कारः । प्रमदा मदालसा इत्यत्र छेकानुप्रास इति तयोः संसृष्टिः ।। २ ।।

**सुपारिजातप्रसवप्रसाधनादुदारगन्धां कबरीं मधुव्रताः ।**
**प्रविश्य तासां द्विगुणां व्यतानिषुर्विसृज्य वन्यप्रसवान्**
**विकासिनः ।। ३ ।।**

**सुपारिजातेति** ।। मधुव्रता मधु व्रतं भक्ष्यं येषां ते मधुव्रता भ्रमरा इत्यमरे भट्टः । वन्दिघटीये तु 'मधु व्रतयति भुङ्क्ते' इति मधुव्रतः । 'व्रताद्भोजनतन्निवृत्त्योरिति' 'मुण्डमिश्रे'त्यादिना णिचि ततः कर्मण्यणित्युक्तम् । तासां प्रमदानां शोभनैः पारिजातस्य प्रसवैः पुष्पैः प्रसाधनादलङ्करणात् । 'प्रसवस्तु फले पुष्प' इति विश्वः । 'प्रतिकर्म प्रसाधनम्' इत्यमरः । विकासिनो विकचान् वन्यप्रसवान् वने भवानि पुष्पाणि विसृज्य त्यक्त्वा । उदारगन्धामुदारो महान् गन्धः परिमलो यस्याः सा तां कबरीं केशवेशम् । 'जानपदे'त्यादिना ङीष् । प्रविश्य द्विगुणां द्वौ गुणावावृती यस्याः सा द्विगुणा ताम् । 'गुणोऽभ्यासप्रधानयोः' इत्यमरशेषेऽभ्यास आवृत्तिरिति हरिदीक्षितः । 'अथो गुणः । रूपादौ

सूदशिञ्जिन्योरावृत्तीन्द्रियतन्तुषु’ इति कविदर्पणश्च । व्यतानिषुः । ‘तनु विस्तारे’ लङ् । कृतवन्तः । पूर्वसिद्धा कबरी परिमललोभात् प्रविष्टैर्भ्रमरै-रुर्वैपुल्यापादनेन द्विगुणवैशाल्यशालिन्यासीदिति भावः । अत्र कबर्याः पूर्वसिद्धपरिणाहापेक्षया भ्रमरप्रवेशेनाधिकपरिणाहकरणवर्णनादनुगुणालङ्कारः । ‘पूर्वसिद्धगुणोत्कर्षोऽनुगुणः परसन्निधेः । नीलोत्पलानि दधते कटाक्षैरति-नीलताम्’ इति सोदाहरणं तल्लक्षणाभिधानात् ॥ ३ ॥

**नितम्बिनीनामधरोष्ठरागतो विवर्णतामीयुरमी वनद्रुमाः ।**
**स्थिरा अपि स्वैरमहो शरीरिणो विकारवन्तो वनितासमागमे ॥ ४ ॥**

**नितम्बिनीति** ॥ अमी समागतप्रमदाः । वनस्य द्रुमा वनस्थवृक्षगताः पल्लवा इत्यर्थः । नितम्बिनीनां प्रमदानामधरोऽनूर्ध्वोऽधस्तन ओष्ठो दन्त-वसनम् । तस्य रागतो रक्तिम्ना । ‘अधरो दन्तवसनेऽनूर्ध्वे’ इति विश्वः । आद्यादित्वात्तसिः । विगतो वर्णः शोभा येभ्यस्तत्ताम् । ‘विलेपने प्रकारे च शोभायामपि वर्णवाक्’ इति केशवः । ईयुः । ‘इण् गतौ’ लिट् । स्थिराः शरीरिणोऽपि स्थावरा अपि वनितानां स्त्रीणां समागमे सन्निधाने स्वैरं स्वच्छन्दतयेति क्रियाविशेषणम् । विकारवन्त आसन् । अहो आश्चर्यम् । यद्वा, स्वैरं स्थिता अपि शरीरिणो वनितासमागमे विकारवन्त इति योजना । अहो इत्येतदीयुरिति सम्बध्यते । अर्थान्तरन्यासोऽलङ्कारः । तेनौष्ठगतरक्तिमातिशयेन सौन्दर्यं ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः ॥४॥

**विलासिनीपाणितलापहारिते प्रवालनैसर्गिकमार्दवे लता ।**
**चलद्दला भृङ्गकुलारवाकुला शुचा रुरोदेव सगात्रताडनम् ॥ ५ ॥**

**विलासिनीति** ।। प्रवालानां पल्लवानां नैसर्गिकं सहजं यन्मार्दवं तस्मिन् । 'पल्लवोऽस्त्री किसलयं प्रवालं पुन्नपुंसकम्' इति शब्दरत्नाकरः । 'अथ निसर्गवाक् । स्वभावे सज्जने न्यासे निगमेऽपि' इति केशवः । मृदुशब्दात् 'शान्ताच्च लघुपूर्वात्' इत्यण् । मार्दवं म्रदिमा तस्मिन् । विलासिनीनां प्रमदानां पाणितलैरपहारिते । स्वार्थे णिच् । अपहृते । यद्वा, विलासिनीभिः पाणितलैः करणैरपहारिते सतीत्यर्थः । चलन्ति दलानि पर्णानि यस्याः सा तथोक्ता । भृङ्गाणां भ्रमराणां कुलस्य समूहस्यारवेण घोषेण झङ्कारेणाकुला व्याकुला व्यासङ्गवती । 'आकुलं जनसङ्कुले । त्रिषु स्याद्व्यासङ्गवती'ति दर्पणः । शुचा शोकेन सगात्रताडनं हृदयताडनेन सहितं यथा तथा रुरोदेवेत्युत्प्रेक्षा । चोरापहृतस्वा ह्यबला सहृदयताडनमाघुष्य रोदिति लोके । तथा लतापि स्वपल्लवमार्दवे प्रमदापाणितलैरतिरक्तैरपहृते भ्रमरझङ्कारेण कूजन्ती रोदितीवेति कविरुत्प्रेक्षते । द्वितीयव्याख्याने पाणितलैरिति तृतीया 'हृक्रोरन्यतरस्याम्' इति कर्मत्वाभावे । आरवाकुलेत्यत्र 'रु शब्द' इत्यतो 'विभाषाडिरुप्लुवोः' इति घञो विकल्पितत्वादृदोरप् ।। ५ ।।

**वधूगणैः स्वाभरणोपकल्पितप्रवेकरत्नप्रभवप्रभाचयैः ।**
**खरद्युतेर्दूरनिवारिताः करा न नः स्पृशेत्कामचरो वनेष्विति**
**।। ६ ।।**

**वधूगणैरिति** ।। वधूगणैर्नारीसमूहैः । कर्तरि तृतीया । स्वानि स्वीयानि च तान्याभरणानि च तेषूपकल्पितानि खचितानि प्रवेकान्युत्तमानि रत्नानि पद्मरागादीनि प्रभवान्युत्पत्तिस्थानानि यासान्तास्तथोक्ताः । प्रभा रुचयस्तासां चयैः समूहैरिति करणे तृतीया वनेषु कामचरो यथेष्टसञ्चारी पुरुषः ।

नोऽस्मान् न स्पृशेत् । 'स्पृश संस्पर्शे' इत्यतो लिङ् । इति हेतोः । खरद्युतेः । सूर्यस्य कराः किरणा दूरान्निवारिता दूरे निराकृताः । अनेन कङ्कणादिभूषणखचितरत्नप्रभाचयैः सूर्यकिरणाः पराकृता इति रत्न-किरणानामहिमद्युतिकिरणेभ्योऽतिशयो व्यज्यते । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति । 'प्रवेकाऽनुत्तमोत्तमा' इति । 'बलिहस्तांशवः करा' इति चामरः ।। ६ ।।

**उरोजभारद्वयविभ्रमार्तया परिकणत्काञ्चनमेखलामणि ।**
**निपातभीत्या श्रियकर्णमेकया दृढोपगूढो मकरध्वजात्मजः**
**।। ७ ।।**

**उरोजाविति** ।। उरोजौ कुचावेव भारावोढव्यौ 'भारः सहस्रद्वितये पलानां च गरिम्णि हि । ओढव्ये भरणे च' इति केशवः । तयोर्द्वयं तेन विभ्रमश्चित्तवृत्त्यनवस्थानम् । 'शृङ्गाराद्विभ्रमो मत' इति भट्टवचनादत्र विभ्रमशब्दः शृङ्गाररसाहितचित्तव्याक्षेपस्य वाचकः तेनार्तया पीडितया । परिक्वणन्तः । काञ्चनस्य स्वर्णस्य मेखलाया रशनाया मणयो घण्टा यस्मिन् कर्मणि तद्यथा तथेति क्रियाविशेषणम् । 'मणिः स्त्रीपुंसयो रत्ने घण्टायामिति कश्चन' इति हैमः । 'मणयो लोहनिष्पाद्यगुलिकाः काष्ठ-लोहादिनिष्पाद्यगुलिकायां मणिः' इति केशव इत्यप्याहुः । निपातभीत्या परिपाताद् भयेन श्रितः कर्णो यथा तथा । एकया कयाचित् प्रमदया मकरध्वजस्य प्रद्युम्नस्यात्मजस्तनयोऽनिरुद्धो दृढं यथातथोपगूढ आलिङ्गितः । अत्र विभ्रमभावस्यालिङ्गनभावं प्रत्यङ्गत्वमिति प्रेयोऽलङ्कारः ।। ७ ।।

**महामहीरुट्सितकोटियुग्मिकाः**
**प्रलम्बिमध्यां मृदुलां महालताम् ।**
**सखेलमुच्चैरधिरोप्य कामुकः समन्द-**
**मान्दोलयति स्म कामपि ।। ८ ।।**

**महामहीरुडिति** ।। कामुकः सोऽनिरुद्धः । महान्यो महीरुड् वृक्षस्तस्मिन् सितं बद्धं कोट्योरग्रयोर्युग्मं यस्याः सा तथा ताम् । 'कोटिः स्यादग्रमात्रेऽपि चापाग्रे' इति केशवः । 'शेषाद्विभाषे'ति बहुव्रीहौ कप्प्रत्यर्थः । 'प्रत्ययस्थात्' इतीत्त्वम् । प्रकर्षेण लम्बनशीलो मध्यो मध्यभागो यस्याः सा ताम् प्रलम्बिमध्याम् । मृदुलां कोमलां 'कोमलं मृदुलं मृदु' इत्यमरः । महती च सा लता व महालता 'आन्महत' इत्यात्वम् । तां कामपि काञ्चन प्रमदां सखेलं सलीलं 'क्रीडा खेला च कूर्दनम्' इत्यमरः । उच्चैरुन्नतस्थाने । अधिरोप्य मन्दं यथा तथा । आन्दोलयति । *'आन्दोल चलने' चलयति स्म चलयाञ्चकार । लट् । 'स्म इति लिटोऽपवादो' लट् । अत्र स्वभावोक्तिरलङ्कारः ।। ८ ।।

**विलोळिता द्रागवशादिव प्रिये**
**कृताभिपाता परिरभ्य चाकुलम् ।**
**सखीं तु पश्चात्सहसोपगृह्णतीं**
**पदेन पाणौ चलयाञ्चकार सा ।। ९ ।।**

**विलोळितेति** ।। आन्दोलनरज्जावारोपिता प्रमदा विलोळिता

---

*'दल उत्क्षेपणे' इति चुरादिगणे दृश्यते स एवायमाङ्पूर्वः स्यात् । टीकायां तदर्थानुवादः कृत इत्यूह्यते ।

आन्दोलिता । अवशादिव अयत्नादिव । प्रिये कृतोऽभिपात आभिमुख्येन पतनं यस्याः सा कृताभिपाता आकुलं यथा तथा । द्राग् झटिति परिरभ्य परिष्वज्य सहसा बलेन पश्चात् पश्चाद्भागे पाणावुपगृह्णतीं सखीं तु पदेन पादतलेन चलयाञ्चकार । चालितवती । 'चल कम्पने' मित्त्वाद्ध्रस्वः ।। ९ ।।

अनिरुद्धस्य प्रमदया विहरतश्चरितान्यालक्ष्य प्रवृद्धेर्ष्या काचित् स्वसखीं प्रति नायककृतापराधतितिक्षाशुकभर्त्सनादिकर्णारुन्तुदव्यापारानाह—

**लताधिरोपो मृदुचालनं पुनः प्रियोऽङ्गसङ्गश्च परोपरोधकः ।**
**मदालसायाः पुनरङ्गलालनं शनैश्शनैर्वीजनमार्द्रपल्लवैः ।।१०।।**

**लतेति** ।। मदेनालसाया मन्दायाः । लतायामधिरोप आरोपणम् । मृदुचालनं मन्दमान्दोलनम् । 'वा चित्तविराग' इत्यतो वा ग्रहणानुवृत्तेः ('कम्पने चलि'रिति?) मित्सञ्ज्ञायामपि ह्रस्वविकल्पे 'चालयन् पृथिवीं सर्वाम्' इत्यादि प्रयोगः साधुरिति' शरणदेववचनात् अत्र चालनमिति दीर्घोऽपि साधुः । पुनः परस्या उपरोधकस्तिरस्कारकः । शेषषष्ठ्या समासात् नाकप्रत्ययेन निषेधशास्त्रावसरः । प्रियः प्रीतिहेतुरङ्गसङ्ग आलिङ्गनादिरूपः । पुनःपुनरङ्गलालनं केशप्रसाधनपादसंवहनादिलक्षणम् । आर्द्रैरुदकक्लिन्नैः पल्लवैः । शनैः शनैर्मन्दं मन्दं वीजनं विपूर्वाद् 'इज गतौ*' इत्यतो ल्युट् ।। १० ।।

---

*धातुपाठे इज गताविति न दृश्यते । अत ईज गतिकुत्सनयोरिति दीर्घान्तोऽयं धातुः स्यात् ।

**इति व्यलीकानि सुदुस्सहानि मे तितिक्षितानि क्षणसौहृदे प्रिये ।
इदं च शृण्वालि तयोपदेशितं मुहुः करस्थस्य शुकस्य
भर्त्सितम् ।। ११ ।।**

**इतीति** ।। इतिशब्द आद्यर्थः । हे आलि सखि 'आलिः सखी वयस्या चे'त्यमरः । व्यलीकान्यप्रियाणि 'व्यलीकं त्वप्रियेऽनृत' इत्यमरः । मे मम शेषषष्ठी । मया सुदुस्सहानि अत्यन्तं सोढुमशक्यान्यपि क्षणसौहृदे क्षणकालावस्थायिमैत्रे । मध्यमपदलोपिसमासः । प्रिये वल्लभे तितिक्षितानि क्षान्तानि । तिष्ठन्तु तावदेतानि चेष्टितानि । अस्त्यन्यदसह्यं तच्चाव-धारयेत्याह– **इदं चेति** ।। करस्थस्य प्रतिकामिनीकरे स्थितस्य शुकस्य तयोपदेशितं तदुपदेशेन प्राप्तं मुहुः पुनःपुनर्भर्त्सितं तर्जितं दुर्भाषितमिति यावत् । शृणु 'श्रु श्रवणे' लोट् । सन्दानितकमिदं श्लोकद्वयम् ।।११।।

**इति प्रवृद्धेर्ष्यमुदश्रुगद्गदं निगद्य तस्मादपसारिणीं सखी ।
रहस्यमेनामनुनीय मानिनीमवाप तन्माल्यकृतं वधूवहम्
।। १२ ।।**

**इतीति** ।। इत्युक्तप्रकारेण प्रवृद्धा ईर्ष्या अक्षान्तिर्यस्मिन् कर्मणि तद्यथा भवति तथा । क्रियाविशेषणस्य नपुंसकत्वात् । 'ह्रस्वो नपुंसक' इतीर्ष्या-शब्दस्य ह्रस्वः । अश्रु नेत्रजलम् । गद्गदो गलगतो मनागस्फुटशब्दः (गद्गद इति वैजयन्ती? ।।) उद्गतौ व्यक्तौ तौ यस्मिन् कर्मणि तद्यथा तथा । निगद्य उक्त्वा । तस्मात्प्रदेशादपसारिणीं प्रमदामेनाम् । 'द्वितीया-टौस्स्वेन' इत्येनादेशः । कुपितां मानिनीं* (मानश्चित्तोन्नत्याग्रहणं

*'मानश्चित्तोन्नतौ ग्रहे । क्लीब प्रमाणे प्रस्थादौ' इति मेदिनी । मानोऽस्त्यस्या इनिरिति अमरव्याख्यायामस्ति ।

सोऽस्यास्तीति 'निर्'?) इत्यमरव्याख्या । सखी । रहस्यं रहसि भवोऽनुनयो यथा तथा । अनुनीय सान्त्वयित्वा वहतीति वहो वध्वा वहो वधूवहः स्त्रीवश इति यावत् । तन्माल्यकृतं वधूप्रीतये पुष्पदाम सृजन्तं तमनिरुद्धमवाप प्राप्तवती । सङ्घटनाचरणायेति भावः ।। १२ ।।

**गुणाधिकान्यप्रसवापदेशतः**
**ततो वियोज्याशु पटुस्तमूचुषी ।**
**उदारकीर्ते स्वमुदस्यतां यशः**
**न मानिनीहास्यतया सदस्सु ते ।। १३ ।।**

**गुणेति** ।। आशु अतिपटुरत्यन्तसामर्थ्यवति । समीचीनगुणैः सौरभ्यादिभिरधिका अतिशयिता अन्ये ये प्रसवाः पुष्पाणि तेषामपदेशो व्याजस्तस्मादिति पञ्चम्यर्थे आद्यादित्वात्तसिः । तत आन्दोलनकेश-प्रसाधनकुसुममाल्यसर्जनादिदेशाद्वियोज्य पृथक्कृत्य उदारा महती कीर्तिर्यस्य तत्सम्बुद्धिः । उदारकीर्ते । ते तव सदस्सु तत्र सभासु स्वं धनरूपं 'स्वोऽस्त्रियां धन' इत्यमरः । यशो मानिनीहास्यतया मानिनीभिर्हास्यं मानिनीहास्यं तत्तया । नोदस्यताम् । 'असु क्षेपणे' न क्षिप्यताम् । न नश्यतामित्यर्थः । इति तमनिरुद्धमूचुषी । वचेर्लिटः क्वसुः । यद्यपि क्वसुः छन्दस्यनुशिष्टः । तथापि निरङ्कुशाः कवयः छान्दसानपि शब्दान् लोके प्रयुञ्जते । अत एव । तं तस्थिवांसं नगरोपकण्ठे श्रेयांसि सर्वाण्यधि-जग्मुषस्ते । 'जग्मुषस्तिग्मभानोः' इत्यादिकालिदासादिप्रयोगाः सङ्गच्छन्ते । उक्तवतीत्यर्थः ।। १३ ।।

तमूचुषीत्युक्तमेव उत्तरैः पञ्चभिः श्लोकैराह अकैतवमित्यादिना—

**अकैतवं प्रेमवरं सुखास्पदं मिथः सहन्ते न परेऽन्तरेप्सवः ।**
**विलोभितः सोपधिसौहृदैश्च तैः क एव विस्रम्भमियादमन्दधीः**
**॥ १४ ॥**

**अकैतवमिति** ॥ कितवस्य भावः कर्म वा कैतवं छद्म न कैतवं यस्मिन्तदकैतवम् । सुखस्यास्पदमवलम्बभूतं सुखसन्तानमूलं मिथो वरं प्रेम निर्व्यलीकं स्नेहम् । परे शत्रवो न सहन्ते । कुतो यतोऽन्तरेप्सवोऽन्तरं भेदमीप्सव आप्तुमिच्छवः । 'अन्नबुभुत्सव' इतिवद् गम्यादित्वात्समासः । 'आपूज्ञप्यृधामीत्' इत्याप्नोतेराकारस्येत्वम् अभ्यासलोपश्च । शेषषष्ठ्या समासः । तैश्च प्रेमासहिष्णुभिः । उपधिना छद्मना सहितं सोपधि । तत् सौहृदं मैत्र्यं येषां तैः । तैरन्तरेप्सुभिः । "कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवम्" इत्यमरः । विलोभितो वञ्चितः । क एवामन्दधीः प्राज्ञः । विस्रम्भं विश्वासं 'समौ विस्रम्भविश्वासा'वित्यमरः । इयात् 'इण् गतौ' लिङ् गच्छेत् । मिथःप्रेमसहनं समर्थनीयमन्तरेप्सव इति समर्थितमिति काव्यलिङ्गमलङ्कारः ॥ १४ ॥

**समक्षमालोक्य विपक्षलालनं मृदु प्ररूढं हृदि वोढुमक्षमा ।**
**तव प्रिया निर्घृण पश्य तिष्ठति त्वदाश्रयाश्रित्य**
**लतामवाङ्मुखीः ॥ १५ ॥**

**समक्षमिति** ॥ हे निर्घृण निर्गतो घृणाया निर्घृणस्तत्सम्बुद्धिः । "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः । त्वदाश्रया त्वमाश्रयो यस्याः सा तथा । तव प्रिया । मृदु कोमलं यथा तथा सरसमिति यावत् ।

विपक्षस्य प्रतिकामिनीजनस्य लालनम् । प्ररूढं बद्धमूलं 'प्ररूढो बद्धमूले स्यात्' इति कविदर्पणः । सुदृढं समक्षं प्रत्यक्षं 'प्रतिपरसमनुभ्योऽक्ष्ण' इति अक्षिशब्दाट्टच् । आलोक्य हृदि वोढुं धर्तुमक्षमा असमर्था सती लतामाश्रित्य अवाङ्मुखी अधःकृतमुखी तिष्ठति । 'ष्ठा गतिनिवृत्तौ' लट् । पश्य 'दृशिर् प्रेक्षणे' लोट् । प्रेक्षस्व । तिष्ठतेर्दृशेश्च तिष्ठपश्यादेशौ 'पाघ्राध्मेत्या'दिना । अत्र समक्षं विपक्षलालनासहनस्य हेतोरवाङ्मुखत्व-लक्षणहेतुमता सह वर्णनाद्धेतुरलङ्कारः ।। १५ ।।

**अमूषु भृङ्गाः सुरभिष्वधोदृशो**
**न हन्त निश्वासमहोष्मतापिताः ।**
**करस्थकेलीकलितासु साञ्जनाः**
**पतन्त्यमी सन्ततमश्रुबिन्दवः ।। १६ ।।**

**अमूष्विति** ।। हे निर्घृण! तवेत्यनुवर्तते । अधोदृशोऽधःकृतदृष्टेः प्रियायाः । अमूषु अस्मदपेक्षया विदूरस्थासु करस्थाः केलीकलिताः क्रीडार्थं सम्पादिताः कलिताः तत्कालविकसत्कुसुमनिकुरम्बरूपास्तासु सुरभिष्वपि परिमलयुक्तास्वपि निश्वासस्य यो महोष्मा महोष्णिमा तेन तापिताः सन्तो भृङ्गाः न पतन्ति हन्त । हन्तेति विषादे । किञ्च, साञ्जनाः । अञ्जनेन नयनयोरनुलिप्तकज्जलेन सहिताः । अमी अश्रुबिन्दवो नयनजलकणाः पतन्ति । अत्र समर्थनीयं भृङ्गापतनं निश्वासमहोष्मतापिता इति समर्थित-मिति काव्यलिङ्गमलङ्कारः ।। १६ ।।

**मुखं बहुप्रेम सरागमाविलं घनोऽपि**
**निश्वास इव स्खलन् कुचः ।**

**इयं बतायस्ततयातिकर्शिता तनुः**
**किमाशेव युवन्नुपेक्ष्यते ।। १७ ।।**

**मुखमिति** ।। हे निर्घृण! तव प्रियाया बहुः प्रेमा स्नेहो यस्य तत् बहुप्रेम । सरागं सकान्ति । 'रागो रक्तेऽनुरागे च त्विषि वर्णान्तरेऽरुणे' इति शब्दरत्नाकरः । मुखमाविलं कलुषं 'कलुषोऽनच्छ आविल' इत्यमरः । आसीद् घनोऽपि निरन्तरोऽपि । कुचो निश्वास इव स्खलन्नासीत् । इयं तनुः शरीरम् आयस्ततया विरहतापेनायासयुक्ततया । आशेव वाञ्छेवातिकर्शिता तनूकृता । बत खेदे । एवमपि हे युवन्! अनिरुद्ध! । इयं प्रिया त्वया । किमित्युपेक्ष्यते । कस्मादुपेक्षाविषयो भवतीत्यर्थः । उपमालङ्कारः स्पष्टः ।। १७ ।।

**सुदुस्सहत्वं सुतनोर्मनोयुजो**
**हृदि स्थितो वेद भवत्पितामहः ।**
**तमेव बाला शरणं गता गुरुं पुरैव**
**नूनं समुपैति निर्वृतिम् ।। १८ ।।**

**सुदुस्सहत्वमिति** ।। सुतनोः स्त्रिया मनोरुजो मनोरोगस्य 'स्त्रीरुग्रुजाचोपतापरोगव्याधिगदामया' इत्यमरः । सुदुस्सहत्वं सर्वथाऽसहमानत्वं हृदि स्थितो भवत्पितामहः श्रीकृष्णो वेदेति तमेव कृष्णं गुरुम् । इयं बाला शरणं रक्षितारं 'शरणं गृहरक्षित्रोः' इत्यमरः । गता 'कर्तरि क्तः' प्राप्तवती । निर्वृतिं सुखं समुपैति पुरा निश्चयेन प्राप्स्यति 'यावत्पुरा निपातयोर्लडिति' भविष्यदर्थे लट् । नूनं निश्चयेन निर्वृतिं प्राप्स्यतीति वितर्कयामीत्युत्प्रेक्षा । 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश' इत्यालङ्कारिकाः ।। १८ ।।

पूर्वश्लोकोक्तं परचित्तपरिज्ञानादिकमुपपादयन्ती तत्प्रसङ्गोपस्थापितमहिमानं भगवन्तं नमति—

**नमोऽस्तु तस्मै जनवृत्तिसाक्षिणे क्रियानुरूपं फलभेददायिने ।**
**सदाप्तकामाय धिगस्तु मानितां परं पराधीनसुखत्वमप्यतः**
**॥ १९ ॥**

**नम इति** ॥ जनानां या वृत्तिर्वर्तनं तस्याः साक्षिणे साक्षाद् द्रष्ट्रे क्रियानुरूपं कर्मानुगुणं यथा तथा फलभेदात् फलविशेषात् दातुं शीलमस्येति फलभेददायी तस्मै । 'भेदो विशेषो व्यावृत्तावुपजापे विदारण' इति केशवः । सदा 'सर्वस्यसोऽन्यतरस्यां दि' इति सः सर्वदा आप्ताः कामाः काम्यमाना येन स तथोक्तः । 'कृत्यल्युटो बहुलम्' इति कामः कर्मणि घञ् । अत्र 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधः । 'अनाचमिक-मिवमीना-मिति वक्तव्यम्' इति वचनान्न भवति । तस्मै भगवते नमोऽस्तु । परन्तु मानितां धिक् । 'उभसर्वतसोः कार्याधिगुपर्यादिषु त्रिषु । द्वितीया-म्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते' इति धिगित्यव्यययोगे द्वितीया । मानिताया निन्दास्त्वित्यर्थः । 'धिङ्निर्भर्त्सननिन्दयोः' इत्यमरः । अतः पराधीनसुखमपि 'धिगस्तु तृष्णातरलं भवन्मन' इत्याद्याः श्रीहर्षादिप्रयोगा एवमेव व्याख्याताः ॥ १९ ॥

**कुमार धन्योऽसि यदीदृशः सुत[१]स्तदस्तु ते**
**स्वस्ति च पालय स्त्रियम् ।**
**इति स्म तद्दृष्टिपथेन शास्ति तं**
**प्रमोदिनं सा च निरश्वसीद्वधूः ॥ २० ॥**

---

१. 'पुमान्' इति पाठान्तरम् ।

**कुमारेति** ।। हे कुमार अनिरुद्ध त्वं धन्यः पुण्यवानसि । 'धन्यः पुण्यवति त्रि स्यात्' 'सुकृती पुण्यवान् धन्य' इति केशवामरौ । यद्यस्मादीदृशः सुतः पुत्रः तत्तस्मात्ते । स्वस्ति क्षेमोऽस्तु । स्वस्तियोगे 'नमःस्वस्ती'त्यादिना चतुर्थी । 'स्वस्त्याशीः क्षेमपुण्यादौ' इत्यमरः । त्वं च स्त्रियं पालय 'पा रक्षण' इत्यतो लोट् । रक्ष इत्येव तद्दृष्टिपथे तस्याः स्त्रियाः दृष्टेः पन्था मार्गस्तद्दृष्टिपथस्तस्मिन् । 'ऋक्पूरब्धूः पथामानक्ष' इति अप्रत्ययः । प्रमोदिनं तमनुशास्ति स्म 'लट्स्म' इति लिटोऽपवादो लट् । अनुशशास तदा सा च वधूर्निरश्वसीत् 'श्वस प्राणने' लुङ् । निश्वासं कृतवती । 'कुमार धन्योऽसि यदीदृशः पुमान्' इति पाठस्तु सुगमः ।। २० ।।

**तदागृहाभ्यागततत्सखीपुरस्कृतां सपत्नीस्रजमेष पादयोः ।**
**निधाय नम्रः शिरसा सकोपया तया परासे**
**परकीयनिस्स्पृहम् ।। २१ ।।**

**तदेति** ।। तदा तस्मिन् काले गृहं स्वावस्थानभूमिं लतागृहं वा प्रत्यभ्यागता या सखी सा च सा सखी च तत्सखी तस्याः पुरस्कृतां पुरोऽग्रेकृतां 'नमस्पुरसोर्गत्योः' इति सत्वम् । रचिताम् । तत्सखीत्यत्र 'प्रातिपदिकस्य ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषाया अनित्यत्वस्य 'शक्तिलाङ्गले'त्यत्र घटघटिग्रहणेन वैय्याकरणैरुक्तत्वान्न 'राजाहस्सखिभ्यष्टच्' । सपत्नीस्रजं सपत्न्याः । स्रजं सपत्न्यर्थं निर्मितां पुष्पमालां पादयोर्निधाय शिरसा नम्रोऽप्येषोऽनिरुद्धः । सकोपया तया सेर्ष्यया नायिकया परकीयवस्तुनि निर्गता स्पृहा काङ्क्षा यस्मिन् कर्मणि तद्यथा तथा । परासे 'असुक्षेपणे' इत्यतः कर्मणि लिट् । परास्तः ।। २१ ।।

**किमङ्ग बाल्यादपथो यियासितस्त-**
**मित्युपालभ्य पुनस्समानतम् ।**
**सखीमुखे दृष्टिरकारि तच्छिरस्यल-**
**क्तकाकारनवं तया पदम् ।। २२ ।।**

**किमङ्गेति** ।। अङ्गेति सम्बोधनेऽव्ययम् । 'स्युः प्याड्पाडङ्गहैहेभोः' इत्यमरः । अनिरुद्ध! त्वया अपथः अमार्गः 'वाटः पथश्च मार्गश्च' इति त्रिकाण्डशेषः । अनेन 'अपथं नपुंसकम्' इति सूत्रादपथमिति क्लीबतया निर्देशः कर्तव्य इति चोद्यं निरस्तम् । सूत्रे पथिशब्दस्य कृतसमासान्तस्य नञा समासे नपुंसकत्वमिति तात्पर्यात् । अत्र अपथशब्दोऽकारान्त उक्त-कोशसिद्ध इति न कोऽपि दोषः । बाल्याद् बालभावात् । यियासितः यातुमिष्टो गमनेच्छाविषयतां प्राप्तः किम् । इति प्रकारेण पुनःसमानतमनिरुद्धं शिरसा नम्र इत्युक्तत्वात्पुनरित्युक्तम् उपालभ्य तया प्रमदया सखीमुखे सख्या वक्त्रे दृष्टिर्वीक्षा । अकारि । नायकसङ्घट्टनजनितप्रमदातिशयादिति भावः । तच्छिरसि अनिरुद्धस्य मस्तके अलक्तकस्याकृत्या आकारेण नवं नूतनं पदमङ्घ्रितलचिह्नं चाकारि करोतेः कर्मणि लुङ् कृतम् । तच्छिरस्य-लक्तकाकार नवमिति प्रयोगो 'दया चेद्बाल इति मय्यपरित्याज्य एव त' इति प्रयोग इव द्रष्टव्यः । कोपलक्षणभावशान्तिरत्र वर्णिता ।। २२ ।।

**सरस्समीरे सुरभौ मनोहरे लतागृहे पक्वफलेषु चाद्रिषु ।**
**सुधोपमे कोटरजे मधुद्रवे विसस्मरुर्नागरभोगमङ्गनाः ।।२३।।**

**सर इति** ।। अङ्गनाः सरस्सम्बन्धिनि समीरे सुरभौ परिमलोपेते 'सुरभिर्मधुमासेऽपि वसन्तर्तावथ त्रिषु । सौम्ये सुगन्धौ' इति दर्पणः ।

सतीति संयोज्यम् । लतानां गृहं लतागृहं तस्मिन् मनोहरे सति । अद्रिषु वृक्षेषु 'अद्रिः शैले द्रुमेऽर्के च' इति शब्दरत्नाकरः । पक्वानि फलानि येषां ते तथोक्तास्तेषु च सत्सु । कोटरजे कोटरान्निष्कुहाज्जाते 'निष्कुहः-कोटरं वा ना' इत्यमरः । 'पञ्चम्यामजाता'विति जनेर्डः । मधुद्रवे मद्यरसे 'मधुमद्ये पुष्परसे रसे द्रव' इति च दर्पणः । सुधोपमे । उपमीयत इत्युपमा 'आतश्चोपसर्गे' इति कर्मण्यङ्प्रत्ययः । सुधा उपमा यस्य द्रवस्य तत्तस्मिन् सति च । नागरभोगं नगरे भवो नागरः स चासौ भोगः सुखं च तं विसस्मरुः 'स्मृ चिन्तायाम्' लिट् विस्मृतवत्यः । 'अधीगर्थदयेशां कर्मणी'त्यादौ शेष इत्यनुवृत्तेरिह च शेषत्वविवक्षाया अभावात् कर्मणि द्वितीयैव । अत एव 'पद्मे त्वं नयने स्मरामि' इत्यादिप्रयोगः । समीरसौरभानुभवादेर्हेतोर्विस्मृतिलक्षणहेतुमता सह वर्णनाद्धेतुरलङ्कारः ॥२३॥

**अवेक्ष्य शोषं कुसुमेषु तीक्ष्ण-**
**तामहस्सु पूष्णः क्लमवारिपूर्णताम् ।**
**वधूशरीरेषु शरीरजात्मजो विहर्तु-**
**मैच्छत्सलिलेषु सादरम् ॥ २४ ॥**

**अवेक्ष्येति** ॥ शरीरजात्मजः शरीरजः प्रद्युम्नस्तदात्मजस्तत्सुतोऽनिरुद्धः । कुसुमेषु पुष्पेषु 'पुष्पं प्रसूनं कुसुमं सुमम्' इत्यमरः । शोषं शोषणं म्लानतामहस्सु पूष्णः सूर्यस्य तीक्ष्णतां, वधूनां शरीराणि तेषु क्लमवारिभिः श्रमागतस्वेदबिन्दुभिः पूर्णतां चावेक्ष्य, सलिलेषु सादरं यथा तथा विहर्तुं वधूजनैरिति शेषः ऐच्छत् इष इच्छायाम् 'इषगमियमां छ' इति छादेशो लङ् ॥ २४ ॥

**सुफेन मन्दस्मितसाधुसत्कृतिः सरित्सखीदत्ततटोपलासना ।**
**प्रभञ्जनप्रेरितमन्दवीचिभिश्चकार तासां मृदुपादशोधनम्**
**॥ २५ ॥**

**सुफेनेति** ॥ शोभनः फेनो डिण्डीर एव मन्दस्मितं तेन साध्वी सत्कृतिः सत्कारो यस्याः सा तथोक्ता । दत्तानि तटोपला एवासनानि यया सा तथोक्ता । सरिदेव सखी सरित्सखी । प्रभञ्जनेन वायुना प्रेरिता या वीचयस्ताभिः । करैरिति लभ्यते तासां वधूनां मृदु यथा तथा पादशोधनं पादप्रक्षालनं चकार । अत्र रूपकालङ्कारः ॥ २५ ॥

**कृतोपचारा कलहंसकन्यकाकलारुतव्याहरणैर्मुहुर्मुहुः ।**
**सखी तदा प्रत्युपचारगोचरा समं समाश्लिष्यत**
**ताभिराहृता ॥ २६ ॥**

**कृतेति** ॥ कलहंसानां कादम्बानां याः कन्यकास्ता एव कन्यकास्तासां कलारुतानि अव्यक्तमधुरवाशितान्येव व्याहरणानि भाषणानि तैर्मुहुर्मुहुः कृत उपचारः सत्कारो यया सा कृतोपचारा सती समं मिलित्वा ताभिः सत्कृतप्रमदाभिरादृता सती समाश्लिष्यत 'श्लिष आलिङ्गने' कर्मणि लङ् । समालिङ्गिता कलारुतव्याहरणैरिति रूपकालङ्कारः ॥ २६ ॥

**घनस्तनीनां जघनाभिघाततश्चला-**
**चलात्मा सलिलाशयः कृतः ।**
**जलस्वभावान्न तदद्भुतं यतो**
**विटोऽपि तत्सङ्गममेत्य कम्पते ॥ २७ ॥**

**घनेति** ।। घना निरन्तराः स्तना यासां तास्तथा तासां घनस्तनीनां 'घनं निरन्तरं सान्द्रम्' इत्यमरः । 'स्वाङ्गाच्चोपसर्जनात्' इति ङीष् । स्त्रीणां जघनानां कटिप्रदेशानामभिघातः सम्बन्धस्तस्मात् सलिलाशयो जलाधारस्तटाकादिश्चलाचलात्मा चलतेर्यङन्ताद् अचि 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य' इत्यभ्यासस्यागागमः । भृशं चञ्चलस्वरूपः कृतः । तच्चलाचलात्मताकारणं लडयोरभेदाज्जडस्वभावादद्भुतमाश्चर्यं न भवतीत्यर्थः । समर्थयते— **यत इति** ।। विटोऽजडोऽपीति यावत् अविटोऽपीति वाच्छेदः । साधुरपि तत्सङ्गममेत्य कम्पते । 'कपि चलने' लट् । अत्र जडस्वभावस्य चलत्वं स्वभाव इत्यनद्भुतमुक्तं तत्समर्थितं विटोऽपीति । काव्यलिङ्गमलङ्कारः । अविट इति च्छेदे काव्यार्थापत्तिर्वा-लङ्कारः ।। २७ ।।

**वराङ्गनानां प्लवनेन पीडिते जिगीषया वेगजुषामुरस्स्थले ।**
**बभूव वक्षोरुहमण्डलश्लथन्नवाङ्गरागारुणितं सरोजलम् ।।२८।।**

**वराङ्गनेति** ।। वेगजुषां वेगवतीनां वराङ्गनानां युवस्त्रीणां जिगीषयान्योन्यं जेतुमिच्छया सम्मुखजनितेनेति शेषः । प्लवनेन जलोत्तानविहारेण । उरस्थले पीडिते सति सरोजलं सरस उदकम् । वक्षोरुहाः कुचास्तेषां मण्डलं बृन्दं तस्मात् श्लथन् विगलन् यो नवो नूतनोऽङ्गरागः कुङ्कुमपङ्काद्यनुलेपनं तेनारुणितं 'तत्करोतीति' ण्यन्तात् क्तप्रत्ययः । 'तदस्य सञ्जातम्' इतीतच्प्रत्ययो वा । बभूव ।। २८ ।।

**पयस्सु रेखात्रयचित्रिते गले**
**मुकुन्दपौत्रस्य मुखं निमज्जिते ।**

**अवाप नारीमुखपद्ममध्यगं प्रफुल्ल-**
**नीलोत्पलनिर्विशेषताम् ।। २९ ।।**

**पयस्स्विति** ।। रेखात्रयचित्रिते रेखाणां त्रयेण चित्रिते सञ्जातचित्रे मुकुन्दपौत्रस्यानिरुद्धस्य गले पयस्सु निमज्जिते प्रकरणात् नारीभिर्मग्नतां प्रापिते सति । मुखं नारीमुखपद्ममध्यगं नारीणां मुखान्येव पद्मानि तेषां मध्यं गच्छतीति मध्यगम् । 'अन्यत्रापि दृश्यत' इति गमेर्डः । मध्ये वर्तमानं प्रफुल्लनीलोत्पलनिर्विशेषतां प्रफुल्लानि विकसितानि च तानि नीलोत्पलानि च तेषां निर्विशेषतां निर्भेदतां नीलोत्पलशोभामित्यर्थः । अवाप 'आप्लृ व्याप्तौ' लिट् । ननु कथं प्रफुल्लानीति ? यावता 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघा' इति उपसर्गविरहितादेव (परस्य?) ञिफला विशरण इति धातोः (तुज?) क्तस्य लत्वं निपातितम् । उपसर्गात्परश्चायमुच्यते ञिफलाविशरण इति धातोः 'ञितः क्तः' इति क्तप्रत्यये 'आदितश्च' इतीण्निषेधेऽनुपसर्गादिति क्तस्य लत्वे च फुल्लशब्दे सिद्धे तस्य प्रादिसमासः । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसञ्ज्ञा इति प्रकृष्टानि फुल्लानीत्यत्र कृषधातुं प्रत्युपसर्गत्वेऽपि फलधातुं प्रति तदभावात् । युक्तं समासे लत्वम् । प्रकर्षेण फुल्लन्तीति विकसन्तीति 'फुल्ल विकसन' इति धातोः पचाद्यचि वा रूपमित्यमरव्याख्याने ।। मुखपद्मेति रूपकालङ्कारः ।। २९ ।।

**अयाचत ग्राहयितुं ह्रदोत्थितं सरोजमेका कृतविप्रियं प्रियम् ।**
**अनाययन्तं ततमत्यमर्षिणी[१] पुनः पदाहत्य शिरस्यनन्दयत्**
**।। ३० ।।**

१. 'तमत्यममर्षिणी' इति पाठान्तरम् ।

**अयाचतेति** ।। एका प्रमदासु काचत् हृदोत्थितं सरोजं स्वात्मनेति शेषः । ग्राहयितुं ग्रहेर्ण्यन्तात्तुमुन् । उपादापयितुं कृतं विप्रियमपराधो येन तं तथोक्तम् । प्रियं भर्तारमनिरुद्धमयाचत । 'याचृ याञ्चायाम्' लङ् । 'अकथितं च' इति द्विकर्मकत्वम् । अनाययन्तं न नाययन्ननाययं-स्तमनाययन्तमिति नयतेर्णिचि रूपम् । स्वात्मनेत्यत्रापि सम्बध्यते । पद्ममप्रापयन्तमित्यर्थः । अत एवात्यमर्षिणी अत्यन्तकोपवती पुनः शिरसि पदा पादेनाहत्य प्रताड्य ततं विस्तृतं यथा तथानन्दयत् 'टु नदि समृद्धौ' इत्यतो ण्यन्ताल्लङ् । अत्यर्थमतोषयत् । अयाचत ग्राहयितुमिति प्रथमपादे, अनानयन्तं तु तमत्यमर्षिणीति तृतीयपादे क्वचित्पाठो दृश्यते । तत्र ग्राहेण नक्रेण युतं संवलितमनानयन्तं पद्मानयनमकुर्वन्तं तु तमनिरुद्धमनन्दयदिति व्याख्यानं द्रष्टव्यम् । इतरत्समानम् ।। ३० ।।

**मनोज्ञगोपालकवेषभूषणं पयोभिरुद्दिश्य मुहुर्मुरद्विषम् ।**
**अतर्पयद्गूढमुपायदुर्ग्रहं वशं निनीषन्त्यनिरुद्धमुत्तमा ।।३१।।**

**मनोज्ञेति** ।। उत्तमा वरवर्णिनी । उपायैर्दुर्ग्रहं नानाविधवशीकरणोपायैरपि वशीकर्तुमशक्यम् । मनोज्ञानि मञ्जुलानि गोपालकस्य वेषः परिक्रिया भूषणान्यलङ्काराश्च यस्य तं मनोज्ञगोपालकवेषभूषणमनिरुद्धं वशं निनीषन्ती सती गूढं हृदये स्थितमपि संवृतं मुरद्विषं श्रीकृष्णमुद्दिश्य पयोभिर्मुहुः पुनः पुनरतर्पयत् । अपेक्षितार्थसिद्धये स्वेष्टदेवतातर्पणं लोके दृश्यते । इयं च युवतिरनिरुद्धं वशं नेतुमिच्छन्ती श्रीकृष्णमुदकाञ्जलिविहारव्याजेनातर्पय-दिवेति गम्योत्प्रेक्षा । 'तृप प्रीणने' इत्यतो ण्यन्ताल्लङ् । 'वेषः क्रियायामाकल्प' इति केशवः ।। ३१ ।।

**इति स्म तापः सुदृशां सविभ्रमं**
**बहिर्भवो बाह्यशरीरमुज्झति ।**
**जलाप्लवे तत्र महोदयः परो**
**मनोभवः सूक्ष्मशरीरमस्पृशत् ।। ३२ ।।**

**इतीति** ।। सुदृशां स्त्रीणां सविभ्रमं सविलासं जलाप्लवे जलोत्तानविहारे सति बहिर्भवो बाह्यशरीरानुविद्धस्तापः । बाह्यशरीरं परिदृश्यमानं स्थूलदेहमुज्झति 'उज्झ उत्सर्गे' त्यजति स्म । उज्झाञ्चकार । तत्र तस्यां दशायां महोदयो महानुदयो यस्य स तथोक्तो मनोभवो मन्मथात्मा परस्तापः सूक्ष्मशरीरमन्तरङ्गमिति यावत् ।। ३२ ।।

**अथोत्तरन्तीभिरमूभिरापगा विहीयमाना हृतहारिवारिजा ।**
**दृशोऽञ्जनं कुङ्कुममङ्गतः कचात् स्रजश्च हृत्वा**
**धृतमौनमास्थिता ।। ३३ ।।**

**अथेति** ।। अथ जनविहारानन्तरमापगा सरित् उत्तरन्तीभिस्तटमारोहन्तीभिरमूभिः कृतजलक्रीडाभिः प्रमदाभिर्विहीयमाना त्यज्यमाना हृतान्यपहृतानि हारीणि मनोहराणि वारिजानि यस्याः सा हृतहारिवारिजा सती दृश उत्तरन्तीनां नयनाद् अञ्जनं कज्जलम् अङ्गतः । आद्यादित्वात्तसिः । वक्षआद्यवयवात् कुङ्कुमं कचात् केशबन्धात् । 'कचः शुष्कव्रणे केशबन्धे पुत्रे च गीष्पतेः' इति हैमः । स्रजो मालाश्च हृत्वापहृत्य धृतमौनं यथा तथा आस्थिता । गत्यर्थेत्यादिना कर्तरि क्तः । आस्थितवती । अत्र पद्ममात्राहरणेन बहूनामञ्जनकुङ्कुममालानामपहरणं निबध्यत इति परिवृत्तिरलङ्कारः । 'परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः । जग्राहैकं

शरं मुक्त्वा कटाक्षान् स रिपुश्रियाम् ।।' इति सोदाहरणं तल्लक्षणाभिधानात् । अवेक्ष्येत्यादि दशश्लोक्या महाकाव्याङ्गभूतां सलिलक्रीडामवर्णयत् । 'उद्यानसलिलक्रीडामधुपानरतोत्सवैः' इति दण्डिवचनात् ।। ३३ ।।

**बभुर्गृहीताहतचारुवाससः सुधौतमुक्ताभरणा वराङ्गनाः ।**
**पुरं विशन्त्यः शुचिकाशसंवृताः सहंसमाला इव**
**सिन्धवोऽर्णवत् ।। ३४ ।।**

**बभुरिति** ।। गृहीतानि परिगृहीतानि आहतानि साधुमृष्टानि चारूणि मनोहराणि वासांसि वस्त्राणि याभिस्तास्तथोक्ताः । सुधौतानि अत्यन्त-शुद्धानि मुक्ताभरणानि यासां तास्तथोक्ताः । "धाव् गतिशुद्ध्योः" इत्यतो निष्ठायां 'यस्य विभाषा' इतीडभावो 'छ्वोः शूडनुनासिके च' इत्यूठि "एत्येधत्यूठ्सु" इति वृद्धौ धौतेति रूपम् । पुरं द्वारकां विशन्त्यः प्रविशन्त्यो वराङ्गनाः स्त्रियः । अर्णवं प्रविशन्त्यः । शुचिकाशसंवृताः । शुचीनि पाण्डराणि काशानि शरत्कुसुमानि तैः संवृताः संवलिताः । सहंसमाला हंसमालाभिः सहिताः सिन्धवो नद्य इव बभ्रुः । 'भा दीप्तौ' लिट् । दीप्तवत्यः । उपमालङ्कारः ।। ३४ ।।

**ततो विवस्वान्मृदुरश्मिरञ्जितं प्रलम्बिनं पादपयोरुहावधि ।**
**अनार्द्रतामात्रकरः समीरणः शिरोजभारं**
**व्यधुनोन्मृगीदृशाम् ।। ३५ ।।**

**तत इति** ।। ततो नगरप्रवेशोन्मुखानन्तरं समीरणो वायुर्मृगीदृशां मृगीणां दृगिव दृग्यासां तास्तथा तासाम् । विवस्वतः सूर्यस्य मृदुभिः कोमलै रश्मिभिः किरणै रञ्जितं पादपयोरुहं पादपङ्कजं तदवधि यथा तथा प्रलम्बिनं

लम्बमानं शिरोजभारं केशरूपम् ओढव्यं संहतान् कचानिति यावत् । अनार्द्रतामात्रं कर्तुं शीलमस्येति करोतेः 'कृञो हेतुताच्छील्यानुलोमेषु' इति अप्रत्ययः । न तु 'लुणनादिकर' इति मात्रञ्प्रत्ययः । स सन् व्यधुनोत् । 'धूञ् कम्पने' अकम्पयत् । परिशोषितवानित्यर्थः ।। ३५ ।।

**समुद्गिरन्श्वासमिवाधिकायतं**
**विमिश्रितौष्ण्यं किरणं पुनःपुनः ।**
**समस्पृशत्पश्चिमदिग्वधूमुखं**
**प्रभाकरः कम्र इवातिरागवान् ।। ३६ ।।**

**समुद्गिरन्निति** ।। अतिरागवान् कम्रः कामुक इव 'नमिकम्पिस्म्यजसकमहिंसदीपो र' इति कमे रप्रत्ययः । 'कम्रः कामयित' इत्यमरः । प्रभाकरः सूर्यः । विमिश्रितम् औष्ण्यमुष्णत्वं यस्य तम् अधिकायतम् अतिदीर्घं श्वासमिव किरणं पुनःपुनः समुद्गिरन् समुद्वहन् सन् । पश्चिमदिगेव वधूस्तस्या मुखमग्रभागं समस्पृशत् । 'स्पृश संस्पर्शे' लङ् स्पृष्टवान् । उपमालङ्कारः ।। ३६ ।।

**स्फुरत्पुरीगोपुरशृङ्गसङ्गिनं क्षणे परित्यक्तमहाद्रिमस्तकम् ।**
**सुवर्णपूर्णैरविशेषमातपं विलोकयामासुरधीरलोचनाः ।।३७।।**

**स्फुरदिति** ।। अधीरलोचनाश्चञ्चलाक्ष्यः स्त्रियः । स्फुरन्ति यानि पुरीगोपुरस्य करिकलभन्यायेन पुरद्वारस्य शृङ्गाणि शिखराणि तेषु सङ्गिनं संयोगिनम् । तस्मिन्नेव क्षणे परित्यक्तो महाद्रेर्मस्तको येन स तथा तं सुवर्णपूर्णैरविशेषं विशेषरहितं सुवर्णपूर्णच्छायमित्यर्थः । आतपम् अस्तं गच्छतः प्रभाकरस्येति योज्यम् । विलोकयामासुः । 'लोकृ दर्शने' इत्यतो

ण्यन्ताल्लिट् । अवलोकितवत्यः । अत्रातपस्यैकस्य गोपुरशृङ्गाद्यनेकप्रदेशे वर्णनाद्विशेषालङ्कारः । "विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते । अन्तर्बहिः पुरः पश्चात् सर्वदिक्ष्वपि सैव मे ।।" इति तल्लक्षणाभिधानात् ।। ३७ ।।

**विमुच्य तैक्ष्ण्यं मदनस्य मार्गणेष्वहर्पतिः सत्वरमेष सर्पति ।**
**इतीव रुष्टाभिरपाङ्गविक्षतो गभस्तिमानास समस्तलोहितः**
**।। ३८ ।।**

**विमुच्येति** ।। एषोऽहर्पतिः । 'अहरादीनां पत्यादिषु वा रेफ' इति नकारस्य रेफः । सूर्यस्तैक्ष्ण्यं स्वांशुषु विद्यमानं खरत्वं मदनस्य मार्गणेषु बाणेषु विमुच्य निधाय सत्वरं त्वरया सहितं यथा तथा सर्पति 'सृप्लृ गतौ' लट् । इतीव इति हेतोरिवेति हेतूत्प्रेक्षालङ्कारः । रुष्टाभिः (आदि कर्मणि क्तः) । 'कर्तरि च' इति कर्तरि क्तप्रत्ययः । अधीरलोचना इति विपरिणामेनान्वयः । अपाङ्गैर्नेत्रान्तैः । विक्षतो विशेषेण क्षतिं प्राप्तो गभस्तिमान् अंशुमान् सूर्यः समस्तलोहितो रक्तः समस्तमण्डलेऽपि पाटलिमानं प्राप्तवानित्यर्थः । आस तिङन्तप्रतिरूपकमव्ययम् । बभूव । यद्वा 'असगतिदीप्त्यादानेषु' इति धातोर्लिटि रूपम् । दिदीप इत्यर्थः ।। ३८ ।।

**अथ प्रसार्यग्रकरा परं मृदुर्जगाम गोत्रं निजजन्मगोत्रतः ।**
**सुतप्तचामीकरमण्डलोज्ज्वला द्विजेन्द्रकन्येव तनुस्त्रयीतनोः**
**।। ३९ ।।**

**अथेति** ।। अथानन्तरं मृदुः कोमला त्रयीतनोः सूर्यस्य 'अंशुमाली

त्रयी तनुः' इत्यमरः । तनुर्मूर्तिः । प्रसारि प्रसरणशीलम् अग्रं प्रान्तो यस्य स तथोक्तः । करो यस्याः सा प्रसार्यग्रकरा सुतप्तानि पुटेन निर्मलानि चामीकराणि सुवर्णानि तेषां मण्डलं सुवर्णनिर्मिताभरणानीति यावत् । तेनोज्ज्वला दीप्यमाना द्विजेन्द्रकन्येव प्रसारिणोऽग्रा अधिकाः कराः किरणा यस्यास्सा तथोक्ता । सुतप्तचामीकरमिव स्थितं मण्डलं बिम्बं यस्यास्सा तथोक्ता सती । निजजन्मनो यद्गोत्रं कुलं तस्मात् परं गोत्रं भर्तृकुलमन्यत्र गोत्रः पर्वतस्तं जगाम । 'गोत्रो ना भूधरे मेघे क्लीबे नाम्नि कुले बल' इति केशवः । 'उत्प्रतिभ्यामन्त्रिसर्तेरुपसङ्ख्यानम्' इति वृत्तिकारवचनं भाष्यविरोधादयुक्तमिति वैय्याकरणा इति प्रागुक्तमेवेति प्रपूर्वादपि सर्तेर्णिनिरुपपद्यते । 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत् ।।' इति हैमः । उपमालङ्कारः ।। ३९ ।।

**निजात्मजस्फूर्तिविरोधिनं रविं रुषाम्बुराशिर्ग्रसते हठादिति ।**
**शरीरभाजामुदियाय सम्भ्रमः प्रयाति लोकान्तरमंशुमालिनि**
**।। ४० ।।**

**निजेति** ।। अम्बुराशिः समुद्रः । निजात्मजस्य स्वीयपुत्रस्य या स्फूर्तिः स्फुरणं प्रकाशः । तस्या विरोधिनं रविं रुषा रोषेण हठात्प्रसभात् 'प्रसभं तु बलात्कारो हठ' इत्यमरः । ग्रसते । "ग्रसु अदने" निगिरतीत्यर्थः । इत्युक्तरूपेण । अंशुमालिनि सूर्ये लोकान्तरं प्रयाति अस्तं गच्छति सति । शरीरभाजां प्राणिनां सम्भ्रमः संवेगः कर्मसु त्वरणः । उदियाय । 'इण् गतौ' लिट् । उदितः ।। ४० ।।

**महः स्मरन्तः परमस्तविक्रियं**
**समस्तसाक्षि स्फुटमर्कमण्डले ।**
**प्रजल्प्य रोचिष्पतिदेवतामृचं**
**द्विजन्मवर्या मुमुचुर्जलाञ्जलीन् ।। ४१ ।।**

**मह इति** ।। द्विजन्मवर्या अर्कमण्डले स्फुटं व्यक्तं समस्तसाक्षि । समस्तस्य साक्षाद्द्रष्टृ । अस्ता निरस्ता विक्रिया विकारा यस्य तदस्तविक्रियं परं महस्तेजः । नारायणाभिधानं ज्योतिरित्यर्थः । स्मरन्तः सन्तः रोचिष्पतिदेवतां रोचिष्पतिः सूर्यः स देवता यस्याः सा रोचिष्पतिदेवता 'इसुसोः सामर्थ्ये' इति षत्वम् । तामृचं गायत्रीं प्रजल्प्य साधूच्चार्य जलाञ्जलीन् मुमुचुः । 'मुच्लृ मोक्षणे' लिट् । दत्तवन्त इति यावत् । 'गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः । भारतिज्ञानरूपत्वाद् भर्गो ध्येयोऽखिलैर्जनैः । प्रेरकोऽशेषबुद्धीनां स गायत्र्यर्थ ईरित' इति वचने-नान्तराद्यधिकरणन्यायेन च परममुख्यवृत्त्या भगवत्पराया अपि गायत्र्या मुख्यवृत्त्या सूर्यार्थकत्वमपि 'कल्पनोपदेशात्' इत्यनुमतमितिभावेन रोचिष्पति देवतामित्युक्तम् ।। ४१ ।।

**प्रविष्टनीडेषु वयस्सु शार्वरीस्पृहोपनीतद्रुमबीजशालिषु ।**
**वियोगभीतिस्खलितारुताभवत् प्रियाङ्गमालिङ्ग्य रथाङ्गवल्लभा ।। ४२ ।।**

**प्रविष्टेति** ।। शार्वरी शर्वर्यो भवा या स्पृहा लिप्सा तयोपनीताः समाहृता द्रुमाणां बीजानि शालयः सूक्ष्मव्रीहयश्च यैस्तेषु वयस्सु पक्षिषु प्रविष्टानि स्वप्रवेशकर्मीकृतानि नीडानि कुलाया यैस्तेषु सत्सु । रथाङ्गस्य

चक्रवाकस्य वल्लभा प्रिया चक्रवाकी प्रियाङ्गं प्रियास्याङ्गमालिङ्ग्य वियोगाद्विरहात् भीतिर्भयं तया स्खलितमारुतं 'तिरश्चां वाशितं रुतम्' इत्यमरः । यस्याः साभवत् । ननु कथं शार्वरीति प्रयोगः । यावता 'कालाट्ठञि'ति ठञा भाव्यमिति चेत् । अत्र शरणदेवः 'कालाट्ठञि'ति सूत्रे कालादिति विभागाश्रयणात् 'विभाषा रोगातपयोः' इत्यतो विभाषा-ग्रहणानुकर्षणादपवादविषयेऽपि क्वचिदुत्सर्गोऽभिनिविशत इति वचनाद्वा शर्वर्यां भवमित्यर्थेऽणपि भवतीत्याह । अत एव 'शार्वरस्य तमसो निषिद्धया' इति कालिदासप्रयोगः । 'अनुदितौ षडरागे'ति भारविप्रयोगः । अत एव च 'शार्वरं चान्धतमसे घातुके च' इति केशवामरौ । 'शार्वरं त्वन्धतमसे शार्वरो घातुकेत्यपि' इति विश्वश्च सङ्गच्छन्ते ।। ४२ ।।

**विशालमौशीरमधिश्रितावुभौ हृदिस्थमर्थं धृतरोमविक्रियौ ।**
**निदध्यतुः कश्चिदनन्यचेतसौ निशामुखे योगिवियोगिनौ चिरम् ।। ४३ ।।**

**विशालेति** ।। योगिवियोगिनौ योगीश्वरविरहिणावुभौ विशालं विपुल-मौशीरमासनं शयनं वा 'औशीरं पुनरासने । चामरे शयने दण्ड' इति विश्वकेशवौ । अधिश्रितावधिष्ठितौ धृता रोम्णो विक्रिया विकारो याभ्यां तौ धृतरोमविक्रियौ उत्पन्नरोमाञ्चौ । अनन्यचेतसौ न विद्यते अन्यद्विषयो यस्य तदनन्यत्तादृशं चेतो ययोस्तौ तथोक्तौ सन्तौ हृदिस्थं 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुगिति तिष्ठतेः कर्तरि क्तप्रत्ययश्च । कश्चिदर्थं ब्रह्मरूपं प्रमदारूपं वा किमपि वस्तु निशामुखे । चिरं निदध्यतुः । 'ध्यै चिन्तायाम्' लिट् । चिन्तितवन्तौ । नानार्थसंश्रयाच्छ्लेषालङ्कारः ।।४३।।

**सवर्णरागं गतरागमाकुलं विलोलमालारजसा शिरश्शुचि ।**
**कृशेन मध्येन चलत्सु निश्चलं बृहत्कुचाभ्यां विषमं**
**समं भृशम् ।। ४४ ।।**

**सवर्णेति** ।। यदुवंशवर्धनः । नन्द्यादित्वात्कर्तरि ल्युः । 'अनुदात्तेतश्च तलादेः' इति युज्वा । वर्धत इति वर्धनः । यदुवंशे वर्धन इति विग्रहः । उत्तरश्लोकेनान्वयः । श्रीकृष्णः सवर्णरागं वर्णं कुङ्कुमं तस्य रागो रक्तिमा तेन सहितं 'कुङ्कुमे घुसृणं वर्णम्' इत्यमरशेषः । 'रागोऽनुरागे मात्सर्ये रक्तवर्णे रजस्यपि' इति केशवः । गतो निर्गतो रागो मात्सर्यं यस्मात्तद्गतरागम् । विलोलाया मालाया रजसा परागेणाकुलं व्यासङ्गवत् । 'आकुलं जलसङ्कुले । त्रिषु स्याद्व्यासङ्गवती'ति दर्पणः । आकुलं पूर्णमिति वा । 'आकुलं भरितं पूर्णम्' इति हलायुधः । मालापुष्परजोधूसरमित्यर्थः । शिरसा सामस्तोत्रविशेषेण शुचि परिशुद्धं 'शिरो मूर्ध्नि पुनस्सैन्ये सामस्तोत्रान्तरेऽपि च' इति केशवः ।। ४४ ।।

**इति स्वकानां सुदृशामुरस्तटं मनो**
**मुनीनां च विशन् विलक्षणः ।**
**द्वयेऽपि तस्मिन्सकलाकलात्मनो**
**स्वयं चकाशे यदुवंशवर्धनः ।। ४५ ।।**

**इतीति** ।। प्रत्येकमेवम्भूतविशेषणोपेतं स्वकानां बन्धुभूतानां सुदृशां स्त्रीणां ज्ञानिनां च । उरस्तटं वक्षस्तलं मुनीनां मनश्च कलया शोभया सहितः सकलः । न कला अङ्कः कलङ्को यस्य स तादृश आत्मा स्वरूपं तेनोरस्तटे शृङ्गाररूपेण मुनिमनसि त्वकलात्मना निष्कलङ्करूपेण ।

विलक्षणो विशेषबलेन विरुद्धलक्षणो विशन् प्रविशन् तस्मिन्नुरस्तटमुनि-मनोरूपे द्वयेऽपि वस्तुनि स्वयमात्मना चकाशे 'काशृ दीप्तौ' लिट् । उल्ललासेत्यर्थः । सन्दानितकरूपकाव्यभङ्गीमापन्नस्य श्लोकद्वयस्यैक-वाक्यतयान्वयः । 'कला शोभाङ्ककलनासु च' इति कविदर्पणः । अङ्क-शब्दः कलङ्कवचन इति प्रसिद्धमिति निष्कलङ्कत्वं तदर्थः । द्वयेऽपि तस्मिन् सकलाकलात्मनोरिति पाठे सकलाकलात्मनोर्द्वये तस्मिन्नुरस्तट मुनिमनो-रूपेऽर्थे विशन् विलक्षणो गरुडध्वजश्चकाश इति व्याख्यानम् । स्वकाना-मित्यत्र स्वशब्दस्य बन्धुवाचितया 'स्वमज्ञातिधनाख्यायाम्' इति सर्वनाम-सञ्ज्ञकत्वाभावेन अकजप्रसक्त्या स्वार्थिककप्रत्ययस्य आमि सुडभावे । स्विकाश्च स्वकाश्चेति विग्रहे 'पुमांस्त्रिये'त्येकशेषत्वे च स्त्रीविशेषणत्वं मुनिविशेषणत्वं च युक्तमेव । यत्त्वत्र स्वकानामिति कथम् ? आत्मीयार्थत्वे सुदृग्विशेषणत्वेन प्रत्ययस्थादितीत्वेन 'आमि सर्वनाम्न' इति सुटा च भाव्यम् इति चोद्यं, तत्र केचित् 'मृनेर्मनोवृत्तिरिव स्विकायाम्' इति श्रीहर्षप्रयोगे स्याडागमाभाव इवात्रापि सुडभाव इति परिहारमाहुः । तन्न, दृष्टान्ता-सम्प्रतिपत्तेः । तत्राप्यसाधुत्वस्य वैय्याकरणैरुक्तत्वात् । यदपि, 'भस्त्रैषा-जाज्ञाद्वास्वा नञ्पूर्वाणामपि' इति श्रीहर्षप्रयोगसाधुत्वसमर्थनं; तद्दूषितं मनोरमायाम् । तस्मादुक्तचोद्यमस्मदुक्तरीत्यैव समाधातव्यमिति ।।४५।।

**अरन्ध्रसन्ध्याघनपाटलांशुका प्रचीयमानान्ततमश्शिरोरुहा ।**
**उदीयमानग्रहवेषविग्रहा विभाति कन्येव नवा निशीथिनी**
**।। ४६ ।।**

**अरन्ध्रेति** ।। नवा नूतना निशीथिनी रात्रिः । अरन्ध्रा निबिडाः सन्ध्याा घना मेघा अत एव पाटलं श्वेतरक्तमुंशकं सूक्ष्मवस्त्रं यस्यास्सा

तथोक्ता । 'श्वेतरक्तस्तु पाटल' इत्यमरः । 'अंशुकं वस्त्रमात्रे च सूक्ष्मवस्त्रोत्तरीययो'रिति केशवः । प्रचीयमानान्ततमश्शिलोरुहा प्रचीयमानानि प्रचयं वृद्दिं प्राप्यमाणानि वृद्धिं प्राप्नुवन्तीति यावत् अन्तानि रम्याणि तमांस्येव शिरोरुहाः केशा यस्याः सा तथोक्ता । ''अन्तोऽस्त्र्यवसिते कान्ते'' इति शब्दरत्नाकरः । 'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽति-मनोहरे' इति विश्वश्च । उदीयमानग्रहवेषविग्रहा उदीयमाना उद्यन्तो ग्रहा अङ्गारकादयस्त एव वेषाः शोभा यस्य स तथा तादृशो विग्रहो यस्याः सा तथोक्ताः । इण् गतावित्यतो दैवादिकाल्लुटश्शानच् कर्तरि । कन्येव विभाति । भा दीप्तौ लट् । राजते । व्यतानि कन्येति पाठे कालेनेति शेषः । व्यतानि अकारीति यावत् । रूपकानुप्राणितोपमालङ्कारः ।।४६।।

महाकाव्याङ्गं चन्द्रोदयं वर्णयति दिशेत्यादिचतुश्श्लोक्या—

**दिशा प्रतीच्या सहसानुरक्तया निगूहिते सद्द्युमणौ तपस्विनी ।**
**कराङ्कुरैश्चान्द्रमसैरणूद्गतैः सुरेन्द्रदिक्चन्द्रमुखी निरश्वसत्**
**।। ४७ ।।**

**दिशेति** ।। अनुरक्तया सायङ्काले मेघानुरागादनुरागयुक्तयैव प्रतीच्या दिशा प्रतीचीदिग्रूपया प्रमदया सत् साधु यथा तथा 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः । द्युमणौ सूर्ये नायके सहसा हठेन निगूहिते 'गुह संवरणे' इति धातोर्ण्यन्तान्निष्ठायाम् 'ऊदुपधाया गोह' इति उपधाया ऊत्वम् । आलिङ्गिते सति । तपस्विनी 'तपस्सहस्राभ्यां विनीनी' इति तपश्शब्दात् विनिप्रत्ययः । सुरेन्द्रस्य देवेन्द्रस्य दिक् प्राच्येव चन्द्रमुखी स्त्री अणूद्गतैः स्वल्पोद्गीर्णैश्चान्द्रमसैश्चन्द्रमस्सम्बन्धिभिः कराङ्कैः कराः किरणाः अङ्कुरा इव कराङ्कुरास्तैरतिकोमलैः किरणैरित्यर्थः ।

निरश्वसत् । 'श्वस प्राणने' लङ् । नायकविरहे तपश्चरन्ती नायिका प्राची कराङ्कुरैर्देवतामुपासिना(?)विरहतापेन निश्वासं कृतवतीवेति कविरुत्प्रेक्षते । निरश्वसदित्यत्र अट् 'गाध्वगालवयोः' इत्यडागमः ।। ४७ ।।

**अथोदयाद्रेः शिरसः श्रुतेरिव प्रकाशितात्मा प्रततप्रभः शशी ।**
**तमो निरस्यन्नपरोक्षतां ययौ क्रमात्पुमान् सन्मनसीव खेचरः ।। ४८ ।।**

**अथेति** ।। अथ चान्द्रमसाङ्कुरप्रादुर्भावानन्तरं श्रुतेः शिरस इवोदयाद्रेरुदयपर्वतस्य शिरसो मस्तकात् प्रकाशित आत्मा स्वभावो यस्य स तथा । प्रतता प्रभा कान्तिर्यस्य स तथा । तमोऽन्धकारमज्ञानं वा निरस्यन् तिरस्कुर्वन् सतां मनसि पुमान् परमपुरुष इव खेऽन्तरिक्षे क्रमाच्चरः सञ्चरन् शशी । अपरोक्षतां साक्षात्कारविषयतां ययौ श्लेषानुप्राणितोपमालङ्कारः ।। ४८ ।।

**अवाप्तसाम्राज्यपदौ जगत्त्रये वियुक्तचित्तव्यथकौ पुनर्नवौ ।**
**क्रमेण यूनां हृदयान्तरिक्षयोरुदीयतुः[1] कामहिमद्युती समम् ।। ४९ ।।**

**अवाप्तेति** ।। जगत्त्रये जगतां त्रये त्रिलोक्यामवाप्तं साम्राज्यस्य पदं स्थानं याभ्यां तौ तथा । वियुक्तानां विरहिणां चित्तस्य मनसो व्यथकौ चलयितारौ 'व्यथ सञ्चलने' इत्यतो णिजन्तादृण्वुलि वृद्धौ 'मितां ह्रस्व' इति ह्रस्वत्वम् । पुनर्नवौ नूतनौ कामो मन्मथः हिमद्युतिश्चन्द्रस्तौ समं सहैव क्रमेण निर्देशक्रमेण यूनां हृदयेऽन्तरिक्षे च तयोरुदीयतुः । 'इण्

१. 'हृदयान्तरिक्षेऽप्युदीयतुः' इति पाठान्तरम् ।

गतौ' लिट् । चन्द्रस्य साम्राज्यस्थानं भारते प्रसिद्धम् । सकलशासन-समर्थस्य सर्वसाक्षिसिद्धं पुनर्नवत्वं चन्द्रस्य 'नवो नवो भवति' इति श्रुति-सिद्धम् । मन्मथस्य तु सर्वथा सर्वतोऽभिलाषावहत्वेनाभिनवत्वात् हृदयपदस्यान्तरिक्षपदेन समस्तस्याप्यौचित्याद्यूनामिति पदार्थेनान्वय-प्रतियोगिसमर्पकत्वं वक्तव्यम् । यूनां हृदयान्तरिक्षेऽप्युदीयतुरिति पाठे नैकदेशान्वयादि ।। ४९ ।।

**विजित्य सूर्यं कथमप्यरिं**
**बलाज्जगत्ततं ध्वान्तमपाकरोद्विधुः ।**
**सदाभिभूतोऽपि न मित्रवैशसं**
**ससौम्यभावः सहते स्वयं जनः ।। ५० ।।**

**विजित्येति** ।। विधुश्चन्द्रोऽरिं स्वकान्त्यपहारेण शत्रुभूतं सूर्यं कथमपि केनापि प्रकारेण अतिकृच्छ्रेणेति यावत् । बलाद्विजित्य जगत्ततं जगति व्याप्तम् अरिं सूर्यविरोधिभूतमपि ध्वान्तं तिमिरमपाकरोत् । अपपूर्वात् करोतेर्लङ् । कृतवान् । ननु सूर्यः स्वस्याभिभवापादकः तत्कथं चन्द्रस्य सूर्यविरोधितमोनिराकरणं प्रत्युत तद्विरोध्युपोद्बलनेनायासापादनमेव युक्तमित्यत उक्तम्– **सदेति** ।। सूर्येण सदाभिभूतः पराभवं प्राप्तोऽपि ससौम्यभावः सौम्यभावेनाक्रूरभावेन सहितः सौम्यस्य सुन्दरस्य भावस्तेन सहितस्तथोक्तः । "सौम्यं तु सुन्दरे सोमदैवत" इत्यमरः । गम्यार्थे चन्द्रे सोम एव सौम्यः । चतुर्वर्णादिभावेन स्वार्थेष्यञ् । तस्य भावस्तेन सहित इति व्युत्पत्तिः । सुजनपक्षे सोम इवाह्लादकः । सौम्यः शाखादिभ्यो यः । स एव सौम्यः । प्रज्ञादित्वादञ् । सौम्यः सुजन इति यावत् । तस्य भावस्तेन सहितः ससौम्यभाव इति व्युत्पत्तिरमरव्याख्याने दर्शिता । जनः स्वयं मित्रस्य

वैशसं बाधनं न सहते । ''षह मर्षणे'' लट् । अर्थान्तरन्यासोऽलङ्कारः ।। ५० ।।

**अथानिरुद्धो नवयौव्वनोज्ज्वलो**
**विलासिनीभिः सहितः समागतः ।**
**उदीक्षितुं मन्मथबन्धुमागतं**
**विनिर्मितं हर्म्यममर्त्यशिल्पिना ।। ५१ ।।**

**अथेति** ।। अथ चन्द्रोदयानन्तरं नवयौव्वनोज्ज्वलो नवेन नूतनेन यौव्वनेन 'हायनान्तस्सुवादिभ्योऽण्' इत्यणुप्रत्ययः । यूनो भावेन । उज्ज्वलः प्रदीप्तोऽनिरुद्धः । मन्मथबन्धुं कामोद्दीपकत्वान्मन्मथस्य सखायमागतं चन्द्रमुदीक्षितुं द्रष्टुम् अमर्त्यशिल्पिना देववर्धकिना विश्वकर्मणा निर्मितं हर्म्यं विलासिनीभिः स्त्रीभिः सहितः सन् समागतः । 'गत्यर्थाकर्मकेति' कर्तरि क्तः । समागतवान् । चन्द्रोदयं द्रष्टुं हर्म्याग्रमारूढवानित्यर्थः ।। ५१ ।।

**सुसौरभस्वस्तरुसूनभासुरे प्रभूतकालागरुधूममेचके ।**
**इहास्तरत्नोज्ज्वलवल्लभावृतः ससुस्मितश्चन्दनचर्चिताकृतिः ।। ५२ ।।**

**सुसौरभेति** ।। रत्नैः पद्मरागादिभिरुज्ज्वला दीप्ताश्च ता वल्लभा दयिताश्च ताभिरावृतः । शोभनं स्मितमीषद्धसनं यस्यासौ सुस्मितः । चन्दनेन चर्चिता आलिप्ता आकृतिर्विग्रहो यस्यासौ तथोक्तः सः । अनिरुद्धः । सुसौरभाणि शोभनपरिमलोपेतानि स्वस्तरोः स्वर्गतरोः कल्पवृक्षस्य सूनानि कुसुमानि । 'मणीचकं प्रसूनं च सूनं सुमनः स्त्रियः पुष्पम्' इति

शब्दरत्नाकरः । तैर्भासुरे 'भासृ दीप्तौ' इत्यतः । 'भञ्जभासमिदो घुरच्' इति घुरच्प्रत्ययः । दीप्यमाने 'समास्तेजस्विवर्चस्विभास्वद्भास्वरभासुराः' इति शब्दरत्नाकरः । प्रभूतेन प्रचुरेण कालागरोः कृष्णागरोर्धूमेन मेचके श्यामले 'कालश्यामलमेचका' इत्यमरः । इह हर्म्ये । आस्त 'आस उपवेशने' लङ् उपाविशत् ।। ५२ ।।

**विकीर्णतारस्फुरदम्बरोदितं स दक्षकन्यारमणं विडम्बयन् ।**
**बभूव काले सकलेन्दुलालिते कृताभिलाषो मदिरानिषेवणे**
**।। ५३ ।।**

**विकीर्णेति** ।। विकीर्णानि विक्षिप्तानि च तानि ताराणि नक्षत्राणि च तैः स्फुरत् प्रकाशमानं यदम्बरमाकाशं तस्मिन्नुदितं दक्षकन्यायां दक्षप्रजेश्वरस्य कन्यानामश्विन्यादितारकाणां रमणं नन्द्यादित्वात्कर्तरि ल्युः । चन्द्रं विडम्बयन् अनुकुर्वन् सः सकलेन्दुना कलाभिः सहितेन पूर्णेन्दुना लालिते उपलालिते काले मदिराया मद्यस्य निषेवणे 'परिनिविभ्य' इति सेवतेः सस्य षत्वम् । पाने कृतोऽभिलाषस्तर्षो येनासौ कृताभिलाषो बभूव । 'गन्धोत्तमा प्रसन्नेरा कादम्बर्यः परिस्रुताः । मदिरा कश्यमद्ये चेति' 'कामोऽभिलाषस्तर्षश्च' इति चामरः । अनेनोपरितनेन च श्लोकेन महाकाव्याङ्गभूतं मधुपानं वर्णितवान् कविः ।। ५३ ।।

**अलं प्रपञ्चेन विलासिनीजनः सहामुना द्वारवतीपुरे पपौ ।**
**सुरां सुवेषः सुरराजमन्दिरे सुधां जयन्तेन यथाप्सरोगणः**
**।। ५४ ।।**

**अलमिति** ।। प्रपञ्चेन चन्द्रोदयवर्णनविस्तारेण वारणार्थकालंशब्दयोगा-

तृतीया अलं प्रपञ्चो मा भूदित्यर्थः । यद्वा अलमलङ्कृतः प्रपञ्चो विस्तारो जगद्येन स तथा तेनानिरुद्धेन सह विलासिनीजनः प्रमदासमूह इति यावत् । द्वारवतीपुरे द्वारवतीनामिकायां पुर्यां सुवेषः शोभनो वेषोऽलङ्कारकृता शोभा यस्यासौ सुवेषः । अप्सरोगणः । सुरराजस्य देवेन्द्रस्य मन्दिरे गृहे जयन्तेन तन्नाम्ना देवेन्द्रपुत्रेण सह सुधां यथा अमृतमिव सुरां मदिरां पपौ । सुरामित्यादौ सुरशब्दस्यासकृदावृत्तेर्वृत्त्यनुप्रासः शब्दालङ्कारः ।। ५४ ।।

एवं मधुपानं वर्णयित्वा सवारुणीति अनिरुद्धस्य गृहे गृह इति नागरदम्पतीनामरीरमदिति श्रीकृष्णस्य चरितोत्सवं वर्णयति—

**सवारुणीपानविवृत्तदृष्टिभिः सुदृष्टिभिः पिष्टतनुः पयोधरैः ।**
**जगाम सम्मोहमयीं महायशा दशां प्रभूतप्रमदानुभाविनीम्**
**।। ५५ ।।**

**स इति** ।। महायशा महद्यशः कीर्तिर्यस्यासौ तथोक्तः सोऽनिरुद्धो वारुणीपानेन मदिरापानेन ''वारुणी मदिरा माध्वी शुण्डागण्डोत्तमामृतम् । मैरेयकस्य मद्यानि'' इति शब्दरत्नाकरः । विवृत्ताः परिवृत्ता दृष्टयो लोचनानि यासां तास्ताभिः सुदृष्टिभिः सुलोचनाभिः । कर्तरि तृतीया । पयोधरैः कुचैः । करणे तृतीया । पिष्टतनुरुपमर्दितशरीरः । प्रभूतो बहुलः प्रमदः प्रमोदस्तमनुभावयितुं शीलमस्याः प्रभूतप्रमदानुभाविनीं सम्मोहमयीं सम्मोहान्महावैचित्यादागतां 'हेतुमनुष्येभ्यो मयट् च' इति तत आगत इत्यर्थे मयट्प्रत्ययः । टित्त्वान्ङीप् । दशामवस्थां 'दशा वर्तावथस्थायाम्' इत्यमरः । जगाम । सुगमः शब्दालङ्कारः ।। ५५ ।।

**गृहे गृहे चित्तभुवो वराङ्गना निदेशवश्यास्तरुणैरुपागमन् ।
परामवस्थामलसाङ्गयष्टयः सुखस्य सीमानमिहावनौ सतः
॥ ५६ ॥**

**गृहे गृह इति** ॥ वीप्सायां द्विर्वचनम् । सर्वेष्वपि गृहेषु चित्तमुखो मन्मथस्य निदेशवश्या निदेशस्य शासनस्य वशङ्गताः 'वशं गत' इति यत् । 'निदेशः शासनं च सः । शिष्टिश्चाज्ञा च' इत्यमरः । अत एवालसा मन्दा अङ्गयष्टयः शरीररूपदण्डा यासान्तास्तथोक्ता अलसाङ्गयष्टयो वराङ्गनास्तरुणैर्युवभिरिहावनौ सतः । अस्यां भूमौ विद्यमानस्य सुखस्य सीमानं मर्यादां परामवस्थामुपागमन् प्रमदास्तरुणैस्समं परमसुखमन्वभवन्नित्यर्थः ॥ ५६ ॥

**अरीरमत्सा रमणीः सुरूपिणीरनेकजानिर्जगदेकनायकः ।
समं सुबह्वीरपि विश्वरूपवाननामरूपस्य नमोऽस्य शक्तये
॥ ५७ ॥**

**अरीरमदिति** ॥ अनेकजानिः । न एका(न एक इव यासु ता) अनेका जाया भार्या यस्य स तथोक्तः । जायाया निङ् 'स्त्रियाः पुंवत्' इति पुंवद्भावः । बहुभार्यः । जगदेकनायकः । जगतो मुख्यनेता श्रीकृष्णः सुरूपिणीः शोभनाश्च ता रूपिण्यश्च ताः स्वाः स्वकीया रमणीः सुबह्वीरपि विश्वरूपवान् प्रमदासमसङ्ख्याकरूपवानिति विशेषणस्य साभिप्रायत्वात् परिकरालङ्कारः । अरीरमत् । रमयतेर्लुङि 'चङी'ति द्वित्वे अभ्यासस्य सम्पद्भावादित्वे दीर्घो लघोरिति दीर्घत्वे च रमणकर्माकार्षीत् । एतादृशस्यास्य अनामरूपस्य न विद्यन्ते नामानि रूपाणि च यस्य स तथा तस्य

श्रीकृष्णस्य शक्तये सामर्थ्याय नम इति कविर्भगवन्माहात्म्यमनुसन्दधानो भागवतीं शक्तिमनमत् ।। ५७ ।।

**रिपुप्रचारे विहते परीक्षकैः कृतासु रक्षासु च राजकिङ्करैः ।**
**सुखं समाधाय च माधवे मनः क्रमेण निद्रामभजन्त यादवाः ।। ५८ ।।**

**रिपुप्रचार इति** ।। यादवा रिपूणां प्रचारे राजवृत्तावमर्शादिरूपे सञ्चारे रिपुप्रचारे परीक्षकैः ईक्ष दर्शने ण्वुल् । कारणिकैः । 'परीक्षकः कारणिक' इत्यमरः । करणैः । चरद्भिः । राजाज्ञां वहद्भिरिति यावत् । विहते परिहृते । राजकिङ्करैश्च रक्षासु कवाटपरिघार्गलशृङ्खलाकीलिकादिभिः रक्षासु कृतासु सतीषु । माधवे लक्ष्मीपतौ मनः क्रमेण ध्यानक्रमेण सुखं यथा तथा समाधाय च निद्रामभजन्त । 'भज सेवायाम्' लङ् । असेवन्त । अत्र मनःसमाधायेति वदता 'उत्तिष्ठंश्चिन्तय हरिं व्रजंश्चिन्तय केशवम् । भुञ्जंश्चिन्तय गोविन्दं स्वपंश्चिन्तय माधवम् ।।' इति पञ्चरात्रवचनं, 'क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये । भोगिभोगशयनीयशायिने माधवाय च मधुद्विषे नमः ।।' इति लोके प्रसिद्धिश्चाभिसंहिते ।।५८।।

**एकान्ततः कान्तमचोदयद्यामाहर्तुमात्मसममिष्टमुषा सुवेषा ।**
**सा योगसिद्धा स्तिमिते जनेऽस्मिन्नभ्यागता नगरमप्सरसां प्रधानं ।। ५९ ।।**

**एकान्तत इति** ।। सुवेषा शोभनालङ्काराहितशोभा । उषा उषानाम्नी देव्यात्मनः सममनुरूपमिष्टमिच्छाविषयं कान्तं प्रियमाहर्तुम् । यां चित्रलेखाम् एकान्ततः सप्तम्यर्थे तसिः । एकान्ते रहसि । अचोदयत् । 'चुद

सश्चोदने' ण्यन्ताल्लङ् । योगसिद्धा योगप्रभावेण सिद्धा कृतार्था । अप्सरसां प्रधानमुत्तमभूता 'प्रधानं प्रकृतौ बुद्धावुत्तमे परमात्मनि' इति हैमः । सा चित्रलेखा जने स्तिमिते निश्चले तस्मिन् नागरे जने निद्राति सति नगरं द्वारकापुरम् अभ्यागता । कर्तरि क्तः । आगतवती । अत्रेन्द्रवज्रावसन्ततिलकयोः सम्मिश्रणादुपजातिः । एवमेवोत्तरषट्श्लोक्यामपि उपजातिर्नाम । 'इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम' इति वृत्तरत्नाकरवचनात् । उदाहृता चैतादृशी उपजातिर्धीशोधिन्याम् 'कल्लोलवेल्लितदृषत्पुरुषप्रहारै रत्नानि रत्नाकरभावमंस्थाः' इति ।। ५९ ।।

**सा द्वारकान्तःपुरमन्तरिक्षादागत्य पत्युरवधानपरा स्वसख्याः ।**
**व्यापारयामास गृहेषु दृष्टिं पर्यायतस्फटिकभिन्नगवाक्षवत्सु**
**।। ६० ।।**

**सेति** ।। स्वसख्याः स्वस्याः सखी उषा तस्याः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति स्वशब्दस्य समावृत्तौ पुंवद्भावः । पत्युर्वल्लभस्यानिरुद्धस्यावधानं सन्धानं सङ्घटनम् अवधानं ज्ञानमिति वा "भवेदवहितं ज्ञाने सुरतान्तावसानयोः" इति विश्ववचनात् । तत्र परा आसक्ता सा चित्रलेखा । अन्तरिक्षादन्तरिक्षमार्गाद् अपादाने पञ्चमी । द्वारकाया अन्तःपुरमन्तरभ्यन्तरे पुरमागत्य परित आयताः स्फटिकास्तैर्भिन्नाः सम्भिन्ना मिश्रा गवाक्षा वातायनानि एतेषां सन्तीति तद्वन्ति तेषु भिन्नम् । "विदारितेऽन्यस्मिन्मिश्रे च" इति केशवः । यद्वा, पर्यायतेषु स्फटिकेषु भिन्ना विदारिता निर्मितास्तादृग्गवाक्षशालिषु गृहेष्वित्यर्थः । पर्यायतः क्रमेणेति भिन्नं वा पदम् । दृष्टिं नयनं व्यापारयामास । व्यापारवच्छब्दा-

त्तत्करोतीति णिचि णेरिष्ठवद्भावात्तस्मिन्परतः 'विन्मतो लुगि'ति मतुपो लुकि व्यापारयामासेति रूपं व्यापारवतीं चकारेत्यर्थः ।। ६० ।।

**सा षट्सहस्राण्ययुतं तथाष्टौ**
**विष्णोर्वपूंष्यनुभवन्त्यनुभावभाञ्जि ।**
**सुप्तान्यसुप्ताम्बुजपत्रनेत्राण्यक्ष्णोः**
**स्वयोर्जननमर्थवदेव मेने ।। ६१ ।।**

**सेति** ।। सा चित्रलेखा । अयुतं दशसहस्राणि पुनश्च षट्सङ्ख्याकानि सहस्राणि । तथाशब्दः समुच्चये । शतं चेत्यर्थः । तथाचाहुः– 'शतं तथा सहस्राणि । वह्निपुत्रास्तु षोडश । कृष्णप्रिया' इति । भागवते– 'आसन् षोडशसाहस्रमहिष्यस्तु शताधिका' इति । तेन च कृष्णरूपाणां बहुत्वं सार्थकमिति सूचितम् । अष्टौच अष्टाधिकशतोत्तरषोडशसहस्र-सङ्ख्याकानीति निर्गलितोऽर्थः । अनुभावं प्रभावं भजन्तीति अनुभावभाञ्जि । भजो ण्विः । असुप्तानि निर्निद्राणि विकसितानि अम्बुजानां पत्राणीव नेत्राणि येषां तानि सुप्तानि लोकदृष्ट्या निमेलनादियमुक्तिः । विष्णोर्वपूंषि रूपाणि । अनुभवन्ती स्वयोः स्वकीययोरक्ष्णोर्नयनयोर्जननं जन्म अर्थवदेव सफलमेव मेने । मनु अवबोधने लिट् । अवबुद्धवती । 'स्वरसन्ध्याप्त-सौन्दर्यतद्भेदेष्विष्यते क्वचित्' इति वचनान्नेत्राण्यक्ष्णोरित्यत्र न छन्दोभङ्गः शङ्कनीयः । विष्णोरिति विशेष्यपदोपादानेन व्यापनशीलस्य कृष्णस्येत्यभि-प्रायस्य सूचितत्वात्परिकराङ्कुरालङ्कारः । 'साभिप्राये विशेष्ये तु भवेत्परिक-राङ्कुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ।।' इति तल्लक्षणोदाहरणे ।। ६१ ।।

**बिभ्राणमभ्रासितमाननाब्जं प्रद्युम्नसूनुमपि दृष्टवती सुदृष्टिः ।**
**आलिङ्गितेष्टामणिकर्णिकायामुद्भासितप्रतिकृतिं प्रततप्रमोदा ॥ ६२ ॥**

**विभ्राणमिति** ॥ सुदृष्टिः सुलोचना चित्रलेखा आननमब्जमिवाननाब्जं तत् बिभ्राणं वहन्तम् । अभ्रवदसितोऽभ्रासितस्तम् । आलिङ्गिताया इष्टाया दयितायाः मणिकर्णिकायां मणिखचितकर्णभूषायां "कर्णिका कर्णभूषे"ति कविदर्पणे । उद्भासिता 'भासृ दीप्तौ' इत्यतः कर्तरि क्तः । उद्भासनं प्राप्तवती प्रतिकृतिः प्रतिबिम्बो यस्यासौ तं प्रद्युम्नसूनुं प्रद्युम्नपुत्रमनिरुद्धमपि न केवलं कृष्णम् इत्यपिशब्दः । दृष्टवती सती । प्रततो विस्तृतः प्रमोदो हर्षो यस्याः सा प्रततप्रमोदा । आसीदिति योग्यक्रियाध्याहारः ॥६२॥

**लीलावतीचालितचामरोद्यच्चण्डेतरानिलविहारविरेचितौष्ण्यम् ।**
**श्रीखण्डसारद्रवमण्डिताङ्गं पिण्डीकृतं युवतिभी रतिपण्डिताभिः ॥ ६३ ॥**

**लीलावतीति** ॥ लीलावतीभिः विलासवतीभिः स्त्रीभिश्चलितान्येव प्रज्ञाद्यणि चालितानि । तेन(कम्पने चलितमिति?)मित्वे मितां ह्रस्वत्वे च चलितानीति स्यादिति चोद्यं निरस्तम् । तथाविधानि यानि चामराणि तेभ्य उद्यन्नुद्गच्छन् चण्डेतरो मन्दः स चासावनिलो वायुस्तस्य विहारेण विरेचितं निष्कासितमौष्ण्ये यस्य स तथोक्तः तम् । श्रीखण्डो गन्धसारः तस्य सारः स्थिरांशः तस्य द्रवेण मण्डितान्यलङ्कृतान्यङ्गानि यस्य तं रतौ पण्डिताभिर्बुद्धिमतीभिः कुशलाभिर्युवतिभिर्गाढमालिङ्गितम् अत एव पिण्डीकृतं विमर्दितमित्यर्थः । दृष्टवतीति पूर्वक्रियान्वयः । रूपं दृष्ट्वेति वक्ष्यमाणेन

वान्वयः । युवतिभी रतिपण्डिताभिरित्यत्र "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ॥ ६३ ॥

**कुर्वाणमानन्दममुष्य रूपं दृष्ट्वातिविस्मयकृदङ्गुलिनासिकाग्रा ।**
**तस्थौ मुहूर्तं किल चित्रलेखालोकान्तरं सुकृतमित्यवयात्युषायाः ॥ ६४ ॥**

**कुर्वाणमिति** ॥ चित्रलेखा आनन्दं कुर्वाणं विस्मयस्याश्चर्यस्य कृत् कर्तृ । अमुष्यानिरुद्धस्य रूपं सौन्दर्यं विग्रहं वा दृष्ट्वा । अङ्गुलिर्नासिकाग्रे यस्याः सा सप्तम्याः पूर्वनिपाते 'गड्वादिभ्यः परा सप्तमी'(?) इति वक्तव्यत्वात् सप्तम्याः परत्वम् । अङ्गुल्यवमृष्टनासिकाग्रेति मध्यमपदलोपी वा समासः । उषायाः सुकृतम् अलोकान्तरं नास्ति लोकान्तरम् अन्यो लोकः स्वर्गलक्षणो यस्य तत्तथा । फलफलिभावः षष्ठ्यर्थः । मयूरव्यंसकादिदर्शनात्समासः । इदं रूपम् उषायाः सुष्ठु कृतं लोकान्तरं स्वर्गलक्षणं स्वर्गलाभानन्तरं हि सुकृतफलं सुखं लभ्यम् । एवमुषाया एतद्रूपलाभ एव सुखसीमेतिभाव इत्यप्याहुः । इत्यवयाती जानती मुहूर्तम् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । तस्थौ किल । तिष्ठतेर्लिट् । 'वार्तासम्भाव्ययोः किल' इत्यमरोक्तेः । स्थितवतीति वार्तेत्यर्थः ॥६४॥

**प्रद्युम्नदायादमुपाददाना बाह्वोर्युगेन नवपल्लवकोमलेन ।**
**अज्ञातवृत्तिः पुरसुस्थजीवैर्बाणात्मजाप्रियसखी दिवमुत्पपात ॥ ६५ ॥**

**प्रद्युम्नेति** ॥ बाणस्य बाणासुरस्यात्मजा सुता उषा तस्याः प्रिया च सा सखी च बाणात्मजाप्रियसखी चित्रलेखेत्यर्थः । नवपल्लवमिव कोमलं

तेनातिमृदुलेन बाह्वोर्युगलेन द्वाभ्यां बाहुभ्यामित्यर्थः प्रद्युम्नदायादं प्रद्युम्नस्य दायादं सुतम् । ''दायादौ सुतबान्धवौ'' इत्यमरः । 'दायादौ ज्ञातितनयौ' इति दर्पणश्च । उपाददाना गृह्णती पुरे द्वारकापुर्यां सुस्थैः सुखमवस्थितैर्जीवैः प्राणिभिरज्ञाता वृत्तिर्व्यापारो यस्याः सा अज्ञातवृत्तिः । सा दिवमन्तरिक्षमुत्पपात । 'पत्लृ गतौ' लट् । उद्गतवती ।। ६५ ।।

**क्षणागता गूढरसाममोदयन्मृदूपनीतासुसमामृतद्युतिः ।**
**निरस्तखेदा भुवि चित्रलेखिका दिनान्तसन्ध्येय-**
**मुषाकुमुद्वतीम् ।। ६६ ।।**

**क्षणेति** ।। क्षणेनातिशीघ्रमागता । अन्यत्र क्षणेऽवसरे आगता मृदु यथा तथा उपनीतः समानीतोऽसुसमः प्राणसमो नायकोऽनिरुद्ध एवामृतद्युतिश्चन्द्रो यया सा तथोक्ता । भुवि निरस्तः खेद आतपादिजनितः क्लेशो यया सा तथोक्ता । इयं चित्रलेखिका । अज्ञाता चित्रलेखा चित्रलेखिका 'अज्ञात' इति कप्रत्ययः । दिनान्तसन्ध्या चित्रलेखैव सायङ्कालसन्ध्या । गूढो रसः स्नेहो वा यस्याः सा तथा ताम् उषैव कुमुद्वती कुमुदान्यस्याः सन्तीति कुमुद्वती 'कुमुदनडवेतसेभ्यो मतुब्' इति मतुप्प्रत्यये टिलोपे 'झय' इति वत्वे 'उगितश्च' इति ङीपि रूपं ताम् अमोदयत् । 'मुद हर्षे' इत्यतो ण्यन्ताल्लङ् । अहर्षयत् । अत्र रूपकमलङ्कारः ।। ६६ ।।

**यया त्वयत्नाधिगतप्रिया सखी महामहिम्ना प्रणमाम्युमामिति ।**
**विचिन्त्य कान्तं कमनीयवेषया तदोषया सङ्गमयाम्बभूव**
**।। ६७ ।।**

**ययेति** ।। सा चित्रलेखा महान्महिमाऽनुभावो यस्याः सा महामहिमा तया यया उमादेव्या अनुग्रहेण सखी उषा । अयत्नेन अधिगतः प्राप्तः प्रियो वल्लभो यया साऽऽसीत् । तामिति व योज्यम् । उमां प्रणमामीति विचिन्त्य कान्तमनिरुद्धं कमनीयो वेषोऽलङ्कारकृतशोभा यस्याः सा तथा यथा उषया सहेति श्रवणात् । 'गतिबुद्धी'ति कर्मत्वेन द्वितीयायामुषामिति स्यात् । "शत्रूनगमयत्स्वर्गमिति यथा" इति चोद्यं निरस्तम् । कारकस्य विवक्षाधीनत्वात् । सङ्गमयाम्बभूव सङ्गतं चकार ।। ६७ ।।

**ततः शिवानुग्रहबोधितक्रमां रहस्युदूढां दयिताभिरासने ।**
**त्रपाकुलामप्युपदेशशेषकृन्न्ययुङ्क्त कन्दर्पगुरुर्यथाविधि ।।६८।।**

**तत इति** ।। ततः सङ्गमनानन्तरं कन्दर्पो मन्मथ एव गुरुराचार्यः कन्दर्पगुरुः शिवाया उमाया अनुग्रहेण बोधितः क्रमः सङ्गमादिकालानुक्रमो यस्याः सा शिवानुग्रहबोधितक्रमा ताम् । रहसि दयिताभिः प्रियसखीभिरुदूढां कृतोद्वहां त्रपया लज्जयाऽऽकुलां पूर्णामपि । "आकुलं भरितं पूर्णम्" इति हलायुधः । यथाविधि वात्स्यायनविधानमनतिक्रम्य । उपदेशशेषकृद् उमोपदिष्टार्थविशेषं कुर्वन् उपदिशन्निति यावत् । स सन् । आसने न्ययुङ्क्त 'स्वराद्यन्तोपसृष्टादि'ति निपूर्वस्य युजेरात्मनेपदम् । लङ् । अत्र कन्दर्प-गुरुरिति रूपकालङ्कार इत्याहुः ।। ६८ ।।

**प्रगल्भमन्दाक्षकटाक्षपातया तयावकृष्टं प्रथमं सविभ्रमम् ।**
**अपोढशङ्कं निजबाहुकक्ष्यया बबन्ध बन्धूकदलारुणाधरा**
**।। ६९ ।।**

**प्रगल्भेति** ।। बन्धूकदलारुणाधरा बन्धूकस्य बन्धुजीवककुसुमस्य

दलमिवारुणोऽधर ओष्ठो यस्याः सा तथोक्ता उषेति योज्यम् । प्रगल्भं दृष्टं मन्दाक्षं लज्जा यस्यासौ प्रगल्भमन्दाक्षः । स चासौ कटाक्षपातो यस्याः सा तथोक्ता तया "मन्दाक्षं ह्रीस्त्रपा व्रीडा" इत्यमरः । तया चित्रलेखया सविभ्रमं सविलासम् अवकृष्टं प्रथमं नूतनमिति यावत् । यद्वा प्रथमं प्रवेकमुत्तमम् 'आद्यप्रवेकौ प्रथमौ' इति कविदर्पणः । नायकम् । अपोढा अपवारिता शङ्का यथातथेति क्रियाविशेषणम् । अपोढशङ्कं निजबाहुः कक्ष्येव वरत्रेव बन्धनानुकूलरज्जुरिवेति यावत् तया बबन्ध 'बध बन्धने' लिट् । बन्धूकदलारुणाधरेत्युपमालङ्कारः । स्वाङ्गत्वेऽपि 'नक्रोडादिबह्वच' इति न ङीष् ।। ६९ ।।

**भुजद्वयस्यास्य जयध्वजायितं सुमध्यमा मध्यगता मनोभुवः ।**
**निपीड्य वक्षो रभसोपगूहनप्रतिक्रियाभिर्दयितं जिगाय सा**
**।। ७० ।।**

**भुजद्वयस्येति** ।। सुमध्यमा सा उषा । अस्य भुजद्वयस्य पूर्वं बन्धकत्वेन प्रस्तुतत्वादस्येत्युक्तं मध्यगतं मनोभुवो मन्मथस्य जयध्वजायितम् आचरक्यजन्तात् 'गत्यर्थाकर्मके'ति कर्तरि क्तः । जयध्वजमिवाचरितवन्तं दयितं प्रियमनिरुद्धं वक्षसा रभसेन उपगूहनान्यालिङ्गनानि तान्येव प्रतिक्रियाः प्रतीकारास्ताभिः । 'रभसो वेगहर्षयोः' इति नानार्थरत्नमाला । निपीड्य जिगाय 'जि जये' लिट् । 'सन्लिटोः' इति कुत्वम् । जितवती
।। ७० ।।

**ततः कृतार्थोऽपययौ सखीजनः**
**सखापि सम्भ्रष्टकभूषणग्रहम् ।**

**चुचुम्ब गाढं सुमुखीं मुखाम्बुजे**
**निमीलितार्धाक्षिणि रोमहर्षिणीम् ।। ७१ ।।**

**तत इति** ।। तत उभयोः सङ्घटनानन्तरं सखीजनः सखीरूपो जनश्चित्रलेखादिः कृतार्थो निष्पादितप्रयोजनः सन् । अपययौ अपगतवान् । सखाप्यनिरुद्धोऽपि भ्रष्टकं शिखालम्बिमाल्यं तदेव भूषणं तस्य ग्रहो ग्रहणं तेन सहितं यथा तथा सभ्रष्टकभूषणग्रहं 'प्रभ्रष्टकं शिखालम्बी'त्यमरः । भ्रष्टं शिथिलितं कस्य शिरसो भूषणं केशवेशस्तस्य ग्रहस्तेन सहितं सकच-ग्रहणमित्यप्याहुः । रोमहर्षोऽस्या अस्तीति रोमहर्षिणी ताम् । सुमुखीमुषां निमीलिते अर्धाक्षिणी यस्मिंस्तन्निमीलितार्धाक्षि तस्मिन् अक्षिशब्दस्य 'अस्थिदधिसक्थ्यक्ष्णामनङि' त्यनङि विभाषा ङिश्योरित्यल्लोपाभावे रूपम् । अर्धशब्देन समासाभ्युपगमात् 'न बहुव्रीहौ सक्थ्यक्ष्णोः ष्वाङ्गात् षच्' । मुखाम्बुजे मुखकमले गाढं यथा भवति तथा चुचुम्ब 'चुबि वक्त्रसंयोगे' लिट् चुम्बितवान् । स्वभावोक्तिरलङ्कारः ।। ७१ ।।

**अपाहरन्नप्यधरोष्ठसंश्रयं मृगीदृशः पूर्वमपूर्वमादधे ।**
**सरागमङ्गे नखदन्तचिह्निते प्रतिग्रहेच्छा न हि मानिनां**
**नृणाम् ।। ७२ ।।**

**अपाहरन्निति** ।। सोऽनिरुद्धो मृगीदृशो मृग्या दृगिव दृक् नयनं यस्याः सा तथा तस्याः 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च' इत्युत्तरपदलोपिबहुव्रीहिः । अधरोष्ठः संश्रय आश्रयो यस्य तम् । यद्यप्य-धरोष्ठशब्दौ पर्यायौ । यदाहामरः—'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इति । तथापि, ओष्ठशब्दं सामान्यवाचिनमभिसन्धायाधरोष्ठेत्युक्तम् । अत

एव ‘उत्तरोष्ठश्च जिह्वाच’ इति प्रयोगः । ‘ओष्ठो दन्तच्छदे पुंसि’ इति केशवश्च । अधरोष्ठसंश्रयम् ‘ओत्वोष्ठयोः समासे वा’ इति वृध्द्यभावः । पूर्वं रागमपाहरन्नपि चुम्बनेनाधररागस्य निर्मृष्टत्वाद् अपाहरन्निवेति भावः । अङ्गे तत्तत्स्थाने । नखाश्च दन्ताश्च नखदन्तं प्राण्यङ्गत्वादेकवद्भावः । तस्य चिह्नान्यस्य सञ्जातानीतीतच्प्रत्ययः । नखैश्च दन्तैश्चोपजनित-चिह्नेऽधराद्यङ्गेपूर्वं रक्तिमानम् आदधे निहितबानित्यर्थः । एतदर्थान्तर-न्यासेनाह– मानिनां नृणां प्रतिग्रहेच्छा न भवतीति ‘‘उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः’’ इति लक्षितोऽर्थान्तरन्यासोऽत्रालङ्कारः ।।७२।।

**स्तनाङ्गरागे गलिते वराङ्कुशे हृतोच्चये चोरुयुगे विराजति ।**
**रतातिरेकात्सुदृशस्तिरोदधे क्रमेण लज्जा रतिविघ्नकारिणी**
**।। ७३ ।।**

**स्तनेति** ।। सुदृशः सुलोचनाया उषायाः स्तनयोरङ्गरागः कुङ्कुम-पङ्कानुलेपः तस्मिन् गलितेऽवस्रस्ते वराङ्कुशे प्रशस्तवस्त्रे । हृत उच्चयो नीवी यस्य स हृतोच्चयः । ‘उच्चयो वस्त्रनीव्यां स्यात्’ इति केशवः । ‘अथोच्चयः । नीवी च वसनग्रन्था’विति च शब्दरत्नाकरः । ऊरुयुगे च विराजति सति रसातिरेकाद् रागातिशयात् । रतिविघ्नं कर्तुं शीलमस्या इति रतिविघ्नकारिणी । लज्जा क्रमेण स्तनाङ्गरागावस्रंसनादिक्रमेण तिरोदधे तिरोधानं प्राप्तवती अपययावित्यर्थः । दधातेर्लिट् । अत्र प्रगल्भमन्दाक्षे-त्यादिः स्तनाङ्गराग इत्यन्ता पञ्चश्लोकी रतोत्सववर्णनपरा । तत्रादावुप-गूहनम् अनन्तरं चुम्बनं ततो नखविलेखः ततो दन्तक्षतं चेति चत्वारो विलासा रतिरहस्यदीपिकायां काञ्चीनाथेनोक्ता अत्र दर्शिताः । तत्र प्रथमश्लोके चुम्बनम् अपाहरन्नप्यधरोष्ठसंश्रयमित्यत्र अङ्गे नखदन्तचिह्नित

इति नखविलेखा दन्तक्षतं चोपनिबद्धम् । एवं बाह्यरतं वर्णयित्वा स्तनाङ्गराग इति श्लोके साक्षाद्रतं च वर्णितमिति महाकाव्यत्वं विभावितम् । तदाह काञ्चीनाथः—"आदौ रतं बाह्यरतं च सम्यक् प्रयुज्य वालिङ्गनपूर्वमन्यदि"ति । आलिङ्गनपूर्वं बाह्यरतं सम्यगादौ प्रयुज्यान्यद्रतं च कुर्यादित्यर्थः । मुखाम्बुजे चुचुम्बेति, अपाहरन्नप्यधरोष्ठसंश्रयं रागमिति च वदता "नयनयुगकपोलं दन्तवासो मुखाब्जं स्तनयुगलललाटं चुम्बन-स्थानमाहुः" इति चुम्बनाधिकारे काञ्चीनाथोक्तं चुम्बनस्थानमभिहितवान् । तथा, अङ्गे नखदन्तचिह्निते इति वदन्—'कक्षौ करोरुजघनस्तनपृष्ठपार्श्व-हृत्कन्धरासु नखराः खरवेगिनः स्यु'रिति नखविलेखनस्थानं, 'स्निग्धत्विषः शितशिखानतिदीर्घखर्वा रागस्पृशः समघना जघनाः प्रशस्ताः । तेऽन्त-र्मुखोत्तररदच्छदनेत्रवर्जं स्थानेषु चुम्बनविधौ कथितेषु योज्या' इति तेनैवोक्तं दन्तचिह्नस्थानं चाभिहितवान् ।। ७३ ।।

एवं रतं वर्णयित्वा, "स्वेच्छयाश्रमिणि वल्लभे यदा योषिदाचरति पूरुषायितम्" इति काञ्चीनाथोक्तं पुरुषायितं वर्णयति—

**सुक्लृप्तभृङ्गाररसप्रकाशना निजाङ्गविक्षेपविलासमन्थरा ।**
**वरोरुवक्षस्स्थलरङ्गमण्टपे नटी विदग्धेव ननर्त सुन्दरी ।। ७४ ।।**

**सुक्लृप्तेति** ।। सुक्लृप्तमत्यन्तपरिचितं शृङ्गाररसस्य प्रकाशनं यस्याः सा तथोक्ता । निजाङ्गानां स्वहस्तवदनादीनां विक्षेपश्चलनं तस्य विलासेन मन्थरा अलसा सुन्दरी उषा । विदग्धा प्रौढा नटीव वरस्य जामातुर-निरुद्धस्य । उरु विशालं वक्षस्स्थलमेव रङ्गमण्टपं तस्मिन् ननर्त । 'नृती गात्रविक्षेपे' लिट् । नर्तनं कृतवती । स्फुट उपमालङ्कारः ।। ७४ ।।

**शनैः शनै कम्पितकम्रकाञ्चनप्रदीप्तकाञ्चीमणिमञ्जुलारवः ।**
**बभूव तस्या मणितस्वनान्तरे जयाय**
**जिष्णोर्जगदङ्गजन्मनः ।। ७५ ।।**

**शनैरिति** ।। तस्या उषाया मणितस्वनो रतिकूजितं तस्यान्तरेऽवसरे । मणितशब्दस्य रतिकूजितवाचित्वेऽपि करिकलभ इत्यदाविवात्र स्वनशब्दो युक्तः । मणितरूपो यः स्वनस्तन्मध्ये इति वा । शनैः शनैर्मन्दं मन्दं कम्पिता चलिता कम्रा मनोहरा 'नमिकम्पी'त्यादिना कमेरप्रत्ययः । काञ्चनेन स्वर्णेन प्रदीप्ता विराजिता या काञ्ची तस्या ये मणयो घण्टाः 'कश्चित्प्रायुङ्क्त घण्टायां मणिशब्दम्' इति केशवः । तासां मञ्जुलो मनोहरश्चासावारवः स्वनो जगद् भुवनं जिष्णोर्जेतुः ''ग्लाजिस्थस्य च क्स्नु''रिति जयतेः क्स्नुप्रत्ययः । अङ्गजन्मनो मन्मथस्य जयाय बभूव ।। ७५ ।।

**मुखेन विस्रंसिकचेन शीतगुं**
**विडम्बयन्ती नवमेघविस्फुटम् ।**
**व्यवायचातुर्यविशेषशालिनी**
**प्रकाशयामास रसं पदे पदे ।। ७६ ।।**

**मुखेनेति** ।। विस्रंसी शिथिलः कचः केशवेशो यस्मिंस्तेन मुखेन । नवमेघे नूतनमेघे विस्फुटं विराजमानं शीतगुः शीता गावः किरणा यस्यासौ तम् । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः चन्द्रं विडम्बयन्ती अनुकुर्वती-(न्ती)व्यवाये रते 'व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्' इत्यमरः । चातुर्यस्य कौशल्यस्य ये विशेषा भेदास्तैः शालत इति व्यवायचातुर्यविशेष-शालिनी प्रकरणादुषा । पदे पदे तत्तदवसर इति यावत् । रसमनुरागं प्रकाशयामास 'काशृ दीप्तौ' इत्यतो ण्यन्ताल्लिट् ।। ७६ ।।

**विदग्धमुग्धामुखपद्मसम्भवा मनो हरन्ति क्लमवारिबिन्दवः ।**
**अमुष्य दन्तप्रभया सुशुभ्रया[1] विमिश्रिता**
**मौक्तिकसन्निभश्रियः ।। ७७ ।।**

**विदग्धेति** ।। विदग्धा कुशला च सा मुग्धा सुन्दरी तस्याः मुखपद्मात् सम्यग्भव उत्पत्तिर्येषां ते मुखपद्मसम्भवाः । यद्वा सम्भवत्यस्मिन्निति सम्भवः मुखपद्मं सम्भवो येषां ते मुखपद्मसम्भवाः । सुशुभ्रया दन्तानां प्रभया कान्त्या विमिश्रिताः संवलिता मौक्तिकानां सदृश्यः शोभा येषां ते मौक्तिकसन्निभश्रिय इत्यस्वपदविग्रहो बहुव्रीहिः । 'निभिसङ्काशनीकाश-प्रतीकाशोपमादय' इत्यत्र तथा व्यवस्थापनात् । क्लमवारिबिन्दवः स्वेदजल-कणाः । अमुष्यानिरुद्धस्य मनो हरन्ति । स्म शुभ्रयेति पाठे हरन्ति स्मेत्यन्वयः । 'लट् च स्म' इति लिडर्थे लट् । जह्रुरित्यर्थः ।।७७।।

**कमपीति कालमलमाकलय्य सः क्षणवत्पुनर्नवरसायने रते ।**
**दयितासखः सुखमुवास वासविप्रियसूनुसूनुरसुरेन्द्रमन्दिरे**
**।। ७८ ।।**

**।। इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्य-**
**विरचिते उषाहरणे महाकाव्ये पञ्चमः सर्गः ।। ५ ।।**

**कमपीति** ।। वासविर्वासवस्यापत्यम् 'अत इञ्' अर्जुनः तस्य प्रियः श्रीकृष्णः तत्सूनुः प्रद्युम्नस्तत्सूनुः सोऽनिरुद्धः । इति उक्तप्रकारेण क्षणवत् क्षणेन तुल्यम् अलमाकलय्य नीत्वा पुनर्नवरसस्यायन आश्रये रते रतिविषये दयितायाः प्रियाया उषायाः सखा दयितासखः सन् असुरेन्द्रस्य बाणासुरस्य

१. 'स्म शुभ्रया' इति पाठान्तरम् ।

मन्दिरे सुखं यथा तथा उवास 'वस निवासे' लिट् । मञ्जुभाषिणीनामकं वृत्तम् 'सजसा जगौ भवति मञ्जुभाषिणी'ति तद्वृत्तलक्षणम् । अनेन च ''सर्वत्र भिन्नसर्गान्तैः'' इति कविसमयोऽनुगृहीतः ।। ७८ ।।

।। इति श्रीमदुषाहरणव्याख्यायां रसिकरञ्जनीसमाख्यायां सूरीन्द्रश्रीमच्चरणशिष्यसुमतीन्द्रतीर्थयतिविरचितायां पञ्चमः सर्गः ।।५।।

## ।। अथ षष्ठः सर्गः ।।

**यदा यदूनां प्रवरः प्रणीतो मायाजुषोषामतमूर्जयन्त्या ।**
**अन्वीषुरेनं प्रतिबुद्ध्य मुग्धा निद्रान्तराश्लेषसुखाय तावत्**
**।। १ ।।**

**यदेति** ।। उषाया मतं वाञ्छितम् उषामतम् अनिरुद्धसंयोगरूपम् ऊर्जयन्त्या बलवत्कुर्वत्या । मायां जुषत इति मायाजुट् तया मायाजुषा मायाविन्या चित्रलेखया । यदूनां प्रवरोऽनिरुद्धो यदा प्रणीतः प्रकर्षेण नीतस्तदन्तःपुरात्स्वपुरं तावत्तदा मुग्धा मूढाः सुन्दर्यो वा प्रतिबुध्य निद्रान्तराश्लेषसुखाय निद्राया अन्तरे मध्ये आश्लेषसुखायालिङ्गनसौख्याय तादर्थ्ये चतुर्थी । एनमनिरुद्धं 'द्वितीयाटौस्वेन' इत्यन्वादेश एनादेश । अन्वीषुः 'इष इच्छायाम्' मार्गितवत्यः । अस्मिन् सर्गे उपेन्द्रवज्रेन्द्रवज्रयो-र्मिश्रणादुपजातिनामकं वृत्तम् । यत्र विशेषस्तत्र वक्ष्यामः ।। १ ।।

**उन्मील्य सम्यङ्नयनानि विष्व-**
**ग्व्यापारयन्त्यः प्रियवक्त्रचन्द्रम् ।**
**अगोचरीकर्तुमलं तरुण्यः स्वाप्नी**
**दशासाविति शङ्कमानाः ।। २ ।।**

**उन्मील्येति** ।। तरुण्यः सम्यङ् नयनानि उन्मील्य विष्वक् समन्ततः 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । व्यापारयन्त्यः व्यापारवन्ति कुर्वन्त्यः । व्यापारवच्छब्दात् 'तत्करोती'ति ण्यन्ताच्छतृ-प्रत्ययः । 'विन्मतोर्लुक्' । तास्सत्यः । असावस्माभिरनुभूयमाना दशावस्था । स्वाप्नी स्वप्ने भवा स्वप्नशब्दात् 'तत्र भव' इत्यण् । इति

शङ्कमानाः प्रियस्य वल्लभस्य वक्त्रमेव चन्द्रस्तमगोचरीकर्तुमविषयीकर्तुम् अलं समर्थाः । नापश्यन्नित्यर्थः । प्रियवक्त्रचन्द्रमिति रूपकमलङ्कारः ॥ २ ॥

**न शोशुभत्यत्र मुखानि तासां पर्युद्गलद्बाष्पजलाविलानि ।**
**नीहारधारापरिषेचितानि सरोरुहाणीव विजृम्भितानि ॥ ३ ॥**

**नेति** ॥ तासां तरुणीनां परितः समन्ततः उद्गलन्ति अवस्रंसन्ति बाष्पजलानि तैराविलानि कलुषाणि 'कलुषोऽनच्छ आविलः' इत्यमरः । मुखानि नीहाराणां हिमानां धाराभिः परिषेचितानि 'उपसर्गात्सुनोती'-त्यादिना सेचयतेरवयवस्य सिचेः षत्वं नवावयवस्यानन्यत्वादिति भाष्यादौ तथोक्तः । सरोरुहाणि पद्मानीव विजृम्भितानि विकसितान्यपि न शोशुभति पुनःपुनर्भृशं वा न शोभन्ते स्मेति शेषः । 'शुभ दीप्तौ' इत्यतो यङ् । 'अदभ्यस्तादि'ति झस्यादादेशोऽन्तादेशाप्रसक्तेः । शोशुभतीति रूपम् । उपमालङ्कारः ॥ ३ ॥

**अश्रावि निद्राजडितश्रवोभिः कथञ्चिदुच्चैर्यदुवंशमुख्यैः ।**
**उद्बोधवीणारवशङ्कयासां विलापनादः करुणाप्रसूतिः ॥ ४ ॥**

**अश्रावीति** ॥ आसां प्रमदानां करुणाप्रसूतिः उच्चैर्विलापनादः परिदेवनस्वनः । निद्रया जडितानि सञ्जातजडत्वानि स्तब्धानीत्यर्थः । श्रवांसि श्रोत्राणि येषां ते तथोक्ताः । तैर्यदुवंशमुख्यैर्यदुसन्तानश्रेष्ठैर्याद-वैरुद्बोधस्य वीणा तस्या रवो ध्वनिस्तस्य शङ्कया वितर्केण कथञ्चिदश्रावि । 'श्रु श्रवणे' कर्मणि लुङ् सकलप्राणिकरुणापात्रे प्रमदाप्रलापनादो यादवैः कृच्छ्रेण श्रुत इति भावः ॥ ४ ॥

**निर्गत्य सर्वे शयनालयेभ्यः किंकिरवव्याकुलिता भ्रमन्तः ।**
**अवाप्य हर्म्यं सहसाल्पशोभं निवेदितार्थाः कथमप्यमूभिः**
**॥ ५ ॥**

**निर्गत्येति** ॥ शयनालयेभ्यः शयनमन्दिरेभ्यः । निर्गत्य किं किमिति-रवैः शब्दैः व्याकुलिताः सञ्जातव्याकुलभावाः कर्तव्यमूढा इत्यर्थः । अत एव भ्रमन्तः अनवस्थितचित्ताः सर्वे यदुमुख्या अल्पा शोभा यस्य तदल्पशोभम् अनिरुद्धविरहदोषादिति भावः । हर्म्यं धनिनिवासरूपं सदनं सहसा अवाप्य । अमूभिर्हर्म्यवासिनीभिः स्त्रीभिः कथमपि निवेदितार्था आबोधितवृत्तान्ता अभवन्निति शेषः ॥ ५ ॥

**अज्ञातपौत्रस्थितयोऽच्युतस्य प्रज्ञावतातेन[1] बलानुजेन ।**
**सद्यः समाजे सकलाः समेताः सन्नाहभेरीरवसूचितार्थाः**
**॥ ६ ॥**

**अज्ञातेति** ॥ यस्याच्युतस्य । अज्ञाता पौत्रस्यानिरुद्धस्य स्थितिर्वृत्तिर्यैस्ते तथोक्ताः । अनेन 'ब्रह्मादनं ज्योतिरजन्यनेन' इत्यादाविव एनादेशाभावः । तेनेति पाठे तु नानुपपत्तिः । प्रज्ञावता भूतभविष्य-द्वर्तमानज्ञानिना 'स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता ॥' इति वचनात् । बलानुजेन बलराम-स्यावरजेन श्रीकृष्णेन सन्नाहस्य भेरी सन्नाहभेरी तस्या रवेण ध्वनिना सूचितोऽर्थः प्रयोजनं येषां ते तथोक्ताः । सकला यादवाः समाजे सदसि सद्यस्तत्क्षणे समेताः सङ्गताः अभवन्निति शेषः ॥ ६ ॥

---

१. 'प्रज्ञावता तेन' इति पाठान्तरम् ।

**तत्राब्रवीदुद्धतकन्धरोऽसौ धुरन्धरो यो यदुवंशकेतोः ।**
**प्राप्ताधिकारः पृतनाधिपत्ये चिन्ताकुलश्चिन्तकवत्सलं**
**तम् ।। ७ ।।**

**तत्रेति** ।। तत्र समाजे उद्धता कन्धरा ग्रीवा यस्य स उद्धतकन्धरः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । यदुवंशकेतोः श्रीकृष्णस्य पृतनाधिपत्ये सेनाधिपतित्वे प्राप्तोऽधिकारः स्वाम्यं येन स तथा । चिन्तयाऽऽकुलश्चिन्ताकुलः । धुरं धारयतीति धुरन्धरः । 'सञ्ज्ञायां भृतॄवृजिधारिसहितपिदम्' इति धारयतेः खच् । 'खचि ह्रस्वः' इत्युपधाह्रस्वः । 'वाचंयमपुरन्दरौ च' इति चकारादगागमः । 'अरुर्द्विषदजन्तस्य' इति मुमागमः । योऽसावनाधृष्टिनामा अमात्यः । चिन्तकेषु वत्सलं 'वत्सांसाम्यां कामबल' इति वत्सशब्दादनुरागवाचिनो मत्वर्थीयो लच् । अनुरागवन्तं चिन्तकवत्सलं तं कृष्णमब्रवीत् । 'ब्रूञ् व्यक्तायां वाचि' इत्यतो लङ् ।। ७ ।।

**अहो नु धैर्यं खलु तस्य पुंसश्चित्ते**
**चिताभस्म भविष्यतो द्राक् ।**
**योऽसौ विशङ्कं रहयाश्चकार**
**कुमारमस्मत्कुलमौलिरत्नम् ।। ८ ।।**

**अहो इति** ।। द्राग् झटिति चिताभस्म भविष्यतः स्मशानभस्मभावं प्राप्स्यमानस्य पुंसश्चित्ते धैर्यम् अहो नु पृच्छायां खलुशब्दश्चानुनये । योऽसौ पुमान् विशङ्कं क्रियाविशेषणम् आतङ्करहितः सन्निति यावत् । अस्माकं कुलस्य मौलिरत्नं शिखामणिस्थानीयं कुमारमनिरुद्धं रहयाश्चकार । 'रह

त्याग' इत्यतो ण्यन्ताल्लिट् त्याजयामास । तस्य चित्ते धैर्यमहो नु खलु ॥ ८ ॥

**उद्योतिताशेषदिशि प्रदीप्ते खद्योतबुद्ध्यात्र पतङ्गचेष्टः[1] ।**
**को न्वेष ते कोपमरुत्प्रवृद्धे प्रतापतीव्रानल उत्पतिष्णुः[2] ॥ ९ ॥**

**उद्योतितेति** ॥ त इति श्रवणात् कृष्णेति ग्राह्यम् । भोः कृष्ण ते तव । उद्योतिताः प्रदीपिता अशेषा दिशो येन तस्मिन् । कोप एव मरुद् वायुः तेन प्रवृद्धेऽत्र एतस्मिन् प्रदीप्ते प्रताप एव तीव्रस्तिग्मश्चासावनलोऽग्निश्च तस्मिन् खद्योतबुद्ध्या ज्योतिरिङ्गणोऽयमिति भ्रान्त्या पतङ्गस्य शलभस्य चेष्टेव चेष्टा यस्यासौ पतङ्गचेष्टः 'पतङ्गः शलभे शालौ खगे कमलबान्धवे' इति शब्दरत्नाकरः । शलभ इव पतन्निति यावत् । एष ईदृशः को नु पृच्छायां नुशब्दः कोनाम उत्पतिष्णुः उत्पतनशीलः । 'अलङ्कृञ् निराकृञ् प्रजनोत्पचोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्' इति उत्पूर्वात् पतते-रिष्णुच्प्रत्ययः । प्रतापतीव्रज्वलने पतिष्णुरिति पाठे केवलात्पततेरिष्णुच् सम्पादनीयः । केचित्तु, प्रतापतीव्रानलः पतङ्गचेष्टः 'पतङ्ग पक्षिसूर्ययोः' इति कविदर्पणात् पतङ्गः पक्षी तस्य चेष्टेव चेष्टा यस्यासौ पतङ्गचेष्टः । खद्योतबुद्ध्या खद्योतोऽयमिति भ्रान्त्या पक्षी द्योताय स्वनीडं खद्योतं नयतीति प्रवादः । उत्पतिष्णुरुत्पतनशीलः पतनेच्छावानिति यावत् । ईदृशः को नु । को नामैतादृशप्रतापानले पतन् जिजीविषेदिति भाव इति व्याचक्षते । प्रतापतीव्रानल इति रूपकालङ्कारः । इत्यब्रवीदनाधृष्टि-

---

१. 'खद्योतबुद्ध्याप्तपतङ्गचेष्टः' इति पाठान्तरम् ।
२. 'प्रतापतीव्रज्वलने पतिष्णुः' इति पाठान्तरम् ।

रित्यन्वयः । खद्योतबुद्ध्याप्तपतङ्गचेष्टेति पाठे खद्योतस्य बुद्धिः खद्योतबुद्धिः तया करणेनाप्ता प्राप्ता पतङ्गस्य चेष्टेव चेष्टा यस्य स खद्योतबुद्ध्याप्तपतङ्गचेष्टः को नूत्पतिष्णु प्रतापतीव्रानले पतङ्गचेष्टः को नु इत्यर्थः ॥ ९ ॥

**सौन्दर्यसन्दर्भनिधानपात्रैर्गात्रैरवज्ञातरुचं द्युभाजाम् ।**
**विमानवत्यो वनितास्तु नूनं रिरंसया निन्युरमोघकीर्ते**
**॥ १० ॥**

**सौन्दर्येति** ॥ अमोघकीर्ते मोघा वितथा न भवतीत्यमोघा कीर्तिर्यस्य स तथा तत्सम्बुद्धिः श्रीकृष्ण । विमानवत्य आरूढविमाना वनिता अत्यन्तानुरागवत्यः 'वनिता जनितात्यर्थानुरागायां च योषिति' इत्यमरः । तादृश्यः स्त्रियस्तु स्त्रिय एव । सौन्दर्यस्य सन्दर्भो रचना तस्य निधानमवस्थानं तस्य पात्रैः ''ग्रथनं ग्रथनं गुम्भः सन्दर्भो रचना मता'' इति हलायुधः । गात्रैरङ्गैः । ''गात्रमङ्गे कलेवर'' इति विश्वः । द्युभाजां दिवं भजन्तीति द्युभाजस्तेषां देवानां 'भजो ण्वि'रिति ण्विप्रत्ययः । अवज्ञाता अवमानिता रुक् शोभा येन तमवज्ञातरुचं देवानां सौन्दर्यमपि येन निन्दितमिति भावः । अनिरुद्धं रिरंसया रन्तुमिच्छया नूनमिष्टदेशं निन्युः 'णीञ् प्रापणे' लिट् नीतवत्यः । इत्यब्रवीदित्यन्वयः । नूनमित्युक्तेरुत्प्रेक्षालङ्कारः । 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः ॥' इति ह्यालङ्कारिकाः ॥ १० ॥

**जितः सुरेन्द्रः कृतमत्सरः स्वित्**
**करोति भावं कुहकानुरूपम् ।**

**तथाहि नान्येन कृतात्मनासौ**
**पराभवोऽस्मासु वितर्कणीयः ।। ११ ।।**

**जित इति** ।। जितः पराभूतः पारिजातहरणादौ सुरेन्द्रोऽत एव कृतमत्सरः कृतो मत्सरोऽन्यशुभद्वेषो येन स तथोक्तः सन् । कुहकस्य कापटिकस्यानुरूपम् अनुगुणं भावं क्रियां चेष्टां वा 'शठः कापटिकोऽनृजुः कुहकः' "भावो लीला क्रिया चेष्टा भूत्यभिप्रायजन्तुषु" इति यादवकेशवौ । करोति स्वित् करोति नु 'स्वित् प्रश्ने च वितर्के च' इति विश्वः । इन्द्र एवैतं व्यापारं कृतवान्नूनमिति भावः । तथाहि, अन्येन कृतात्मना मनस्विना असावनिरुद्धापहारलक्षणपराभवोऽस्मासु न वितर्कणीयो न शङ्कनीयः । इत्यब्रवीदित्यन्वयः ।। ११ ।।

**अपि प्रपन्नो भवतः प्रसादात् त्रैलोक्यभर्तृत्वमनन्यगम्यम् ।**
**यद्येतदिन्द्रः कृतवान्व्यलीकमधः[१] क्रियेत प्रसभेन मूढः**
**।। १२ ।।**

**अपीति** ।। अमोघकीर्ते श्रीकृष्ण भवतः प्रसादात् प्रसत्तेरनुरोधाद्वा 'प्रसादस्तु प्रसत्तौ स्यात् स्वास्थ्ये चऽनुरोधन' इति केशवः । अनन्यगम्यम् अन्येन गन्तुमशक्यं प्रसादसामग्रहीनेन दुर्लभमित्यर्थः । त्रैलोक्यभर्तृत्वं त्रिलोक्येव त्रैलोक्यं 'चतुर्वर्णादीनां स्वार्थ' इति वक्तव्यात् ष्यञ् तस्य भावस्तत्त्वं 'त्रिजकाभ्यां कर्तरी'ति प्रतिषेधेऽपि पत्यर्थभर्तृशब्दस्य याजकादिगणपाठात्समासः अपत्यर्थत्वे तु "वज्रस्य भर्ते"त्येवेति शाब्दिकाः । प्रपन्नः गत्यर्थत्वात्कर्तरि क्तः । प्राप्तवानपीन्द्रः । यदि एतत्कुमारापहाररूपं व्यलीकमप्रियं 'व्यलीकं त्वप्रियेऽनृत' इत्यमरः ।

१. 'कृतवानलीकमधः' इति पाठान्तरम् ।

अलीकमिति पाठे 'अलीकमप्रियातथ्य' इति कविदर्पणः । तर्हि मूढः प्रसभेन बलात्कारेण 'प्रसभं तु बलात्कारो हठ' इत्यमरः । त्वयाधः क्रियेत विधौ लिङ् अधः करणीयः । इत्यब्रवीदित्यन्वयः । अपराधकरणस्य हेतोर्हेतुमताधः करणेन सह वर्णनाद्धेतुरलङ्कारः ।। १२ ।।

**आकर्ण्य वाणीमिति यादवेन्द्रः सृष्टामनाधृष्टिमुखादितीमाम् ।**
**उवाच वाग्मिन्ननिरूपणीया कृतानुरूप्येण गतिर्नराणाम्**
**।। १३ ।।**

**आकर्ण्येति** ।। यादवेन्द्रः श्रीकृष्णः इत्युक्तप्रकारेणानाधृष्टिमुखात् अनाधृष्टिनामा कश्चिदमात्यः तस्य मुखात् सृष्टां विनिर्गताम् इमां वाणीमाकर्ण्य श्रुत्वा हे वाग्मिन् 'वाचो ग्मिनिः' प्रशस्तवचन नराणां कृतानुरूप्येण कृतानि कर्माणि तदानुरूप्येण तदानुगुण्येन भवन्ती गतिः त्वया न निरूपणीया । इन्द्रकृता वनिताकृता वेत्यादिरूपेण निरूपणं नार्हति गतिः किन्तु तत्तत्कर्मानुसारिण्येवेत्युवाच ।। १३ ।।

**नेयं हरेर्वृत्तिरमुष्य बन्धोः कार्याय नो भूमितलावतारः ।**
**सत्यप्रमत्ता[१]श्चरणेन मान्या न ताड्यन्तः कुलदेवतां स्वाम्**
**।। १४ ।।**

**नेयमिति** ।। इयं कुमारापहाररूपा वृत्तिर्व्यापारः । हरेर्न । इन्द्रकर्तृका न भवति । यतोऽमुष्य परोक्षतया स्थितस्य बन्धोः स्वजनस्य इन्द्रस्य कार्याय प्रयोजननिष्पत्तये नोऽस्माकं भूमितलेऽवतारः । अवतरन्त्यनेन गुणचरित्राणीति करणे घञ् । प्रादुर्भावः ।। शरणदेवस्तु, बाहुलकाद् भावे

१. 'सत्यं प्रमत्ता' इति पाठान्तरम् ।

घञित्यवदत् । लोके हि सत्ये प्रमत्ताः सत्यविषयेऽनवधानुयुक्ताः सत्यप्रमत्ताः अत एव स्वां कुलदेवतां चरणेन ताड्यन्तो जनाः न मान्याः । सत्यं प्रमत्ता इत्यपि क्वचित्पाठः । इन्द्रश्च नैतादृश इति भावः । इति भगवाननाधृष्टिमुवाचेति पूर्वेणान्वयः ।। १४ ।।

इतोऽपि नेन्द्र एवमागस्कर्तुमर्हतीति भगवानाह–

**स सत्यभामाभुजसक्तशार्ङ्गप्रमुक्तबाणव्रणकर्कशाङ्गः ।**
**जानाति चापाहृतपारिजातः शचीपतिर्युद्धरसोत्सवं मे ।।१५।।**

**स इति** ।। अपाहृतः पारिजातो यस्य सोऽपाहृतपारिजातः सत्यभामाया भुजे सक्तं सम्बद्धं शार्ङ्गं तन्नामकं चापं तेन प्रमुक्ताश्च ते बाणाश्च तेषां व्रणेन कर्कशानि निष्ठुराण्यङ्गानि यस्य स तथोक्तः 'कर्कशे तु घनक्रूरकठोरखरनिष्ठुरा' इति शब्दरत्नाकरः । शचीपतिर्मे मम युद्धरसोत्सवं युद्धानुरागोत्सेकम् । 'उत्सवस्तु कोपोत्सेकमहेष्वपि । इच्छाप्रसार' इति कविदर्पणः । इत्युवाचेति सम्बन्धः । सत्यभामेत्यादिविशेषणस्य साभिप्रायत्वात्परिकरालङ्कारः ।। १५ ।।

**प्रायः कयाचित्सुरवैरिदूत्या नीतः स तास्कर्यपटुत्वभाजा ।**
**विवेकशून्याः स्त्रिय एव दक्षा मायाभृतः साहसकर्मणीह**
**।। १६ ।।**

**प्राय इति** ।। सोऽनिरुद्धस्तास्कर्ये तस्करत्वे पटुत्वं पाटवं भजन्तीति भजो ण्विप्रत्ययः तस्करशब्दाद्भावे ष्यञि च तास्कर्यपटुत्वभाक् तया कयाचित् । सुरवैरिणोऽसुरस्य दूत्या । प्रायो नीतः । एतमर्थमर्थान्तरन्यासेनाह– **विवेकशून्या इति** ।। तथाहि, मायाभृतोऽत एव विवेकशून्याः

स्त्रिय एव । इहास्मिन् साहसकर्मणि अतर्किते कार्ये 'अतर्कितप्रवृत्तौ च साहसं क्लीबम्' इति केशवः । दक्षाः समर्थाः इत्युवाचेत्यन्वयः ॥१६॥

**इतीरयन् संसदि यादवानां प्रेक्षावतामग्रसरः समीक्ष्य ।**
**ऐन्द्रीं दिशं पाण्डुमुखीं खरांशोरभींशुलेशैः पुनराह कृष्णः**
**॥ १७ ॥**

**इतीति** ॥ यादवानां संसदि सभायां 'सभा समितिसंसद' इत्यमरः । इति चतुश्श्लोक्युक्तप्रकारेणेरयन् ब्रुवन् प्रेक्षावतां बुद्धिमताम् अग्रसरोऽग्रगामी कृष्णः । खरांशोः सूर्यस्याभींशुलेशैः स्वल्पै रश्मिभिः 'अभींशु प्रग्रहे रश्मौ' इति शाश्वतः । पाण्डुमुखीमैन्द्रीं दिशं प्राचीं समीक्ष्य पुनराह ब्रवीति 'ब्रुवः पञ्चानामादित आहो ब्रुव' इति ब्रूधातोराहादेशस्तिपो लणादेशश्च । ननु कथमग्रसर इति यावता 'पुरोऽग्रतोऽग्रेषु सर्ते'रिति टप्रत्ययं विदधत्सूत्र-कारोऽग्रशब्दमेदन्तं निपातयति । सत्यम्, 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादनेदन्तत्वमप्यस्तीति हरदत्तः । अत एव 'यूथं तदग्रसर' इति कालिदासः ॥ १७ ॥

महाकाव्यलक्षणान्तर्गतं सूर्योदयवर्णनं कर्तुं कृष्णवचनमनुवदति कविः–

**पादास्त्रतारारुतरोदनोऽसौ क्षीणप्रभामण्डलचन्द्रवक्त्रः ।**
**कालस्तुषारास्रजलाभिपातः सशोकमस्मानुपतिष्ठतीव ॥१८॥**

**पादेति** ॥ पादौ चरणावस्त्रे आयुधे यस्य स पादास्त्रः कुक्कुटः 'कुक्कुटश्चरणायुध' इत्यमरः । 'आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियामिति' च । आरुतं स्वरस्तदेव रोदनं यस्य स तथोक्तः । क्षीणं प्रभामण्डलं यस्य स तथा स चासौ चन्द्रश्च स एव वक्त्रं मुखं यस्य स तथा

'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः । तुषारो हिममेवास्र-जलाभिपातः नयनजलस्रवो यस्य स तथोक्तः । असौ काल उषःकालः सशोकं शोकसहितं यथा तथा । अस्मान् कुमारादर्शनेन क्लिश्यतः सद-स्यानुपतिष्ठतीव । 'उपान्मन्त्रकरण' इत्यात्मनेपदं तु मन्त्रकरणकत्वा-भावाद्देवपूजादेरविवक्षणाच्च न भवति । अत एव तत्र भिक्षू राजान-मुपतिष्ठतीत्यस्य उपगच्छतीत्येवार्थ उक्तः । अत्र रूपकानुप्राणितोत्प्रेक्षा-लङ्कारः ।। १९ ।।

विरहिणीमुखवर्णनश्लिष्टतयैन्द्रीमुखवर्णनं करोति–

**कष्टं विनष्टद्युतितारमेतद्दिशां परिस्रस्ततमोऽञ्जनानाम् ।**
**आसन्नगूढोज्ज्वलतापपाण्डु मुखं वधूनामिव नागरीणाम्**
**।। १९ ।।**

**कष्टमिति** ।। विनष्टा द्युतिः कान्तिर्यस्य तद्विनष्टद्युति तथाविधं तारं नक्षत्रं यस्य तत्तथोक्तम् । स्त्रीमुखपक्षे तारका कनीनिका यस्येति विग्रहे 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । 'कनीनिकर्क्षयोस्तारो द्वयोरिति' नानार्थरत्नमाला । 'तारं च रजतेऽत्युच्चस्वरेऽप्यन्यवदीरितम् । ऋक्षाक्षि-मध्ययोस्तारा' इति विश्वश्च । आसन्ने सन्निहिते गूढेनाव्यक्तेनोज्ज्वलेन विकसितेन 'शृङ्गारे ना विकसिते स्वच्छे दीप्ते त्रिषूज्ज्वल' इति नानार्थरत्नमाला । तापेन पाण्डुरं मुखं नारीणां वधूनामिव परिस्रस्तं परिच्युतं तमोऽन्धकार एवाञ्जनमन्यत्रान्धकार इवाञ्जनं यासान्तास्तथोक्ता-स्तासां दिशामुखं कष्टं 'कृच्छ्रगहनयोः कष' इति कषतेर्निष्ठायास्तुण्णिषेधः । क्लेशभरितत्वाद्दुर्दर्शमिति भावः । श्लिष्टोपमालङ्कारः । नगरे भवा नागर्यस्तत्र भव इत्यण् अणत्वात् 'टिड्ढाणञिति' ङीप् । तेन 'नगरात्कुत्सन-

प्रावीण्ययोः' इति वुञ्प्रत्ययस्तु कुत्सनप्रावीण्ययोरविलक्षणान्न भवतीति नागरिकानामित्यनुक्त्वा नागरीणामित्येवोक्तम् ।। १९ ।।

**लीनोऽपि मन्दं दिवि चेतसीव**
**प्रकाशयन् प्रीतिकरीं स्वलक्ष्मीम् ।**
**तिरोभवन्नप्यतिरोभवन्वा कुमारव-**
**त्सम्प्रति भाति भानुः ।। २० ।।**

**लीनोऽपीति** ।। उपासकानां चेतसीव दिवि लीनोऽपि प्रीतिकरीं 'कृञो हेतुताच्छील्ये'ति करोतेस्ताच्छील्ये टः । टित्त्वान्ङीप् । प्रीतिं कुर्वतीं स्वलक्ष्मीं स्वशोभां मन्दं यथा तथा प्रकाशयन् तिरोधानं प्राप्नुवन्नपि अतिरोभवन्वा अनन्तर्दधदिव वाशब्द इवार्थे 'वा विकल्पोपमानयोः' इत्यमरः । विद्यमानः । भानुः सूर्यः सम्प्रतीदानीम् 'एतर्हि सम्प्रतीदानीम्' इत्यमरः । कुमारवदनिरुद्धेन तुल्यं यथा भाति 'भा दीप्तौ' लट् ।।२०।।

**अत्युग्रधाम्नो मृदुतेजसोऽद्य बालस्य कालादुदयं यियासोः ।**
**समन्त्रकं नः करमुक्तकाण्डमाप्यायितौजः प्रणुदेदशर्म**
**।। २१ ।।**

**अत्युग्रेति** ।। कालात् कालं प्रतीक्ष्य । उदयमनिरुद्धपक्षे कालादुदयमभ्युदयम् उषाहरणरूपम् यियासोर्यातुमिच्छोः । अद्यास्मिन्नहनि मृदु तेजो धाम प्रतापो वा यस्य स मृदुतेजास्तस्य बालस्यात्युग्रं धाम रश्मिः प्रभावो यस्य सोऽत्युग्रधामा तस्य सूर्यस्यानिरुद्धस्य च । नोऽस्माकं समम् एकं मन्त्रकेण गायत्र्यादिरूपेणालोचनेन वा सहितं 'स्वार्थे कप्रत्ययः' करेणाञ्जलिना हस्ते वा मुक्तं प्रमुक्तं काण्डं जलं शरो वा 'काण्डं नाले

तरुस्कन्धे बाणेऽवसरनीरयोः' इति विश्वः । आप्यायितं वृद्धम् ओजो दीप्तिर्बलं वा यस्य तत्सत् 'स्यादोजोबलतोययोः' 'दीप्तौ प्रकाशेऽवष्टम्भ' इति केशवः । अशर्म दुःखं प्रणुदेत् 'नुद प्रेरणे' लिङ् । परिहरेत् 'उपसर्गादसमासेऽपिणोपदेशस्य' इति णत्वम् । श्लेषालङ्कारः ।। २१ ।।

**कासौ कुमारः सुकुमारवेषः**
**केनापि नीतः किमुतात्यकार्यः[१] ।**
**न सर्वथा तेन विना यदुनां मानो**
**महीयान् महितापि कीर्तिः ।। २२ ।।**

**केति** ।। सुकुमारो मनोज्ञो वेष आकल्पो यस्य स तथोक्तः । असौ कुमारोऽनिरुद्धः क्वास्ति केनापि नीतः किम् । अथवा अत्यकार्योऽतिशयितमकार्यमकर्तव्यं शास्त्रविप्रतिषिद्धं कर्म यस्य स तथोक्तः । उत किम् वितर्के 'किं किमूत च' इत्यमरः । अत्ययार्क इति पाठे तु सविमर्शमाह– केनापि कापुरुषेण नीतोऽपहृत इति केनापि नीतः सुकुमारवेषोऽनिरुद्धः क्वास्तीति वा योजना । सूर्यप्रकाशे सुकुमारगतिः सुग्रहेत्यत उक्तम् अत्ययार्क इति । अत्ययस्य विनाशस्यास्तमयस्य सम्बन्धी अर्कः सूर्यः । अस्तं गतत्वादेव केनापि नीत इति किमुत वक्तव्यम् । नीतस्यापरामर्शे को दोष इत्यतोऽस्ति महान् दोष इत्याह– **न सर्वथा तेनेति** ।। तेनानिरुद्धेन विना ''पृथग्विनानाभिस्तृतीया'' इति तृतीया । यदूनां यदुशब्दो यादवलक्षक इत्युक्तमेव । यादवानामस्माकं महीयान् अतिशयेन महान् मानश्चित्तसमुन्नतिः महिता जगत्यां पूजिता कीर्तिरपि सर्वथा न शोभत इति शेषः । मानो महीयान्न । कीर्तिरपि महिता नेति वा नञध्याहारेण योजना ।। २२ ।।

---

१. 'अत्ययार्क' इति पाठान्तरम् ।

**स किं सुराणामथवासुराणां येषां वशे तिष्ठति सन्निरुद्धः ।**
**तान् पाटयाम्याशु शरैः शिताग्रैरिति[१] प्रतिज्ञां भगवान् व्यधत्त**
**॥ २३ ॥**

**स इति** ॥ सोऽनिरुद्धो येषां सुराणां वा । असुराणां वा वशे सन्निरुद्धस्तिष्ठति । तान् सुरानसुरान्वापि शिताग्रैः शितानि शातानि अग्राणि येषां तैः 'शाच्छोरन्यतरस्याम्' इति इत्वविकल्पः । सितग्रैरिति पाठे सितानि श्वेतानि शाणोल्लीढानि अग्राणि येषां तैरित्यर्थः । शरैर्बाणैराशु पाटयामि ''पट गतौ'' विदारयामीति यावत् । इति भगवान् श्रीकृष्णः प्रतिज्ञां व्यधत्त । 'डुधाञ् धारणपोषणयोः' इत्यस्य विपूर्वस्य करोत्यर्थकत्वं व्युत्पन्नम् । लङ् । अकरोदित्यर्थः ॥ २३ ॥

**उत्तस्थुरत्याकुलमानसा द्राक् सान्ध्यं परं ज्योतिरुपासितुं ते ।**
**गुरुं प्रबोध्यादर एव काले कृत्येषु साधून् त्वरयत्यवश्यम्**
**॥ २४ ॥**

**उत्तस्थुरिति** ॥ अत्याकुलं मानसमुद्विग्नं मनो येषां ते तथोक्ताः । ते यादवाः सान्ध्यं सन्ध्यायां भवं 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यण्प्रत्ययः । कालं परग् उत्तमं ज्योतिः सूर्यं शब्दार्थभूतम् उपासितुं द्राग् द्रुतम् उत्तस्थुः । 'ष्ठा गतिनिवृत्तौ' इत्यतो लिट् उत्थितवन्तः । तथाहि–गुरुभिः प्रबोध्य आदरः श्रद्धातिशय एव 'आदरो भजनं भक्तिः' इति भगवत्पादीयाभिधानम् । काले सन्ध्यावन्दनाद्यनुष्ठानसमये कृत्येषु साधून् सज्जनान् अवश्यं यथा तथा त्वरयति त्वरायुक्तान् करोति 'ञित्वरा सम्भ्रम' इत्यतो ण्यन्ताल्लट् ॥ २४ ॥

१. 'सिताग्रैरिति' इति पाठान्तरम् ।

**ततः प्रभाते प्रथमाक्षिपातैर्हरेर्महिष्यो ददृशुर्जविन्यः ।**
**तं पारिजातं खलु यत्र दृष्टे भवत्यवन्ध्यं जननं जनानाम्**
**॥ २५ ॥**

**तत इति** ॥ ततः सन्ध्यावन्दनाद्यनुष्ठानायोत्थानानन्तरं हरेर्महिष्यः कृताभिषेकाः स्त्रियः । जवो वेगस्तद्वत्यः सत्यः । प्रभाते प्रत्यूषे 'प्रत्यूषोऽहर्मुखं कल्पमुषः प्रत्युषसी अपि प्रभातं च' इत्यमरः । प्रथमाक्षिपातैः प्रथमेऽन्यदर्शनात्पूर्वकाले भवा अक्षिपाता निरीक्षणानि तैर्यत्र यस्मिन् वृक्षे खलु दृष्टे जनानां जननं जन्म अवन्ध्यं सफलं भवति । तं पारिजातं पारिजातनामकं देवतरुं ददृशुः ''दृशिर् प्रेक्षणे'' लिट् । दृष्टवत्यः ॥ २५ ॥

**मृगाङ्कराजस्य कराभिषङ्गान्निमीलितान्यम्बुरुहेक्षणानि ।**
**अस्तप्रभे तत्र विकासमीयुस्तासां सतीनां नलिनीवधूनाम्**
**॥ २६ ॥**

**मृगाङ्केति** ॥ तासामिति श्रवणाद्यासामित्यध्याहारः । यासामम्बुरुहेक्षणानि पद्मपलाशसदृशानि नयनानि मृगाङ्कश्चन्द्र एव राजा मृगाङ्कराजः 'राजाहस्सखिभ्यष्टच्' तस्य । प्रभुकरस्पर्शोऽपि हर्षो नास्तीति द्योतयितुं राजपदम् । कराणां किरणानामभिषङ्गः सम्बन्धः तस्मान्निमीलितानि मुकुलितानि । तत्र तस्मिन् मृङ्गाङ्कराजेऽस्तप्रभे निरस्तरुचौ सतीनां पतिव्रतानां नलिन्य एव वध्वस्तासाम् अम्बुरुहान्येव ईक्षणाणि नयनानि अम्बुरुहेक्षणानि विकासं स्फुटत्वमीयुः । 'इण् गतौ' लिट् । सतीनामिति विशेषणस्य पतिव्रतात्वात्परपुरुषकराभिमर्शो न हर्षहेतुरित्यभिप्रायगर्भत्वात्परिकरालङ्कारः । नलिनीवधूनामित्यादौ रूपकादिरप्यूह्यः ॥ २६ ॥

**निर्गच्छतः षिद्गजनस्य वक्षांस्युदीर्णसन्ध्याघनपेशलानि ।**
**गाढाङ्कपालीसुखसूचकानि चकाशिरे कुङ्कुमपङ्किलानि ।।२७।।**

**निर्गच्छत इति** ।। गणिकागृहान्निर्गच्छतो बहिस्सरतः षिद्गजनस्य विटलोकस्य 'षिद्गः पल्लविको विट' इत्यमरः । कुङ्कुमेन पङ्किलानि पिच्छादित्वान्मत्वर्थीय इलच् । अत एव सन्ध्यायाः सन्ध्यासमयस्य घना मेघास्त इव पेशलानि चारूणि 'चारे दक्षे च पेशल' इत्यमरः । गाढा दृढा च साङ्कपाली च समालिङ्गनं तस्याः सुखस्य सूचकानि गाढाङ्कपालीसुखसूचकानि 'आलिङ्गनः श्लेष उपगूहनमालिङ्गनमस्त्र्यङ्कपालिः' इति शब्दरत्नाकरः । अकेनापि शेषषष्ठ्याः समासः । वक्षांस्युरस्स्थलानि चकाशिरे 'काशृ दीप्तौ' प्रकाशितवन्तीव । वक्षांस्युदीर्णेत्यत्र यथा न च्छन्दोभङ्गस्तथोक्तमधस्तात् ।। २७ ।।

**उद्यन् म्रदीयाननुरक्तलोकः क्रमेण तिग्मस्तपनो बभूव ।**
**तैक्ष्ण्यं नयत्युन्नतिरत्यधीरं न तादृशो दृष्टिसहो जनोऽपि ।। २८ ।।**

**उद्यन्निति** ।। उदयं प्राप्तवान् अत एव म्रदीयान् अतिशयेन मृदुः कोमलः मृदुशब्दादीयसुनि ''रऋतो हलादेर्लघोः'' इति ऋकारस्य रेफादेशः । अनुरक्तो लोको येन स तथोक्तः । तपनः सूर्यः 'द्युमणितपनप्रद्योतनभास्वदादित्या' इति शब्दरत्नाकरः । क्रमेण तिग्मस्तीक्ष्णो बभूव । इममर्थमर्थान्तरन्यासेनाह– **तैक्ष्ण्यमिति** ।। अत्यधीरमपि अत्यन्तं म्रदीयांसमपि उन्नतिरुन्नतपदारोहः तैक्ष्ण्यं तिग्मतां नयति । तादृशो जनो दृष्टिसहोऽपि न । यतस्तिग्म इति भावः । एवं सूर्योदयो वर्णितो नवश्लोक्या ।। २८ ।।

अथेदानीं श्रीकृष्णस्य व्यापारमाह–

**प्रतिग्रहानन्तरमीरिताशीर्द्विजेन्द्रमुख्यैः कृतवह्निपूजः ।**
**हरिर्महीमण्डलमङ्गलात्मा चकार सन्मङ्गलमण्डलानि ।।२९।।**

**प्रतिग्रहेति** ।। प्रतिग्रहः स्वीकारः तदनन्तरं प्राप्तहिरण्याम्बरवस्तुभिरिति यावत् । द्विजेन्द्रमुख्यैर्द्विजेन्द्राणां मुख्यैर्ब्राह्मणोत्तमेष्वपि प्रमुखैरित्यर्थः । ईरिता आशीराशीर्वादो यस्य स तथा कृतवह्निपूजः कृता वह्नीनामाहवनीयादीनां पूजा येन स तथा । महीमण्डलस्य भूवलयस्य मङ्गलस्वभावो हरिः श्रीकृष्णः । सन्ति च तानि प्रसिद्धानि यानि मङ्गलानि गोदर्शनदधिदर्शनादिरूपाणि तेषां मण्डलानि निरन्तरायकल्याणसार्थांश्चकार । अत्र हेतुदीपकमलङ्कारः । लक्षणं तूक्तम् । अस्ति चात्रापि अग्निपूजनमाशीर्ग्रहणं मङ्गलानुष्ठानमिति क्रियागुम्भनम् ।। २९ ।।

**चर्चावतामर्चितदेवतानामुच्चावचाचारविदां यदूनाम् ।**
**सभागतं तं दयितं मघोनो मनोरथज्ञो मुनिराससाद ।।३०।।**

**चर्चेति** ।। चर्चा चन्दनादिना देहविलेपनं तद्वतां 'चर्चा स्याच्चर्ममुण्डयां चिन्तास्थासकयोरपि' इति हैमः । स्थासकमङ्गविलेपनम् । अर्चिताः पूजिता देवता यैस्तेषाम् । उच्चावचा अनेकभेदाः 'उच्चावचं नैकभेदम्' इत्यमरः । ते च ते आचारास्तान्विदन्तीत्युच्चावचाचारविदः तेषां यदूनां यदोरपत्यानि यदव इति यदुशब्दोऽपत्ये लक्षणया वर्तते । 'रघूणामन्वयं वक्ष्ये' 'निरुध्यमाना यदुभिः कथञ्चित्' इत्यादि कालिदासादिप्रयोगो लक्षणयैव राघवेषु यादवेषु च प्रवर्तनीय इति वैय्याकरणाः । यादवानां सभां गतं मघोन इन्द्रस्य दयितं प्रियं तं कृष्णं मनोरथज्ञो मुनिर्नारद

आससाद 'षद्लृ विशरण गत्यवसादनेषु' लिट् प्रापेत्यर्थः । मनोरथज्ञ इति विशेषणस्य साभिप्रायत्वात्परिकरालङ्कारः ।। ३० ।।

**प्राप्तापरोक्षं हृदि निर्विकल्पं सदा सदानन्दचिदेकरूपम् ।**
**नारायणं नीरदनीलवर्णमाराधयिष्यन् बहिरात्तमूर्तिम्**
**।। ३१ ।।**

**प्राप्तेति** ।। हृदि सदा प्राप्तमपरोक्षमपरोक्षे दर्शनकर्मत्वं यं येनेति वा प्राप्तापरोक्षं निर्विकल्पं 'विकल्पः संशय' इति हरिदीक्षितः । अयमन्यो वा सर्वोत्तम इति सन्देहानास्कन्दितं 'विचिकित्साविकल्पश्च' इति हलायुधः । स्वान्तर्भेदशून्यं वा । संश्चासावानन्दश्च चित् ज्ञानं चैकं मुख्यं रूपं विग्रहो यस्य स सदानन्दचिदेकरूपस्तम् । सत्त्वमानन्दचिदोर्विशेषणम् । तत्रानन्दस्य सच्छब्दितनिर्दोषत्वं सातिशयत्वादि दोषराहित्यं ज्ञानस्य च । नीरदो मेघ इव नीलवर्णो घनश्यामस्तं बहिर्हृदयाद्बहिः आत्ता उपात्ता स्वीकृता मूर्तिः कायो यस्य तं नारायणं श्रीकृष्णतयावतीर्णमाराधयिष्यन् सन् आससादेति पूर्वेणान्वयः ।। ३१ ।।

श्रीकृष्णं विशेष्य इदानीं मुनिं विशिनष्टि–

**सल्लोकसङ्कीर्त्यगुणाभिधानसुधारसास्वादविनोदवश्यः ।**
**आलापयन्नामृदुवादनेन वीणां श्रवःसौख्यविधिप्रवीणाम्**
**।। ३२ ।।**

**सल्लोकेति** ।। सल्लोकाः सज्जनास्तैः सङ्कीर्त्या ये गुणा जगत्सर्जन-पालनादयः तेषामभिधानमेव सुधारसस्तस्यास्वाद आस्वादनमनुभवस्तस्य विनोदः क्रीडा तस्य वश्यो वशंगत इति यात् । 'क्रीडा विनोद'

इत्यमरशेषः । श्रवसोः कर्णयोः 'श्रुति स्त्री श्रवणं श्रव' इत्यमरः । सौख्यस्य सुखस्य विधिर्विधानं करणं तत्र प्रवीणां निपुणाम् आमृदु ईषन्मृदु यथा तथा वादनेन तन्त्रीषु शब्दोत्पादनेन आलापयन् आलापवतीं कुर्वन् मुनिरासससादेति सम्बन्धः ।। ३२ ।।

**मुनिं मनोहारिविहारमारान्मुदोपतिष्ठन्तममुं मुकुन्दम् ।**
**उत्पश्यतामुन्नतवृत्ति तेषां चेतस्सदालम्बनकं बभूव ।।३३।।**

**मुनिमिति** ।। मनोहारी विहारो यस्य तं मुनिं नारदम् आराद्दूरे मुदा सन्तोषेणोपतिष्ठन्तमुपपूर्वस्यापि तिष्ठतेरात्मनेपदाभावो व्याख्यातोऽष्टादशश्लोके । उपगच्छन्तमादरादर्हयन्तमिति यावत् । मुकुन्दं श्रीकृष्णमुत्पश्यतामुन्मुखतया पश्यतां तेषां यदूनाम् उन्नता वृत्तिर्यस्य तत्तथाविधं चेतो मनः प्रत्युद्गमादिना सत् प्रशस्तम् आलम्बनम् आलम्बो विषयो यस्य तत् 'सत्त्रिषु । सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते बुध' इति केशवः । 'शेषाद्विभाषा' इति बहुव्रीहेः कप् । सदालम्बनकं बभूव । नारदमुपतिष्ठन्तं श्रीकृष्णं पश्यतां चित्तं निभृतमासीदित्यर्थः ।। ३३ ।।

**आसन्नमासीनमथासनेऽग्र्ये सम्प्रीतिदत्तार्घ्यमुखोपचारः ।**
**सम्भावनायामितनित्यसंवित्सुखार्णवोऽप्येवमवोचदेनम्**
**।। ३४ ।।**

**आसन्नेति** ।। अथ नारदगमनानन्तरं सम्प्रीत्या समादरेण दत्ता अर्घ्यं मुखं येषां तेऽर्घ्यमुखा उपचाराः पाद्याचमनीयाद्याः सत्कारा येन सः सम्प्रीतिदत्तार्घ्यमुखोपचारः । अमिते परिमितिशून्ये नित्ये ध्रुवे संवित्सुखे ज्ञानानन्दौ तयोरर्णव इव । अर्णस्शब्दान्मत्वर्थीये वप्रत्यये 'अर्णसो लोपश्च'

इति सकारलोपो चार्णव इति रूपम् । एवं विधोऽपि श्रीकृष्णः । आसन्नं सन्निकृष्टम् अग्र्ये श्रेष्ठे आसने आसीनमुपविशन्तम् । 'ईदास' इति शानच आकारस्येकारः । एनमन्वादेश एनादेशः। पूर्वोक्तं नारदं सम्भावनाय बहुमानाय एवं वक्ष्यमाणप्रकारेणावोचत् । 'वच परिभाषणे' लुङ् । नित्य-संवित्सुखार्णवोऽप्येवमुवाचेति वदता विभावनालङ्कारो निबद्धः । 'विभावना विनापि स्यात्कारणं कार्यजन्म चेत् । अप्यलाक्षारसासिक्तं रक्तं तच्चरण-द्वयम् ।।' इति सोदाहरणं तल्लक्षणाभिधानात् ।। ३४ ।।

**अनन्यगम्यो भवदागमोऽयं जगत्पवित्रीकरणैकहेतुः ।**
**उत्कृष्टपुण्योपचितेर्विपाको जानाति नो नारद लोकसाम्यम्**
**।। ३५ ।।**

**अनन्येति** ।। हे नारद जगत्पवित्रीकरणैकहेतुर्जगतः पवित्रीकरणे मुख्यं कारणम् अयं भवदागमो भवत आगमनमनन्यगम्योऽन्यगम्यो न भवतीति तथोक्तः । अन्यैरगम्य इत्यर्थः । अस्माकं तु तल्लाभे निमित्तमस्तीति लोकविडम्बनमनुरुध्याह– **उत्कृष्टेति** ।। नोऽस्माकम् उत्कृष्टानि यानि पुण्यानि तेषामुपचितिरुपचयो वृद्धिस्तस्य विपाको भाग्यं भागधेयं तथा भाग्यं 'विपाको भवितव्यते'ति हलायुधः । लोकसाम्यं लोकपुण्योपचयसाम्यं जहाति । 'ओहाक् त्यागे' लट् । त्यजति । अस्मदीयपुण्यपरिपाको न लोकसाधारण इत्यर्थः ।। ३५ ।।

**अलब्धवान् पौत्रगतेरभिज्ञामजातपूर्वव्यसनाविलात्मा ।**
**प्रसेदिवानादिमुने जनोऽयं सम्पर्कतस्ते कतकादिवाम्भः**
**।। ३६ ।।**

**अलब्धवानिति** ।। हे आदिमुने नारद पौत्रस्यानिरुद्धस्य गतेः पथः । 'गतिर्नाडीव्रणे पथि' इति केशवः । अभिज्ञां स्मृतिम् 'अभिज्ञावचने लृडि'ति सूत्रे 'अभिज्ञा स्मृतिः' इति वृत्तिकारः । तथा च 'अभिज्ञा तु स्त्रियां स्मृत्यां निपुणे त्वभिधेयवत्' इति केशवः । अवगतिं वा, वृत्तौ तथोक्तः । अलब्धवान् अप्राप्तवान् । पूर्वमजातमजातपूर्वं 'भूतपूर्वे चरडि'-त्यादाविव सुप्सुपेति समासः । तच्च तव्द्यसनं विपच्च तेनाविलः कलुष आत्मा बुद्धिर्यस्य सोऽजातपूर्वव्यसनाविलात्मा 'व्यसनं सक्तिविपदोः' इति केशवः । 'कलुषोऽनच्छ आविलः' इति । 'आत्मा देहे धृतौ बुद्धौ स्वभावे परमात्मनि' इति चामरः । अयं जनो निकृष्टोऽहमिति यावत् । 'जनो लोके महर्लोकात्परलोके च पामर' इति विश्वः । यादवलोको वा । ते तव सम्पर्कतः सङ्गमात् कतकादम्बुप्रसादनात् 'दोषग्राहस्तु कतको द्रावणोऽम्बुप्रसादने' इति शब्दरत्नाकरः । अम्भो जलमिव प्रसेदिवान् । 'भाषायां सदवसश्रुव' इति लिटः क्वसुः । प्रसादं प्राप्तवान् । उपमालङ्कारः ।। ३६ ।।

**अस्यां दशायां स्वयमागतेभ्यो**
**बन्धुः परो नः कतमो भवद्भ्यः ।**
**इयं हि मैत्री विदिता विधिज्ञैर्य-**
**व्यक्तिरापत्सु महीयसीषु ।। ३७ ।।**

**अस्यामिति** ।। अस्यामनुभूयमानायां दशायामवस्थायां स्वयमात्मनाऽऽगतेभ्यो भवद्भ्यः परोऽन्यो बन्धुर्नः कतमो वा । 'वा बहूनां जातिपरिप्रश्ने डतमच्' इत्यत्र 'जातिपरिप्रश्न' इत्यस्य किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यमिति भाष्ये प्रत्याख्यानात् । किं शब्दात्परिप्रश्न-

मात्रे डतमच्प्रत्ययः । क इत्यर्थः । विधिज्ञैः कालज्ञैर्विधातव्याभिज्ञैर्वा 'विधिर्दैवे विरिञ्चे च काले कल्पे विधानके । विधातव्येऽपि' इति केशवः । इयं हि मैत्री मित्रशब्दस्य ब्राह्मणादित्वात् ष्यञ् शित्वात् ङीषि 'हलस्तद्धितस्य' इति यकारलोपः । मित्रत्वमित्यर्थः । विदिता ज्ञाता । कासा ? महीयसीषु अतिशयेन महतीषु आपत्सु व्यक्तिः प्रकाशनमिति यत् । इयं मैत्रीत्येनमवोचदिति पूर्वेण सम्बन्धः । ननु कथमत्र स्वयमागतेभ्य इत्यादि बहुवचनं यावता नारदो मुनिरेक एकस्मिंश्च 'द्व्येकयोर्द्विवचनैकवचने' इत्येकवचनमनुशिष्टमिति चेदुच्यते एकस्मिन्नेव नारद आत्मनि शरीरतदवयव इन्द्रियान्तःकरणावच्छिन्ने तद्भेदविवक्षया बहुवचनमुपपद्यते शरीरतदवयवेन्द्रियाणां बहुत्वाद्यत्र तदभेदाध्यवसायः तत्रैकवचनमेव । अयं चार्यः– 'अस्मदोर्द्वयोश्च' इति सूत्रभाष्येऽयं योगः शक्यो वक्तुं कथमहं ब्रवीमि, आवां ब्रूमः इति कथं बहुवचनम्? इत्याशङ्क्य इमानीन्द्रियाणि कदाचित् स्वातन्त्र्येण विवक्षितानि भवन्ति । तद्यथा इदं मेऽक्षि सुष्ठु पश्यति । अयं मे कर्णः सुष्ठु शृणोतीति तद्यदा स्वातन्त्र्यविवक्षा तदा बहुवचनं भविष्यति । यदा पारतन्त्र्यविवक्षा तदैकवचनद्विवचने भविष्यत इति 'जात्याख्यायामेकस्मिन्' इति सूत्रे कौस्तुभकारेण च प्रपञ्चितः । 'युष्मदि गुरावेकेषाम्' इति वृत्तिकारवचनमपि भाष्यवार्तिकयोरनुक्तत्वादुक्तरीत्या निर्वाह(हा?)सम्भवाच्च नादरणीयमिति वैय्याकरणमत एवं चाचार्याः कथयन्ति । वयं तु ब्रूम इत्यादिप्रयोगोऽपि सङ्गच्छते ॥ ३७ ॥

**अश्रान्तसञ्चारपरायणस्य दृष्ट्या च दिव्याभिधया युतस्य ।**
**आब्रह्मलोकाद् बडबामुखाच्च द्विधार्थसाक्षात्करणं तवास्ति**
**॥ ३८ ॥**

**अश्रान्तेति** ।। सन्ततश्चासौ सञ्चारश्च स एव परमयनं गतिर्यस्य स तथा । यद्वा सञ्चारे परायणस्तत्परः । 'आश्रये तत्परेऽभीष्टे परायणपदं विदुः' इति शाश्वतः । अथवा परायणमासक्ति 'पूर्वपदात्सञ्ज्ञायामगः' इति णत्वं 'साकल्यासङ्गवचने पारायणे'त्यमरटीकायां तथोक्तेः । अश्रान्तं सञ्चारे परायणं यस्येति विग्रहः । दिव्याभिधया दिव्या अलौकिकी अभिधा अभिधानं यस्याः सा तया दिव्यशब्दाभिहितयेत्यर्थः । दृष्ट्या युतस्य दिव्यदृष्टिमत इति यावत् । तव आब्रह्मलोकाद् ब्रह्मलोकमभिव्याप्य आ बडबामुखाच्च बडबामुखं पातालं 'बडवास्यं तु पातालम्' इति 'बडबा-मुखपाताले वैरोचननिकेतनम्' इति चामरशेषाभिधानरत्नमाले । 'पञ्चम्य-पाङ्परिभिः' इत्यभिविधौ कर्मप्रवचनीयादायोगे पञ्चमी । द्विधा द्विप्रकारेण सञ्चारशीलत्वाद्बाह्यदृष्ट्या दिव्यदृष्टित्वादान्तर्यदृष्ट्या च । अर्थानां वस्तूनां साक्षात्करणं चाक्षुषसाक्षात्कारो मानसावलोकनं चास्तीत्येनमवोचत् ।।३८।।

**तन्मार्गणेनालमनेन यत्नात्प्रद्युम्नसूनोस्त्वयि सन्निकृष्टे ।**
**सन्दृश्यते नैव तमःप्रहाणे सहस्रदीप्तौ सति दीपकृत्यम्**
**।। ३९ ।।**

**तदिति** ।। यस्मात्सर्वार्थसाक्षात्कारोऽस्ति । तत्तस्मात् त्वयि सन्निकृष्टे प्रद्युम्नसूनोरनिरुद्धस्य यत्नात् ल्यब्लोपनिमित्ता पञ्चमी । प्रयत्नं विधाय । अनेन मार्गणेन अन्वेषणेन । अलङ्करणे तृतीया । गम्यमानापि क्रिया विभक्तौ प्रयोजिका मार्गणेन न किञ्चित्साध्यमित्यर्थः । एवमेव अलं विलम्बेनेत्यादौ करण एव तृतीयाविभक्तिरित्युक्तं वैय्याकरणैः । एतमर्थ-मर्थान्तरन्यासेनाह– तमः प्रहाणे अन्धकारनिबर्हणविषये सहस्रदीप्तौ सहस्रं

दीप्तयो रश्मयो यस्य तस्मिन् सूर्ये सति दीपस्य कृत्यं नैव सन्दृश्यते । 'दृशिर् प्रेक्षणे' लट् । पूर्ववत्सम्बन्धः ।। ३९ ।।

**इत्युक्तिसञ्छादितसर्वसंविद्गुणेन तेनात्मसमागमेन ।**
**सन्तुष्यता सूचितमर्थमन्तः सन्धाय वाक्यं स मुनिर्जगाद ।। ४० ।।**

**इतीति** ।। स भगवता सम्भावितो मुनिर्नारद इत्युक्त्या उक्तप्रकारवचनेन सञ्छादित आच्छादितः सर्वसंविद्गुणः सर्वविषयकज्ञानरूपो गुणो यस्य स तथा तेन । आत्मनः स्वस्य समागमेन हेतुना सन्तुष्यता सन्तोषं प्राप्नुवता । तेन भगवता सूचितमर्थं वस्तु । अन्तः सन्धाय हृदयमागमय्य । वाक्यं वक्ष्यमाणं जगाद । 'गद व्यक्तायां' वाचि इति लिट् ।।४०।।

अलब्धवान् पौत्रगतेरभिज्ञामिति या अनुपलब्धिरुक्ता तद्विडम्बनमात्रमित्याह तावत्–

**नित्योपलब्धा भवता त्रिरूपा प्राणिप्रवृत्तिः सफला समूला ।**
**समग्रबोधः सकलात्मसाक्षी जगन्नियन्ता हि जनार्दन त्वम् ।। ४१ ।।**

**नित्येति** ।। हे जनार्दन भवता त्रिरूपा कायिकवाचिकमानसिकरूपा । समूला बीजेन सहिता । सफला तत्तत्फलेन सहिता च । प्राणिनां प्रवृत्तिर्वृत्तान्तः । नित्यं यथा तथा उपलब्धा परिज्ञाता । यतस्त्वं समग्रः सम्पूर्णो बोधो ज्ञानं यस्य स तथोक्तः । सकलानामात्मनां जीवानां साक्षाद्द्रष्टा सकलात्मसाक्षी । 'साक्षाद्द्रष्टरि सञ्ज्ञायाम्' इतीनिप्रत्ययः ।

अव्ययानां भमात्रे टिलोपः । जगद् भुवनं नियन्ता नियन्तुं शीलमस्येति ताच्छील्ये तृन् । जगन्नियन्तेत्यैक्यपद्येऽपि ताच्छीलिकतृन्नन्तेन जगच्छब्दस्य गम्यादित्वात्समासः । तेन पक्षद्वयेऽपि 'नलोकाव्यय' इति षष्ठीप्रतिषेधः । हि प्रसिद्धमेतत् । जगन्नियमनादिकं भगवतः शीलमेव । न पुनस्तेन किमपि प्रयोजनमस्तीति 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इत्यादि-श्रुतिस्मृत्यादौ सिद्धमित्यर्थः । अत्र पूर्वार्धोक्तहेतुमता उत्तरार्धोक्त-हेतोर्वर्णनाद्धेतुरलङ्कारः ।। ४१ ।।

यदप्यभूतपूर्वव्यसनाविलात्मेति स्वात्मनो विपदित्युक्तम् । तदपि लोकानुकरणमेव । न तु तव्द्यसने शङ्काप्यस्तीति सयुक्तिकमाह–

**विमृश्य दोषान् विषयेषु यत्ना-**
**न्निवर्त्य कामान्यतयोऽनुभावम् ।**
**अर्हन्ति सेवां भवतः सुखात्मन्**
**दुःखादि तन्मूलमतः कृतस्ते ।। ४२ ।।**

**विमृश्येति** ।। हे सुखात्मन् सुखात्मकविग्रह 'आत्मा देहे धृतौ बुद्धौ स्वभावे परमात्मनि' इत्यमरः । श्रीकृष्ण । यद् यस्मात् । यतयः प्रयतन-शीलाः निगृहीतेन्द्रियाः सनकादयः । विषयेषु शब्दादिषु 'विषयस्त्वपि गोचरे । देशे रूपरसादौ च' इति केशवः । तानसारान् अनित्यत्वादिना प्रसिद्धान् दोषान्विमृश्य विचार्य । अनुभावं वीप्सायामव्ययीभावः सर्वेष्वपि भावेषु पदार्थेषु । 'भावो लीला क्रिया चेष्टा भूत्यभिप्रायजन्तुषु । पदार्थमात्रे' इति केशवः । कामानभिलाषान् निवर्त्य विषयेभ्यो व्यवच्छिद्य भवतस्तव सेवामर्हन्ति मानयन्ति 'अर्चत्यर्हति महते महति च पूजयति मानयत्यार्यान्'

इति कविकल्पद्रुमः । 'अर्ह पूजायाम्' इति धातोर्लट् । अत एतस्मात् कारणात् । ते तव स कामो मूलं यस्य तत्तथोक्तं दुःखादि दुःखतदनुभव-तत्कृतनीचतादिव्यसनं कुतः कस्मात् कारणात् । न कस्मादपि । 'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते । सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभि-जायते' इत्यादिवचनप्रसिद्धाः काममूला दोषाः । तव तदभावान्न युक्तमिति भावः ॥ ४२ ॥

**त्यक्तत्रिवर्गैरपरापवर्गैरामृग्यमार्गाः सनकादयस्तु ।**
**कुर्वन्ति पादाब्जरजोऽनिले ते बन्धुप्रमाणं तव**
**बन्धुरस्मि ॥ ४३ ॥**

**त्यक्तेति** ॥ त्यक्तास्त्रिवर्गा धर्मार्थकामा यैस्ते तथा तैः । अपरः पृथक् । प्रकृतः अनादृत इति यावत् । अपवर्गः क्रियासाध्यफलावाप्तिर्येषां ते तथोक्तास्तैः । पुरुषैः 'अपवर्गे तृतीय' इत्यत्र अपवर्गः क्रियाफलप्राप्तिरिति हि वृत्तिः । 'अपवर्गः क्रियासाध्यफलाप्तौ त्यागमोक्षयोः' इति केशवश्च । आमृग्या अन्वेषणीया मार्गा येषां ते तथोक्ताः ते प्रसिद्धाः सनकादयः सनकसनन्दनसनातनसनत्कुमारादिमुनयोऽपि । यस्य पादाब्जरजोऽनिले पादधूलिपाते बन्धुप्रमाणं बन्धुमर्यादां 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इत्यमरः । कुर्वन्ति । तस्य तव । अहं तु बन्धुरस्मीति काकुः । अनेन 'बन्धुः परो नः कतमो भवद्भ्यः' इत्येतत्पूर्वोक्तं साकूतं परिहृतम् । त्वत्पादपद्मपरागवातबान्धवमिच्छन्त उक्तविशेषणाः सनत्कुमारप्रभृतयः सन्ति महानुभावाः । अहं तु तव साक्षाद्बन्धुरिति महाश्लाघास्पदं वचनम् । अनुकरणपरत्वात्सम्भावनमेव केवलमिति भावः । सनक एवादिर्येषां सनत्कुमारप्रभृतीनामित्यतद्गुणसंविज्ञानबहुव्रीहिः । तेन सनत्कुमारस्य

सनकादिगणे पठितस्यापि कामदेवतया नारदोत्तमत्वान्नारदवचनं युक्तमेव । सनत्कुमारप्रभृतयश्च सनत्कुमारांशिकामदेवेन्द्रप्रभृतयो भागवतशिखामणयो ग्राह्याः । सनत्कुमारस्यादिपदेन ग्रहणं सनकादिगणपाठेन महावैराग्य-विभावनार्थम् । तेन नारदापेक्षया सनकादेः श्लाघनीयत्वं मूले प्रतीतमपि न ग्राह्यमिति ।। ४३ ।।

**अनुग्रहे विग्रहिणां स एष स्वमायया देवतनुं बिभर्षि ।**
**करोषि कर्माणि तनोषि कीर्तिं धुनोष्यशर्माणि पुनासि लोकम् ।। ४४ ।।**

**अनुग्रह इति** ।। हे देव क्रीडादिगुणविशिष्ट श्रीकृष्ण स नारायणत्वेन प्रसिद्धः । एष वसुदेवसुतत्वेन जातस्त्वम् । विग्रहिणां विग्रहः शरीरं तद्वतां शरीरभाजाम् । अनुग्रहे विषयसप्तमी । कर्तव्ये सतीति शेष इत्यपि केचित् । स्वमायया स्वेच्छया । 'महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते' इति स्मृतिः । स्वकृपया वा । 'माया दम्भे कृपायां च' इति विश्वः । तनुं देहं बिभर्षि । 'डुभृञ् भरणे' लट् वससि । कर्माणि गोधनरक्षणबाललीलापूतनाकंसनरकशिशुपाल-वधादिरूपाणि करोषि । कीर्तिं तनोषि । तनु विस्तारे विस्तृतां विदधासि । अशर्माणि दुःखानि धुनोषि । धूञ् कम्पने लट् निरस्यसि । लोकं भुवनं जनं वा पुनासि । पूञ् पवने लट् । अत्र देवस्यैकस्य कर्तृकारकस्यानेक-वाक्यार्थान्वयवर्तनात् क्रमिकतनुभरणाद्यनेकक्रियागुम्भनाच्च कारकदीप-कमलङ्कारः । उक्ते लक्षणोदाहरणे ।। ४४ ।।

**विवित्ससि त्वं विदितं हि मत्तः**
**प्रसीद मन्ये मदनुग्रहाय ।**
**सम्बोध्य मामेव मुहुः प्रजल्पञ्छ्रेयो**
**लभेतेति परार्थवृत्तिः ।। ४५ ।।**

**विवित्ससीति** ।। हे देवेत्यनुवर्तते । परार्थवृत्तिः परप्रयोजनकव्यापारो यस्य स त्वम् । एषः श्रेयो लभेतेति मदनुग्रहाय मां सम्बोध्याभिमुखीकृत्य । मुहुः पुनः पुनः प्रजल्पन् वदन् सन् विदितं हि विदितमेव । 'हि हेताववधारणे' इत्यमरः । मत्तो मन्मुखात् । विवित्ससि विचारयितुमिच्छसि । विचारणार्थाद्विदेः सन् । हलन्ताच्चेति कित्वाद्गुणाभावः । इति मन्ये । त्वमपि तथैव प्रसीद । मयि प्रसादवान् भव । लभेतेत्यत्र 'डुलभष् प्राप्तौ' इत्यतो लङ् ।। ४५ ।।

**सम्भावनीया यदवश्च दिष्ट्या निर्णीतमाकर्णय कारणं तत् ।**
**येनानिरुद्धः सुजनाविरुद्धः क्षणाद्यथा स्वप्नगतो निलीनः**
**।। ४६ ।।**

**सम्भावनीया इति** ।। हे देव यदवश्च यदुशब्दो यादवलक्षक इत्युक्तमेवेति । यादवाश्च । दिष्ट्या चित्तहर्षेण । 'दिष्ट्या शमुपजोषं चेत्यानन्द' इत्यमरः । सम्भावनीयाः बहुमानयितव्याः । अतः निर्णीतं तत्कारणमाकर्णय शृणु । येन कारणेन सुजनाविरुद्धः सुजनानामविरुद्धः सौम्योऽनिरुद्धः स्वप्नगतो यथा स्वप्नदृष्ट इव निलीनोऽन्तर्हितः । तत्कारणमिति सम्बन्धः ।। ४६ ।।

**आसीदसीमौजसि वीर्यसारैर्विख्यापितो भूषु भुजैरनीकैः ।**
**पुरा पुरारौ धृतभूरिभक्तिर्बाणाभिधानो दितिवंशकेतुः**
**॥ ४७ ॥**

**आसीदिति** ॥ असीमे निर्मर्यादे ओजसि बले विषये विषयसप्तमी । वीर्यसारैः वीर्याणां विक्रान्तीनां सारैः स्थिरांशैः । पराक्रमेण श्रेष्ठैरिति यावत् । अनेकैरनल्पैरसमानैर्वा 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे सङ्ख्यायां च प्रयुज्यते' इत्यभिधानमिति शब्दकौस्तुभ-कारः । तेन एकशब्दस्य सङ्ख्यावचनत्वे एकवचनत्वनियमात् कथमनेकैरिति बहुवचनम्? इति चोद्यं निरस्तम् । अल्पाद्यर्थत्वेनात्र सङ्ख्यावचनत्वा-नभ्युपगमात् । केचित्तु बहूनां सहस्रसङ्ख्याकत्वेन न विद्यते एक एव एकत्वावच्छिन्न एव बाहुरेषु तेऽनेकाः । उपसर्जनत्वात्सर्वनामसञ्ज्ञाभावः । तैरिति सङ्ख्यावचनत्वमभ्युपगम्यापि व्याचक्षते । भुजैर्बाहुभिः । भूषु स्थानेषु विख्यापित उत्कीर्तितः । पुरारौ त्रिपुरशत्रौ महादेवे धृता भूरिर्महती भक्तिर्येन स तथा । बाण इत्यभिधानं नाम यस्य स तथा । दितिवंशस्य केतुर्ध्वज इव दितिवंशकेतुः । दैत्यप्रवर इत्यर्थः । पुरा पूर्वमासीत् । 'अस भुवि' लङ् । अभवत् इति मुनिर्जगाद ॥ ४७ ॥

**अखर्वगर्वोद्धत[१]नाकलोकनाथाभिमानोऽक्षयिणे सुखाय ।**
**उपास्तिकामः स मृगाङ्कमौलेर्यथाविधानं विदधे तपस्याम्**
**॥ ४८ ॥**

**अखर्वेति** ॥ स बाणासुरः । अखर्वोऽह्रस्वो यो गर्वोऽहङ्कार-स्तेनोद्धतोऽभिवृद्धः । नाकलोकस्य स्वर्गलोकस्य नाथ इन्द्रस्तस्याभिमानः ।

१. 'अखर्वगर्वोद्धुत' इति पाठान्तरम् ।

स्वर्गस्येन्द्रोऽहमेवेति चित्तसमुन्नतिर्यस्य सः । अखर्वगर्वोद्धतनाकलोकनाथाभिमानः । अखर्वगर्वोद्धुतेति पाठे अखर्वगर्वेणोद्धुतो निरस्तो देवेन्द्रगर्वो यस्येति व्याख्या । स सन् । अक्षयिणे 'क्षि क्षय' इत्यतो 'जिदृक्षी'त्यादिना इनिः । क्षयशून्याय सुखाय मृगाङ्कमौलेश्चन्द्रशेखरस्य उपास्तिकामः । उपास्तिं कामयत इति तथोक्तः । 'शीलिकामिभिक्ष्याचरिभ्यो ण' इति अणोऽपवादो ण प्रत्ययः । उपास्तिशब्दः उपास्तिभाजां त्रिदशेश्वरस्येत्यत्र व्याख्यातः । यथाविधानं यथाशब्दोऽनतिक्रमे वर्तते । अव्ययीभावः । विधानमनतिक्रम्य विध्युक्तप्रकारेणेत्यर्थः । तपस्यां तपश्शब्दात् क्यषन्ताद् 'अ प्रत्ययात्' इत्यकारप्रत्ययः । तपश्चरणं विदधे । विपूर्वो दधातिः करोत्यर्थ इति चक्रे ।। ४८ ।।

**चिरात्समुन्मीलितलोचनोऽसौ निशामयामास बहिर्महेशम् ।**
**संहारहेतुं जगताममीषां यमादिमं वेदविदो वदन्ति**
**।। ४९ ।।**

**चिरादिति** ।। असौ बाणासुरश्चिराद् बहुकालात् । समुन्मीलिते सम्यक् फुल्ले लोचने यस्य स तथा सन् । 'उन्मीलितं त्रिः स्यात् फुल्ले चोन्मीषणेऽपि च' इति केशवः । वेदविदो यम् । अमीषां प्रमाणप्रमितानां जगतामादिमम् आदिभूतं संहारहेतुं वदन्ति । 'जन्माद्यस्य यतः' इत्यत्र विष्णोरेव मुख्यतो जन्मादिकर्तृत्वस्थिताावपि महेशस्य निमित्तत्वमात्राभिप्रायेणेयमुक्तिः । तथाचोक्तम्– 'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च कालाख्या रूपिणस्तव' इति । तं महेशं शङ्करं बहिर्हृदयात् पुरो देशे इति यावत् । निशामयामास । शम लक्ष आलोचने चुरादिः । 'नान्ये मितो हेतौ' इति मित्त्वाभावान्न ह्रस्वः । आलोचनमत्र दर्शनं ददर्श ।। ४९ ।।

**आपादकेशं भगवन्तमेनं तृप्तं तपोभिः पुर आव्रजन्तम् ।
कथञ्चिदुत्तार्य मनस्समाधेरपश्यदुत्फुल्लमुखारविन्दम् ।।५०।।**

**आपादेति** ।। अथो बाण इति वर्तते । तपोभिस्तृप्तं परितुष्टं पुरः पुरतः आव्रजन्तमागच्छन्तम् । मुखमेवारविन्दं मुखारविन्दमुत्फुल्लं विकसितं मुखारविन्दं यस्य स तथा तम् । उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानात् साधुत्वम् । भगवन्तं पूज्यमेनं 'द्वितीटौस्वेन' इत्येनादेशः । पुरतः स्थितं शङ्करम् । आपादकेशं पादमस्तकमभिव्याप्य कथञ्चित् केनापि प्रकारेण समाधेर्ध्यानात् । 'समाधिर्नियमे ध्याने निवाके च समर्थने' इति विश्वः । मनः उत्तार्य तरेतर्णिजन्ताल्ल्यप् । उत्तीर्णं कृत्वा । अपश्यत् । दृशिर् प्रेक्षण इत्यतो लङ् । दृशेः पश्यादेशः । अनेन पूर्वोक्तदर्शनं व्यक्तमुक्तम् । आपादकेशमित्यादिनवश्लोकी अपश्यदित्येकक्रियान्वयात् 'छन्दोभिर्यत्र पश्चाद्यैः' इत्यादिलक्षणयोगाद् आदिकुलकं नाम काव्यम् ।। ५० ।।

**वपुश्श्रियाह्लादकरं जटाभिरुद्भासिनीभिः कपिशीकृताशम् ।
अत्यायताभिर्वडबामुखाग्रेर्ज्वालाभिरुग्राभिरिवाम्बुराशिम्
।। ५१ ।।**

**वपुरिति** ।। स बाणः । वपुश्श्रिया देहकान्त्या आह्लादकरं ताच्छील्येन सन्तोषकारणं करोतेस्ताच्छील्ये 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टप्रत्ययः । द्रष्टॄणामिति योज्यम् । उद्भासिनीभिः प्रकाशनशीलाभिर्जटाभिः कपिशीकृताशं कपिशीकृताः कृष्णपीततामापन्नाः 'श्यावः स्यात्कपिशः' इत्यमरटीकायां तथोक्तः । आशा दिशो यस्य तम् । अत्यायताभिरतिदीर्घाभिः उग्राभिर्भीमाभिः । बडबामुखाग्रेरौर्वानलस्य ज्वालाभिः कपिशी-

कृताशमम्बुराशिमिव महेशमपश्यदिति पूर्वेण सम्बन्धः । उपमालङ्कारः ॥ ५१ ॥

**तृतीयनेत्राख्यकलङ्कवत्या ललाटलक्ष्म्या तुलितेन्दुकान्त्या ।**
**पूर्तिं नयन्तं रजनीकरस्य ज्योत्स्नां कलायाः शिरसि स्थितायाः ॥ ५२ ॥**

**तृतीयेति** ॥ तृतीयं फालगतं च तद् नेत्रं च तदाख्यो यः कलङ्कः तद्वति एकदेशिनेति प्रयोगान्मतुप्प्रत्ययः । इन्दोश्चन्द्रस्य कान्तिरिन्दुकान्तिस्तुलिता तुलां सादृश्यं प्राप्ता यया सा तथा । तया ललाटलक्ष्म्या ललाटशोभया शिरसि स्थितायाः रजनीकरस्य चन्द्रस्य कलायाः ज्योत्स्नां चन्द्रिकां पूर्तिं पूर्णतां नयन्तं महेशं निशामयामासेति सम्बन्धः । चन्द्रकलाया अधोमुखतया अवस्थानमत्रोक्तं कविसम्मतं च । तथा वासवदत्तायां– 'स जयति हिमकरलेखा चकास्ति यस्योत्कयोमया निहिता । नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव' इति । अर्धचन्द्राकृतिमता ललाटेन शिरोगतचन्द्रकला परिपूर्णा वेति तात्पर्यम् ॥ ५२ ॥

**जटावलीनां प्रतिबिम्बितानां बिभ्राणमापिङ्गलमूर्तिमग्रैः ।**
**मन्दाकिनीं मौलिगतां सपत्नीप्रेयस्यमर्षात् कलुषामिवास्मिन् ॥ ५३ ॥**

**जटेति** ॥ प्रतिबिम्बितानां तारकादित्वादि तच् । स्वस्यामिति योग्यतया लभ्यते । सञ्जातप्रतिबिम्बानां प्रतिफलितानामित्यर्थः । जटावलीनामग्रैः प्रान्तभागैः । आपिङ्गला समन्तात् कपिला मूर्तिस्तनुर्यस्याः सा तथा ताम् । सपत्नी चन्द्रकलारूपा च सा प्रेयसी प्रमदा च

तस्याममर्षाद्रोषदिव । अस्मिन् महेशे कलुषाम् आविलां मौलिगतां मन्दाकिनीं गङ्गां बिभ्राणं महेशमपश्यत् । यद्वा सपत्नी गौरी तस्याः प्रेयसि प्रियतमे महेश इति व्याख्येयम् । अत्र पूर्वश्लोकोक्तचन्द्रकलालक्षण-प्रेयसीविषयामर्षस्याहेतोः कालुष्यं प्रति हेतुभावो निबद्ध इति हेतूत्प्रेक्षा-लङ्कारः । मौलिगतामिति विशेषणस्य शिरसि धृत्वापि त्वामपराधं परिहराणीत्यभिप्रायगर्भत्वात्परिकरालङ्कारश्च ॥ ५३ ॥

**मुखेन्दुदृष्टौ गिरिराजपुत्र्या विलोचनानां मुहुरैकमत्यात् ।**
**शंसन्तमन्तः कुसुमायुधस्य द्वितीयजन्मप्रभुतानुकूल्यम्**
**॥ ५४ ॥**

**मुखेति** ॥ गिरिराजपुत्र्याः गिरिराजो हिमवान् तस्य पुत्री । शार्ङ्गर-वादित्वाद् ङीष् । तस्याः पार्वत्याः मुखेन्दुदृष्टौ मुखचन्द्रदर्शने विषये । विलोचनानां त्रित्वाद्बहुवचनं नेत्राणाम् । ऐकमत्याद् अक्रौर्यादिति भावः । कुसुमायुधस्य मन्मथस्य । अन्तर्मनसीति यावत् । द्वितीयजन्मनः प्रभुता समर्थता तस्या आनुकूल्यं शंसन्तं निवेदयन्तं महेशमपश्यत् । गौरी-वदनारविन्दविलोकनसमये नयनानामक्रूरत्वेन ऐकमत्याद् बहिरनङ्गोऽपि कामः सम्प्रति मनसि समुद्भवितुं समर्थ आसीत् । अतो महेशस्य देव्यामनुराज इति भावः ॥ ५४ ॥

**कुर्वाणमानन्दमनुत्तमेन स्मितेन चित्तेक्षणयोजनानाम् ।**
**गौरीकटाक्षाद्रिनिपातवश्यं सुधारसेनेव पयोम्बुराशिम्**
**॥ ५५ ॥**

**कुर्वाणेति** ॥ अनुत्तमेन न विद्यते उत्तमं यस्मात्तदनुत्तमं तेन

सर्वैर्लोभनीयेनेत्यर्थः । स्मितेन मन्दहासेन । जनानां चित्तेक्षणयोः मनोनयनयोः । प्राण्यङ्गत्वाविवक्षणात् ईक्षणजात्यभिप्रायाच्च चित्तेक्षणयोरित्येकवद्भावाभावाच्च द्विवचनम् । गौर्याः कटाक्ष एवाद्रिपातः मन्दरोपनिपातः । तस्य वश्यं वशं गत इति यत् । सुधारसेनानन्दं कुर्वाणं पयोम्बुराशिं क्षीरसागरमिव महेशं निशामयामास । उपमालङ्कारः ।।५५।।

**यदृच्छया च प्रहितैः कदाचिन्निमीलितार्धेक्षणदृष्टिलेशैः ।**
**सम्भावयन्तं विपुलस्तनीनां नभस्सदोनृत्तविलासयत्नम्**
**।। ५६ ।।**

**यदृच्छयेति** ।। किञ्चेति चार्थः । कदाचिद् यदृच्छया स्वैरितया 'यदृच्छा स्वैरिता' इत्यमरः । प्रहितैः प्रेषितैः । निमीलितान्यर्धेक्षणानि तैर्दृष्टयो दर्शनानि तासां लेशैः । विपुलस्तनीनामप्सरसाम् । नभोऽन्तरिक्षमेव सदः तस्मिन् यो नृत्तविलासस्तद्य(त्प्रय)त्नं सम्भावयन्तं बहुमानयन्तं महेशमपश्यत् ।। ५६ ।।

**कर्णप्रकोष्ठाङ्घ्रिकपर्दभारप्रसाधनानां भुजगेश्वराणाम् ।**
**फणामणिश्रेणिघृणिप्रणुन्नक्षीरान्धकारं प्रणतं गणेन ।। ५७ ।।**

**कर्णेति** ।। कर्णौ च प्रकोष्ठे च अङ्घ्री पादौ च कपर्दभारो जटाजूटश्च तेषां प्रसाधनानाम् अलङ्कारभूतानां भुजगेश्वराणां सर्पश्रेष्ठानां ये फणामणयः चूडारत्नानि तेषां श्रेणिः पङ्क्तिः तस्याः घृणयो गभस्तयस्तैः प्रणुन्ना निष्कासिताः । अत एव क्षीणोऽन्धकारो येन लोकस्य तम् । गणेन प्रमथेन । 'गणाः प्रमथसङ्घौघाः' इति यादवः प्रणतं प्राप्तनमस्कारं महेशं निशामयामास ।। ५७ ।।

**संरम्भनिर्भिन्नसुराहितासृक्स्रग्धातुरागाञ्चिततुङ्गशृङ्गम् ।
सञ्चारिणं रौप्यमिवाचलेन्द्रं पतिं पशूनामधिरूढमुच्चैः
॥ ५८ ॥**

**संरम्भेति** ॥ संरम्भेण कोपोपजनितविकारेण । 'संरम्भः कोपवैकृतम्' इति रत्नाकरः । तेन निर्भिन्नाः ये सुराहिताः देवशत्रवः तेषामसृग् रक्तं स्रग् माला च ते एव धातवः तेषां रागो द्रवः तेनाञ्चितं शृङ्गं यस्य स तथा तम् । सञ्चारिणं रौप्यमचलमिव कैलासगिरिमिव स्थितम् । उच्चैरुन्नतं पशूनां पतिं वृषभमधिरूढं 'गत्यर्थाकर्मक' इत्यादिना रुहेः कर्तरि क्तः । आरूढवन्तं महेशं निशामयामास । रूपकानुप्राणितोपमालङ्कारः ॥ ५८ ॥

**तस्मिन्नुपासीदति तस्य देवे दोष्णामथाली मुकुलीभवन्ती ।
सहस्रगोरागममीलिताग्रां कुमुद्वतीं कान्तिमतीं जिगाय
॥ ५९ ॥**

**तस्मिन्निति** ॥ अथ तस्मिन् देवे महेशे उपासीदति समीपमागच्छति सति । तस्य बाणासुरस्य दोष्णां 'पद्दन्नि'त्यादिना दोष्शब्दस्य दोषन् आदेशः । भुजानामाली पङ्क्तिः । मुकुलीभवन्ती सती । सहस्रगोः सहस्रं गावः किरणा यस्य स सहस्रगुः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । तस्य सूर्यस्य आगमेनागमनेन मीलितमग्रं यस्याः सा तथा ताम् । कान्तिमतीं शोभायुक्तां कुमुद्वतीं कुमुदिनीं जिगाय । 'जि जये' लिट् । जितवती । सूर्योदये कुमुद्वती यथा मुकुलीभवति । तथा महेशप्रादुर्भावे बाणासुरभुजपङ्क्तिर्मुकुलीबभूव बाणासुरोऽञ्जलिभिर्नमस्कृतवानिति भावः ॥ ५९ ॥

**सम्पूज्य पाद्यादिभिराद्यमाशु श्रद्धाविशुद्धः प्रणिपातपूर्वम् ।**
**कोटीरसंश्लिष्टहराङ्घ्रिरेणुः कृतार्थबुद्ध्या सकलः पुपूरे**
**।। ६० ।।**

**सम्पूज्येति** ।। श्रद्धाविशुद्धः श्रद्धा आस्तिक्यबुद्धिः तया विशुद्धः परिचितगात्रः । प्रणिपातपूर्वं नमस्कारपुरस्सरं यथा तथा । आद्यमादौ भवं स्वावरापेक्षयेति योग्यतया सम्बध्यते । महेशं पाद्यादिभिरिति । ''पाद्य-माचमनीयकम् । मधुपर्कम्'' इत्यादिशास्त्रोक्तैरुपचारैः सम्पूज्य कोटीरेण किरीटेन संश्लिष्टः सम्बद्धः हरस्याङ्घ्रिरेणुर्यस्यासौ सन् । कृत आपादितोऽर्थः प्रयोजनं यस्य स कृतार्थः । तद्बुद्ध्या । धन्योऽहमिति बुद्ध्या सकलः निर्वर्तयितव्यसकलप्रयोजनः । यद्वा सकलः कला संवित् शोभा वा तया सहितः । 'कला शोभाङ्ककलनासु च संविदि च' इत्यभिधानम् । पुपूरे पुरी आप्यायने लिट् परिपूर्णो बभूवः ।। ६० ।।

**ममामुना नेत्रयुगेन तावद्दैत्यस्य साक्षात्करणक्षमत्वम् ।**
**तवागमोद्गीतगुणाग्र्यमूर्ते विभो महाविस्मयमातनोति ।।६१।।**

**ममेति** ।। आगमैर्वेदादिशास्त्रैरुद्गीता ये गुणास्तैरग्र्या श्रेष्ठा मूर्तिर्यस्य स तथा तत्सम्बुद्धिः । विभो समर्थ तावत् दैत्यस्य असुरजातेर्मम बाणासुरस्य अमुना नेत्रयुगेन नेत्रयोर्द्वयेनेति साक्षात्कारेऽतिस्पष्टतामाह । तव साक्षात्करणक्षमत्वं साक्षात्करणमपरोक्षज्ञानं तत्र क्षमत्वं पटुत्वं 'क्षमस्त्रिषु हिते योग्ये युक्ते शक्ते पटावपि' इति रत्नाकरः । महाविस्मयं महदाश्चर्यम् आतनोति करोति ।। ६१ ।।

**स निश्चिनोमीति भवाब्धिमग्नेष्वस्मासु भस्माभरण स्मरारे ।**
**आकृष्यमाणः करुणाङ्कुशेन प्रसीद निघ्नस्त्वमुपागतोऽसि**
**।। ६२ ।।**

**स इति** ।। भस्म भसितमाभरणम् उद्धूलनादिना भूषणं यस्य स तथा तत्सम्बुद्धिः । देहशोभावहत्वादाभरणत्वव्यपदेशः । स्मरारे मन्मथस्य शत्रो । भवाब्धिमग्नेषु संसारसागरनिमग्नेष्वस्मासु । निघ्न आयत्तस्त्वं करुणाङ्कुशेन करुणारूपेणाङ्कुशेन । आकृष्यमाणः सन् उपागतोऽसीति सोऽहं निश्चिनोमि । अतोऽपि प्रसीद प्रसादोन्मुखो भव ।। ६२ ।।

**चराचराणामपि देहभाजामन्त-**
**र्नियन्ता ननु वुद्धिवृत्तेः (त्तिः?) ।**
**भवानतः कोऽस्ति(त्र) निवेदनीयो**
**मनोरथो विश्वविदे विविच्य ।। ६३ ।।**

**चराचराणामिति** ।। स्मरारे भवान् चराचराणां जङ्गमाजङ्गमानां देहभाजामन्तर्बुद्धिवृत्ते(त्ति?)रपि नियन्ता । यमिरत्र ताच्छीलिकतृन्नन्तः । तेन 'न लोकाव्यय' इति षष्ठीनिषेधाद्द्वितीया । ननु एव । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । अतो बुद्धिवृत्तिनियन्तृत्वाद् विश्वविदे सकलजगद्वेदित्रे तुभ्यं 'क्रियाग्रहणं कर्तव्यम्' इति सम्प्रदानत्वे चतुर्थी । विविच्य इदमेवं भूयादिदमेवं भूयादिति विवेकेन पृथक्कृत्य निवेदनीयो मनोरथः लिप्सा कोऽस्ति । विश्वविद इति विशेषणस्य साभिप्रायत्वात्परिकरालङ्कारः । अनिवेदनीयत्वस्य समर्थनीयस्य विश्वविद इत्यनेन समर्थनात् काव्यलिङ्गं वा ।। ६३ ।।

**नमोऽस्तु सृष्टिस्थितिसंहृतीनां कर्त्रे त्रिलोक्यास्त्रिपुरद्विषे ते ।**
**देव्यै च दिव्याभरणाम्बरायै पत्युः शरीरार्धमधिष्ठितायै**
**।। ६४ ।।**

**नम इति** ।। स्मरारे । त्रिलोक्याः त्रयाणां लोकानां समाहारस्त्रिलोकी तस्याः । 'द्विगोः' इति ङीप् । सृष्टिस्थितिसंहृतीनां कर्त्रे लोकत्रये स्वयोग्यविषये सृष्टिं स्थितिं संहारं च महादेवः करोतीति शास्त्रेण वेदनादियमुक्तिः । त्रीणि पुराणि पात्रादित्वान्न ङीप् । द्वेष्टीति त्रिपुरद्विट् । तस्मै ते तुभ्यं दिव्यान्याभरणानि अम्बरेवाससी(सि?)च यस्याः सा तथा तस्यै । पत्युः प्रियस्य महेशस्य शरीरेऽर्धम् अर्धभागं शरीरं च तदर्धं चेति वा तदधिष्ठितायै । 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मता तेन 'अर्धं नपुंसकम्' इति प्रमानिर्देशात् अर्धशब्दः पूर्वं प्रयोज्यः स्यादिति चोद्यमनवकाशम् । षष्ठीसमासापवादैकदेशसमासानभ्युपगमात् । देव्यै उमायै च नमोऽस्तु । 'नमः स्वस्ति' इति चतुर्थी । महेश्वरं महेश्वरीं च नतवानस्मीत्यर्थः । देवीनमस्कारस्य समर्थनीयस्य पत्युः शरीरार्धमधिष्ठिताया इति समर्थनात्काव्यलिङ्गमलङ्कारः ।। ६४ ।।

**इतीरितप्रश्रयगर्भवाक्यो सुरद्विषामीशितरीश्वरस्य ।**
**अस्यन्द[१] वाणीव्यपदेशभेदान्मुखारविन्दान्मकरन्दधारा**
**।। ६५ ।।**

**इतीति** ।। सुरद्विषां देवद्वेषिणाम् ईशितरि प्रधाने बाणासुरे इति पूर्वोक्तप्रकारेण ईरितमुक्तं च तत् प्रश्रयो विनयो गर्भे यस्य तच्च तद्वाक्यं च यस्य तस्मिन् सति । ईश्वरस्य शङ्करस्य मुखारविन्दात् । वाणीति

१. 'अस्यन्दि' इति पाठान्तरम् ।

व्यपदेशविशेषः वाणीव्यपदेशभेदः । तस्मान्मकरन्दधारा अस्यन्द स्यन्द प्रस्रवणे इति धातोः । कर्तरि ऊदित्त्वादिडभावे झलि सिञ्लोपे च अस्यन्देतिरूपं लुङ् अस्यन्दिष्ट निस्सृतवती । अस्यन्दीतिपाठे णिजन्तादुक्तधातोः कर्मणि लुङ् । निस्सारितेत्यर्थः । अनुकम्पयेति शेषः ॥ ६५ ॥

**साटोपकोपस्फुटपाटवानां जातस्य जात्यां तव दैत्यकानाम् ।**
**व्रते स्थितिः संस्थितिसीम्नि चक्रे कुतूहलं तात तपोधनानाम्**
**॥ ६६ ॥**

**आटोपेति** ॥ हे तात अनुग्राह्य 'तातः पितर्यनुग्राह्ये' इति दर्पणः । साटोपे ससंरम्भे कोपे स्फुटं व्यक्तं पाटवं येषां ते तथोक्तास्तेषां दैत्यकानां 'कुत्सिते' इति कन् । दैत्यापसदानां जात्यां जातौ 'ङिति ह्रस्वश्च' इति नदीसञ्ज्ञायां 'ङेराम्नद्याम्नीभ्यः' इत्याट् । जातस्योत्पन्नस्य तव संस्थितिसीम्नि 'संस्था समाप्तावाकामे व्यवस्थायां स्थितौ मृतौ' इति कविदर्पणः । स्थितिसीम्नि व्यवस्थामर्यादायां वा । 'मर्यादा क्षेत्रकूलेषु सीमे'ति कविदर्पणः । व्रते स्थितिर्नियमे निष्ठा तपोधनानामृषीणां कुतूहलं कौतुकम् । चक्रे ॥ ६६ ॥

**तपस्तपत्सौर्यमिवाखिलं ते सल्लोकसन्तोषणमैन्दवं वा ।**
**तेजस्तथाग्नेयमिवाप्रधृष्यं तमस्त्रिधा वत्स निराकरोति**
**॥ ६७ ॥**

**तप इति** ॥ हे वत्स ते तव तपः अखिलं तपत् तापं कुर्वत् सौर्यं तेन इव सूर्यशब्दात् 'तस्येदम्' इत्यणि 'यस्येति च' इत्यल्लोपः । सल्लोक-

सन्तोषणं सज्जनसन्तोषकरम् ऐन्दवं तेजो वा तेज इव । तथा अप्रधृष्यम् असह्यमाग्नेयम् 'अग्नेर्ढक्' तेज इव त्रिधा सत् । तमः शोकमंहो वा 'तमस्तु शोकांहोराहु .....ध्वान्तगुणेषु च' इति कविदर्पणः । निराकरोतीति वा अस्यन्देत्यन्वयः ।। ६७ ।।

**उदाहरन्नित्थमुदारचेता दैत्याय दास्यन् प्रमथाधिपत्यम् ।**
**चकार शूली वरमात्मदानं दत्ते च यस्मिन्नखिलं प्रदिष्टम्**
**।। ६८ ।।**

**उदाहरन्निति** ।। उदारं महच्चेतो यस्य स तथा 'उदारो दातृमहतोः' इत्यमरः । इत्थमुदाहरन् शूली शिवः दैत्याय बाणाय प्रमथाधिपत्यं गाणापत्यं गणाधीश्वरत्वं दास्यन् ददातेर्लृटः 'सद्वे'ति शता । स सन् यस्मिन् दत्तेऽखिलमभीष्टं प्रदिष्टं दत्तं भवति । तद् आत्मदानमात्मनः प्रदानमेव वरं चकार ।। ६८ ।।

**अनुग्रहादस्य समस्तसम्पत्परम्परा शोणितनामधेया ।**
**आसीत्पुरीताममरासुराणां स शासिता सादरमभ्यरक्षत्**
**।। ६९ ।।**

**अनुग्रहादिति** ।। अस्य प्रकृतस्य शिवस्यानुग्रहात् समग्र सम्पूर्णा सम्पत्परम्परा सम्पदां सन्तानो यस्याः सा तथा । 'परम्परा तु सन्ताने वस्तुनां स्त्री द्वयोः पुनः । पुत्रपौत्रादिमालायाम्' इति केशवः । शोणित-नामधेया शोणितपदं नामधेयं यस्याः सा पुरी या आसीत् । तामिमा-मराणामसुराणां च शासिता शिक्षकः स बाणः सादरं यथा अभ्यरक्षत् । 'रक्ष पालने' लङ् ।। ६९ ।।

**तदा प्रभृत्यस्य पुरे पुरारिः सुरासुरैरन्वहमप्रधृष्यः ।**
**पाता बभूवा[१]भिवृतो गणैः स्वैः सतां स्वतोऽप्याश्रित**
**आदरः स्यात् ।। ७० ।।**

**तदेति** ।। तदा प्रभृति तत्कालादारभ्येत्यर्थः क्रियाविशेषणम् । सुरासुरैरप्रधृष्यः दुरासदः । अस्य बाणस्य पुरे शोणितनगरे स्वैर्गणैः स्वकीयैः प्रमथैः । अभिवृतः पुरारिर्महेशोऽन्वहं प्रतिदिनं पाता रक्षको बभूव । तथाहि– सतां साधूनां स्वतः परप्रार्थनादिप्रयत्नमन्तरा । आश्रितजने आदरः प्रेमा स्यात् । तेन महानुभावस्य भवस्य शोणितपुरवासः कस्मादिति चोद्यं प्रत्यस्तम् । स्वच्छन्दानुसारेण स्वजनदयया प्रवृत्तिरिति तात्पर्यवत्त्वादर्थान्तरन्यासोऽलङ्कारः । स्थितो बभूवेति पाठे गत्यर्थाकर्मकेत्यादिना तिष्ठतेः कर्तरि क्तः । वृत्तानुस्यूतिस्तु प्रायिकत्वाभिप्रायेत्यप्याहुः ।। ७० ।।

**एवंमहिम्नोऽसुरराज आसीदुषा तनूजा जननी जनानाम् ।**
**अजातपूर्वस्य कुतूहलस्य वपुष्मती प्रीतिवशादिव श्रीः**
**।। ७१ ।।**

**एवमिति** ।। एवमेवंविध उक्तरूपो महिमा यस्य स तथोक्तस्तस्य । असुरराजः दैत्यराजस्य बाणासुरस्य । उषेति तनूजा पुत्री जनानामजातपूर्वस्य पूर्वमजातस्य 'सुप्सुपा' इति समासः । 'भूतपूर्वे चरट्' इति यथा । इतः पूर्वं कदाप्यननुभूतस्येत्यर्थः । कुतूहलस्य कौतुकस्य जननी उत्पादिका । कर्मणि षष्ठी । प्रीतिवशाद् वपुष्मती विग्रहवती श्रीरिवासीत् । उपमालङ्कारः ।। ७१ ।।

१. 'स्थितो बभूव' इति पाठान्तरम् ।

**कन्या पुरात्पौर्वविलासिनीभिः**
**सल्लालिता[1] जातु विनिर्गता सा ।**
**स्वयोपमेया वपुषा सुवेषामुमा-**
**मुदैक्षिष्ट पुरस्समीपे ।। ७२ ।।**

**कन्या पुरादिति** ।। जातु कदाचित् पुरात् शोणितनगराद् विनिर्गता पौरविलासिनीभिर्नगरयुवतीभिः । सल्लालिता सत् प्रशस्तं यथा तथा लालिता आदृता । संलालितेति क्वचित्पाठः । वपुषा देहशोभया स्वया स्वात्मना उपमेयेत्यन्वयभङ्ग्योक्तिः । असदृशदेहसुषमेत्यर्थः । सा कन्या कुमारी । सुवेषां स्वलङ्कारां शोभनालङ्कारकृतशोभां वा । उमां गौरीं पुरो नगरस्य समीपे उदैक्षिष्ट । 'ईक्ष दर्शने' लुङ् । अद्राक्षीत् ।। ७२ ।।

**उद्यानमुत्सौरभमाविशन्त्या क्रीडादशायां वशगः शिवायाः ।**
**अभ्याशदेशे शरदभ्रशुभ्रः शशाङ्कमौलिर्ददृशे शरण्यः ।।७३।।**

**उद्यानमिति** ।। क्रीडादशायां विलासवेलायामित्यर्थः । उत्सौरभमुद्भूतपरिमलम् । उद्यानमाक्रीडं वनम् । आविशन्त्या । कन्यया । शिवाया उमाया वशगः । अभ्याशदेशे समीपप्रदेशे 'तथाभ्यर्णमभ्याशमाहुः । समीपम्' इति हलायुधः । शरदभ्रमिव शुभ्रः श्वेतः शरदभ्रशुभ्रः । 'उपमानानि सामान्यवचनैः' इति समासः । शरण्यः शरणं त्राणं 'तत्र साधुः' इति यत् । शशाङ्कमौलिश्चन्द्रशेखरो ददृशे । 'दृशिर् प्रेक्षणे' कर्मणि लिट् । दृष्टः । वृत्त्यनुप्रासः शब्दालङ्कारः । शरदभ्रशुभ्र इत्युपमा चेति तयोः संसृष्टिः ।। ७३ ।।

---

१. 'संलालिता' इति पाठान्तरम् ।

**सा लीलया लोलविलोचनाया विलोक्य वृत्तिं रमणे रतेषु ।**
**मनोहरं कामरसोषभोगमाशास्त शास्ता हि शरः स्मरस्य**
**॥ ७४ ॥**

**सेति** ॥ सा उषा लीलया लोलविलोचनायाः लोले इतस्ततः सञ्चरन्ती सतृष्णे विलोचने यस्यास्सा तथा तस्या उमायाः । रमणे शिवे रतेषु क्रीडनेषु वृत्तिं व्यापारं विलोक्य । मनोहरं कामरसोपभोगं कामस्य रसः शृङ्गारस्तस्योपभोगम् अनुभवम् । आशास्त । आङ्पूर्वः शास्तिरिच्छायां वर्तते । लङ् । एवमिच्छोत्पत्तौ निदानमाह– **शास्तेति** ॥ स्मरस्य मन्मथस्य शरो बाणो हि शास्ता शासिता प्रेरकः । 'तृन्तृचौ शंसिक्ष-दादिभ्यः सञ्ज्ञायां चानिटौ' इति शास्तेस्तृन् तृज्वा प्रत्यय औणादिकः । तेन शास्तेः 'ण्वुलतृचौ' इति तृच्प्रत्यये इडागमे च शासितेत्येव प्रयोक्तव्यमिति शङ्का अपास्ता । औणादिकतृचोऽनिट्त्वानुशासनात् । अत एव 'मुनीन्द्रः श्रीघनः शास्ता' इत्यमरः । 'उणादयो बहुलम्' इति बहुलग्रहणादसञ्ज्ञायामपि तृजादिरिति वैय्याकरणाश्च । तथाच मनोरमायाम्– 'शास्ता समन्तभद्रे ना शासके पुनरन्यवद्' इति मेदिनी-त्युक्तम् । 'शास्तानुशासके बुद्ध' इति विश्वश्च । पूर्वं 'स शासिता सादरमभ्यरक्षत्' इति श्लोके शासितेति प्रयोगः 'ण्वुल्तृचौ' इति शास्त्रप्राप्ततृजन्ततया सेट्क एवेति न काप्यनुपपत्तिः ॥ ७४ ॥

**तां वर्धमानप्रियसङ्गमेच्छामिष्टार्थदा हैमवती प्रतीत्य ।**
**सोत्कण्ठदृष्टिः प्रवणोत्तमाङ्गीमङ्गीकृतौदार्यमिदं जगाद ॥७५॥**

**तामिति** ॥ इष्टार्थान् ददातीति इष्टार्थदा । 'आतोऽनुपसर्गे कः' इति

ददातेः कप्रत्ययः । हैमवती हिमवतः पुत्री उमा । प्रवणोत्तमाङ्गीं प्रवणं नमस्कारोन्मुखम् उत्तमाङ्गं शिरो यस्याः सा तामुषाम् । वर्धमाना प्रियस्य सङ्गमे इच्छा यस्याः सा ताम् । उत्कण्ठा उत्कलिका अभिलाषः तया सहिता सोत्कण्ठा दृष्टिर्यस्याः सा ताम् । प्रतीत्य ज्ञात्वा । अङ्गीकृतमौदार्यं महत्त्वं दातृत्वं वा येन तत्तथा तत् । इदं वक्ष्यमाणं वचनं जगाद । 'गद व्यक्तायां वाचि' लिट् । अभिलषितप्रयोजनसाधनवचनमुच्चारितवती । एतदादित्रिश्लोकी शुद्धोपेन्द्रवज्रा । नोपजातिः ।। ७५ ।।

**कालेन बाले मदनुग्रहात्त्वामल्पेन सङ्कल्पजकल्पवर्ष्मा ।**
**सेविष्यते यस्तव चित्तधैर्यं मुष्णन् स मुग्धे पुरुषः स्वपन्त्याः ।। ७६ ।।**

**कालेनेति** ।। हे बाले उषे मदनुग्रहात् मम अनुग्रहात् । अल्पेन कालेन । सङ्कल्पजकल्पवर्ष्मा सङ्कल्पजो मनसिजः ईषदूनः सङ्कल्पजः सङ्कल्पजकल्पास्तस्य वर्ष्म देह इव वर्ष्म यस्य स तथोक्तः । 'ईषदसमाप्तौ कल्पब् देश्यदेशीयर' इति कल्पप्प्रत्ययः । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । त्वां सेविष्यते । 'षेवृ सेवने' लुट् । कोऽसौ मां सेवमानो भविष्यतीति तत्राह– **य इति** ।। हे मुग्धे सुन्दरि । यः स्वपन्त्याः स्वापं गतायाः स्वप्न इति यावत् । तव चित्तधैर्यं मुष्णन् सेविष्यते स पुरुष इति सम्बन्धः । 'धातुसम्बन्धे प्रत्ययाः' इत्यत्र अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्तीति वृत्तिकारवचनेन अत्र वर्तमानकालविहितलडादेशः शतापि भविष्यदर्थ इत्यभ्युपगमात् मुष्णन् सेविष्यत इति प्रयोगो युक्तः । अत एव सोमयाज्यस्य पुत्रो भवितेत्युदाहृत्य सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनमित्यर्थ इति विवृतं वैय्याकरणैः । शक्यते चात्रापि यो मोषिष्यन्

तत्कर्तृकं सेवनमिति मुष्णन् सेविष्यत इति पदद्वयं विवरितुम् । केचित्तु मुष्णाति भुग्धः पुरुषः इति पठित्वा तत्रापि उक्तमेव समाधानं तिङन्तपदद्वयत्वाद्विशेषणविशेष्यभावानुपपत्या वक्तुमशक्यमिति मन्यमानाः 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लडित्युक्त्वा यः मुग्धः पुरुषः तव चित्तधैर्यं मुष्णाति स त्वां सेविष्यत इत्यन्वय इति व्याचक्षते ।।७६।।

**श्रुत्वैतदुक्तं वचनं भवान्या कन्यासुरेन्द्रस्य कृतावनामा ।**
**स्वाकूतसंविध्यवधिप्रतीक्षां दीक्षां विविक्षुर्भवनं स्वमागात्**
**।। ७७ ।।**

**श्रुत्वेति** ।। असुरेन्द्रस्य कन्या बाणात्मजोषा भवान्या उमया । उक्तमुच्चरितमेतद्वचनम् । श्रुत्वा कृता अवनामाः प्रणामा यया सा कृताव-नामा । नमेर्भावे घञ् । स्वस्या आकूतमभिलषितं तस्यावधेः कालस्य प्रतीक्षां तद्रूपा दीक्षाम् । 'अवधिः पुनः । विवरे पीवरे काल' इति केशवः । विविक्षुः वेष्टुं प्रवेष्टुमिच्छुः । स्वं स्वकीयं भवनं गृहमगात् । 'इण् गतौ' लुङ् 'इणो गा लुङि' गादेशः । अगमत् ।। ७७ ।।

**सा भाविनो भीरुतया स्मरन्ती पराभवस्याविदितेन पुंसा ।**
**नित्ये युगानीव दिनानि दीना वीर्याधिके वैर इवानुबद्धे**
**।। ७८ ।।**

**सेति** ।। सा मन्दिरमागतोषा । अविदितेन अपरिचितेन पुंसा पुरुषेण । भाविनो भविष्यतः पराभवस्य मातापितृबान्धवादिभिः स्वव्यापारं परिजानद्भिः करिष्यमाणस्य वचनीयतिरस्कारादिरूपस्य । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । पराभवं स्मरन्ती । अत एव दीना क्षीणा । 'दरिद्रे

कृपणे दीनः क्षीण' इति केशवः । भीरुतया अङ्गनात्वेन 'विशेषास्त्वङ्गना भीरुः' इत्यमरः । अधीरतया वा । 'अधीरे कातरत्रस्नुभीरुभीरुकभीलुकाः' इत्यमरः । वीर्येण पराक्रमेण । अधिके पुरुषे अनुबद्धे वैरे विषये दीन इति संयोजितेन इव शब्दस्यान्वयः । दरिद्र इव दिनानि युगानीव कृतत्रेतादियुगानीव निन्ये । 'णीञ् प्रापणे' लिट् । नीतवती द्वितीय-पादोपेन्द्रवज्रीयम् ।। ७८ ।।

एतदादित्रिश्लोक्या 'त्रयाणामेकवाक्यत्वे छन्दसां स्यात्कलापकमित्युक्त-लक्षणकलापककाव्यभङ्ग्या उषास्वप्नेऽनिरुद्धस्य दर्शनं निरूपयति–

**निशान्तरे कान्तिधरः समन्तादभिख्ययोद्भासितया स्वमूर्तेः ।**
**मान्यो मनःकैरवमायताक्ष्या उन्मीलयन्नन्य इवोडुराजः**
**।। ७९ ।।**

**निशान्तर इति** ।। निशान्तरे अन्या निशा निशान्तरम् । मयूर-व्यंसकादिदर्शनात्समासः । तस्मिन् कस्याञ्चिन्निशायामित्यर्थः । कान्तेर्धरः कान्तिधरः । वश कान्तावित्यत्र कान्तिरिच्छेति धातुवृत्त्युक्तेरिच्छां वा बिभ्राणः कामुक इत्यर्थः । चन्द्रपक्षे कान्तिस्तन्नाम्नी स्त्री । स्वमूर्तेः स्वकायस्य समन्तात् सर्वतः । उद्भासितया उद्दीप्तया अभिख्यया शोभया । 'अभिख्या नामशोभयोः' इत्यभिधानम् । मान्यः श्लाघनीयः । आयताक्ष्या उषायाः । मनःकैरवं मन एव कैरवं कुमुदं तदुन्मीलयन् विकासयन् । अन्य उडुराजश्चन्द्र इव अदृश्यतेति वक्ष्यमाणक्रियापदेनान्वयः । श्लिष्टोपमालङ्कारः । पूर्वार्धोपेन्द्रवज्रा ।। ७९ ।।

**उद्भिन्नपङ्केरुहकोशचञ्चल्लक्ष्मीतिरस्कारविधानदक्षम् ।**
**सुमन्दहासामृतसेकसौम्यं दधत्प्रसन्नाननचन्द्रबिम्बम् ।।८०।।**

**उद्भिन्नेति** ।। उद्भिन्नं यत्पङ्केरुहं तामरसं तस्य कोशः कुड्मलं तस्मिन् चञ्चन्ती सम्बध्नन्ती लक्ष्मीः शोभा तस्यास्तिरस्कारस्य विधाने करणे दक्षं समर्थं 'हलदन्तात्सप्तम्याः सञ्ज्ञायाम्' इति पङ्कशब्दात्सप्तम्या अलुक् । सुमन्दहास एवामृतं तस्य सेकेन सौम्यं सुन्दरं 'सौम्यं तु सुन्दरे सोमदैवते' इत्यमरः । प्रसन्नमाननमेव चन्द्रबिम्बं तद्दधद् बिभ्राणः । अदृश्यतेत्यन्वयः । श्लिष्टरूपकमलङ्कारः ।। ८० ।।

**कुमारकः कश्चिदपश्चिमाब्दः पुमानपूर्वोऽभ्युदितश्च देव्याः ।**
**अदृश्यतानन्दकरः प्रजानां मृगीदृशा स्वप्नदृशा चिरेण**
**।। ८१ ।।**

**कुमारक इति** ।। पश्चिमा अपरा न भवतीत्यपश्चिमा अब्दाः वर्षाणि यस्य स तथोक्तः । तत्रापि कुमारको बालः कुमारः स्कन्दः स इवेति 'प्रतिकृतौ' इति कन्प्रत्ययो वा । प्रजानामानन्दं कर्तुं शीलमस्येति करोतेस्ताच्छील्ये टः । आनन्दकरः । अपूर्वोऽभ्युदितश्च कश्चित् पुमान् । स्वप्नमपश्यदिति स्वप्नदृक् 'क्विप् च' इति क्विप् । तया मृगीदृशा हरिणीनयनसदृशनयनया देव्या उषया । अदृश्यत । 'दृशिर् प्रेक्षणे' कर्मणि लङ् । शुद्धोपेन्द्रवज्रा ।। ८१ ।।

**सलीलमालापविलोकनाद्यैरालोलयन् धैर्यमनिन्दितायाः ।**
**प्रेमाङ्कुरस्य प्रथमस्य तस्या जातः प्रजापालज आलवालः**
**।। ८२ ।।**

**सलीलमिति** ।। सलीलं लीलया सहितं यथा तथा । आलापविलोकनाद्यैः आलापः सम्भाषणं विलोकनं सोत्कण्ठमवलोकनं ते एव्द्वये

येषां भ्रूविलासकरग्रहणसमालिङ्गनचुम्बनादीनां व्यापाराणां ते तथोक्तास्तैः । अनिन्दितायाः पुरुषान्तराभिलाषादिदोषरहितायाः तस्या उषायाः । धैर्यं मानशब्दितं चेतस्थगमम् आलोलयन् विलोलयन् तिरस्कुर्यन्निति यावत् । तस्याः प्रथमस्य आद्यस्य प्रेमैवाङ्कुरः प्रेमाङ्कुरस्तस्य प्रेम्णोऽङ्कुरस्य वा । प्रजापालात्प्रद्युम्नाज्जात इति प्रजापालजः 'पञ्चम्यामजातौ' इति जनेर्डः । राजकुमारः आलवाल आधारः । अम्भसां यत्र धारणं स इत्यर्थः । 'आवाल आलवालः स्यात्' इति यादवः । अमरे नपुंसकलिङ्गत्वमप्य-स्तीति 'स्यादालवालमावालम्' इत्युक्तम् । अस्ति च पुल्लिङ्गप्रयोगः । 'साधारणतरुबुद्ध्या न मयाबद्धस्तवालवालोऽसि । लज्जयसि मामिदानीं चम्पकभुवनाधिवासिभिः कुसुमैः' इति । जात आसीदित्यर्थः ।।८२।।

**अनेन हृद्येन हृतात्मवृत्तेर्विहृत्य सुप्तेः सहसोत्थितायाः ।**
**कुतोऽसि भद्रेत्यवशाभिलापैरुद्बोधिता बुद्धिमती वयस्या**
**।। ८३ ।।**

अनेनेति ।। हृद्येन मनोहरेण 'हृदयस्य प्रिय' इति यति हृदयशब्दस्य 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः । अनेनानिरुद्धेन । एनादेशाभावस्तु किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुमुपादान-मन्वादेश इत्यन्वादेशशब्दार्थमुक्त्वा 'अनेन व्याकरणमधीतमेनं छन्दोऽ-ध्यापय' इत्युदाहरणात् । 'एतमातं ङित्तं विद्यात्' । 'नक्तं भीरुरथं त्वमेव तमिमं राधे गृहं प्रापय' इत्यादिप्रयोगाच्च इदंशब्देनात्रानुवाद इत्यभ्युपगमा-द्युक्तः । हृता आत्मवृत्तिर्मनोव्यापारो यस्याः सा तथा तस्याः । सुप्तेः सकाशात् सहसा अतर्कितमुत्थिताया उषायाः हे भद्र त्वं कुतः कस्मा-दागतोऽसीत्याद्यवशाभिलापैः परवशभाषणैः । बुद्धिमती वयस्या सखी

चित्रलेखा । उद्बोधिता उद्बोधं जाग्रत्तां प्रापिता । आसीदिति शेषः
॥ ८३ ॥

**उवाच चैनां रुचिरभ्रु केन भ्रान्तासि विभ्रष्टमनोरथा च ।**
**बाले बलाकेन गृहीतमुक्तमीनानुतापिन्युपलक्ष्यसे त्वम्**
**॥ ८४ ॥**

**उवाचेति** ॥ वयस्येत्यनुवर्तते । सखी चित्रलेखा । हे रुचिरभ्रु मनोहरभ्रूलते सखि । केन पुरुषेण त्वं भ्रान्ता अनवस्थिता । विभ्रष्टो मनोरथो लिप्सा यस्याः सा तथोक्ता विनाशितवाञ्छितार्था च असि । किं च बाले गृहीतश्चञ्चुपुटेनोपात्तः मुक्तस्त्यक्तश्च 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति समासः । गृहीतमुक्तः मीनो मत्स्यो यया सा तथोक्ता । बलाकेव बिसकण्डिकानामकपक्षिणीव 'बलाकादयश्च' इति साधुः । अनुतापिनी पश्चात्तापिनी सती उपलक्ष्यसे दृश्यसे । इत्येनामुषामुवाच । न केवलमुद्बोधितेति चशब्दः । उपमालङ्कारः । ननु कथं हे रुचिरभ्रु इति ह्रस्वप्रयोगः? 'नेयङुवङ्स्थानावस्त्री'ति शास्त्रेण भ्रूशब्दस्य नदीसञ्ज्ञानिषेधेन 'अम्बार्थनद्योर्ह्रस्व' इति शास्त्रप्राप्तह्रस्वस्यानवकाशादिति चेत् । उच्यते– 'अप्राणिजातेश्चारज्वादीनाम्' इत्यूङि समासे उपसर्जनह्रस्वत्वे कृते 'ऊङुत' इत्यूङि तस्य समुदायभक्तत्वादत्र नोवङ्स्थानित्वमिति भट्टिटीकेति शरणदेवोक्तः पक्षः । अन्ये तु 'सामान्ये नपुंसकम्' इति कथञ्चित् समादधत इति मनोरमाकारः । अत एव 'हापितः क्वासि हे सुभ्रु' इति भट्टिः । 'विमानना सुभ्रु कुतः पितुर्गृहे' इति कुमारसम्भव इति ॥ ८४ ॥

**निद्रावशत्वात्किमयं भवत्याः प्रलाय ईदृक् सुदृशामयुक्तः ।**
**भावोऽथवासौ वितथावभासवैचित्र्यजः स्वप्नदृशो विकासे**
**।। ८५ ।।**

**निद्रेति** ।। हे रुचिरभ्रु सदृशां स्त्रीणामयुक्तोऽनुचितः । ईदृगीदृशः । कुतोऽसि भद्रेत्यादिरूपः । अयं भवत्याः प्रलापः अनर्थकं वचः । निद्रावशत्वात् किं निद्रापारवश्याद्धेतोर्गलितं किम् । अथवा असौ स्वप्नदृशः स्वप्नदर्शनस्य विकासे विजृम्भणे विद्यमानः । वितथो मिथ्याभूतश्चासाववभासो भ्रमस्तस्य वैचित्र्यान्नानाप्रकारत्वाज्जातो वैचित्र्यजो भावः स्वभावः । इत्येनामुवाचेति सम्बन्धः । केचित्तु अविकासे अविवेकिनी सखि । वितथावभासवैचित्र्यजा स्वप्नदशा यस्मिन् सः वितथावभासवैचित्र्यजास्वप्नदशः भावोऽथवेति पाठान्तरमङ्गीकृत्य योजयन्ति ।। ८५ ।।

**प्रायः प्रपन्ना पुरुषेण केनाप्यमेयमायेन बतानिषङ्गम् ।**
**मन्दाक्षगर्भं युगलं त्वमक्ष्णोरुत्कण्ठया यत्र जडीकरोषि**
**।। ८६ ।।**

**प्राय इति** ।। हे रुचिरभ्रु त्वमेव । अमेया मातुं परिच्छेत्तुमशक्या माया यस्य सोऽमेयमायः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । तेन केनापि पुरुषेण । अभिषङ्गमभिषवम् । 'अभिषङ्गस्त्वभिषवे शपथाक्रोशयोरपि' इति शब्दरत्नाकरः । प्रायः प्रपन्नासि बत नूनं गतवत्यसि । इत्युत्प्रेक्षा । आश्चर्यमित्यर्थः । 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इत्यमरः । केन पुरुषेण पराभव इत्यतः पुरुषं विशिनष्टि– **मन्दाक्षेति** ।। मन्दाक्षं लज्जा गर्भोऽन्तस्थं यस्य तत् । मन्ताक्षगर्भम् । 'मन्दाक्षं ह्रीस्त्रपा

व्रीडा लज्जे'त्यमरः । अक्ष्णोर्नयनयोर्युगलम् उत्कण्ठया उत्कलिकया अनुरागेण । यत्र पुरुषे जडीकरोषि 'अभूततद्भाव' इति च्विः । स्तब्धं करोषि । तेन पुरुषेणेत्येनामुवाचेति सम्बन्धः ।। ८६ ।।

**अलोकसाधारण एष धूर्तः प्रोक्तस्तथा सत्यगिरा भवान्या ।**
**प्रनृत्यता सम्प्रति चित्तरङ्गे निद्रासुखं येन तवापनीतम्**
**।। ८७ ।।**

**अलोकेति** ।। हे रुचिरभ्रु । सत्या अवितथा गीर्वाग्यस्याः सा तया भवान्या पार्वत्या । तथा ते प्रकारेण प्रोक्त एष धूर्तः शठः । 'धूर्तः स्यात् खण्डलवणे शठधत्तूरयोरपि' इति विश्वः । लोकसाधारणो न भवतीत्यलोकसाधारणः । सम्प्रतीदानीं तव चित्तरङ्गे चित्तमेव रङ्गं नर्तनस्थलं तस्मिन् । प्रनृत्यता नर्तनं कुर्वता येन । निद्रासुखमपनीत-मपहृतम् । निद्रा विनाशिता । एष इत्येनामुवाच । अत्र उवाच चैनामित्याद्या अलोकसाधारण इत्यन्ता चतुश्श्लोकी विशेषकं नामकाव्यम् । तथा च 'वीरनारायणः– 'छन्दश्चतुष्टयं त्वेककियान्वयि विशेषकम् । इत्याह' इत्युक्तम् । दृश्यते च रघुवंशे त्रयोदशे सर्गे 'कचित्प्रभालेखिभि-रिन्द्रनीलैः' इत्याद्या चतुश्श्लोकी विशेषकं नाम काव्यम् ।। ८७ ।।

**इतीङ्गितज्ञा सुदृशो हृदिस्थमुन्नीय तस्यार्थविवेचनाय ।**
**अदर्शयच्चित्रपटे प्रकृष्टान् पुंसस्त्रिलोक्यामपि चित्रलेखा ।।८८।।**

**इतीति** ।। इङ्गितमभिप्रायस्तज्जानातीतीङ्गितज्ञा । 'अभिप्रायस्त्विङ्ग इङ्गितम्' इत्यमरः । 'आतोऽनुपसर्गे कः' । चित्रलेखा सुदृश उषायाः हृदिस्थं 'हृद्युभ्यां ङेरिति वक्तव्यम्' इत्यलुक् । हृदये वृत्तम् । उन्नीय ।

तस्य उन्नीतस्यार्थविवेचनाय प्रकारविवेकसिद्धये । 'अर्थः प्रकारे विषये वित्तकारणवस्तुषु' इति विश्वः । त्रिलोक्यामपि प्रकृष्टानुत्कृष्टान् पुंसः पुरुषान् । चित्रपटेऽदर्शयत् । 'दृशिर् प्रेक्षण' इत्यतो ण्यन्ताल्लङ् ।।८८।।

**पर्याप्तसौन्दर्यगुणान् गुणाब्धिः**
**पर्यायतः प्रेक्ष्य सुरासुरादीन् ।**
**व्यावर्त्य चावृत्तिममीति मह्यां**
**भौमेषु भूपेष्वतनिष्ट दृष्टिम् ।। ८९ ।।**

**पर्याप्तेति** ।। गुणाब्धिर्गुणैरब्धिरिव उषादेवी । पर्यायतः क्रमेण । पर्याप्तः पूर्णः सौन्दर्यलक्षणो गुणो येषां ते तथोक्तास्तान् । सुरासुरादीन् प्रेक्ष्य । आवृत्तिमीक्षणप्रचारलक्षणां व्यावर्त्य च । मह्याममीति भौमेषु भूपेषु भूम्याश्रितेषु राजसु । दृष्टिमतनिष्ट । तनु विस्तारे करणे च अकृत लुङ् ।। इन्द्रवज्रा ।। ८९ ।।

**अनादरेणादरणीयचेष्टा दृष्ट्वेतरानिष्टसमानजातीन् ।**
**बलादवागाहत यादवेन्द्रानिन्द्रोपमेयान् दितिजेन्द्रपुत्री**
**।। ९० ।।**

**अनादरेणेति** ।। आदरणीया चेष्टा यस्याः सा तथोक्ता सा दितिजेन्द्रपुत्री बाणासुरात्मजा । शार्ङ्गरवादित्वाङ्गीन् । इतरान् भूपान् अनादरेण । 'परिभावौदासीन्यमनादर' इति वृत्तौ असञ्ज्ञया करणीये उपेक्षेति हरदत्तः । अननुरागेण दृष्ट्वा । इष्टस्येच्छाविषयस्यानिरुद्धस्य समानजातीन् समानाकारानिति यावत् । इन्द्रेणोपमेया उपमातुं योग्या इन्द्रोपमेया देवेन्द्रसदृशास्तान् । इन्द्र उपमेयो येषां तानिति वा । यादवेन्द्रान् । बलादवागाहत दृष्टवतीत्यर्थः । गाहविलोडने लङ् ।। ९० ।।

**दृष्टे बले हृष्टमना भवत्सु प्रोद्भूतलज्जा मकरध्वजे सा ।**
**निमीलिताक्षी त्रपयानिरुद्धे धूर्तोऽयमित्याह रसातिरेकात्**
**॥ ९१ ॥**

**दृष्ट इति** ॥ सा उषा । भवत्सु विद्यमानेषु चित्रपट इति शेषः । भवतेः शत्रन्तस्येदं रूपम् । भवत्स्विति पुरुषेषु । बले बलभद्रे दृष्टे सति हृष्टमनाः हृष्टं हर्षयुक्तं मनो यस्याः सा तथा प्रियदर्शनोपधानत्वादिति भावः । मकरध्वजे प्रद्युम्ने दृष्टे प्रोद्भूतलज्जा प्रोद्भूता प्रोद्गता लज्जा यस्याः सा तथोक्ता । अनिरुद्धे दृष्टे तु त्रपया लज्जया निमीलिताक्षी निमीलिते मुकुलिते अक्षिणी यस्याः सा तथोक्ता 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजि'ति षच् षित्वाद् 'षिद्गौरादिभ्यश्च' इति ङीष् । सा सती । रसातिरेकाद् राजातिशयात् अयं पुरुषो धूर्तो वञ्चकः । 'धूर्तस्तु वञ्चक' इत्यमरः । इत्याह ब्रवीति स्मेति शेषः । सोद्भूतलज्जा मकरध्वजे स्मेति क्वचित्पाठः । केचित्तु विभक्तिप्रतिरूपकमव्ययमेतदिति आहेत्यस्य उवाचेत्यर्थ इत्यप्याहुः । यद्वा सा बले दृष्टे हृष्टमनाः । भवत्सु पूज्येषु युष्मासु दृष्टेषु उद्भूतलज्जा । मकरध्वजे दृष्टे त्रपया निमीलिताक्षी । अनिरुद्धे दृष्टे तु धूर्तोऽयमित्याह स्मेति योजना ॥ ९१ ॥

**प्रद्युम्नसूनोरनुकारि चित्रं तन्नेत्रपात्रेण मुहुः पिबन्ती ।**
**तत्प्राप्तिवैधुर्यभुवं न सोढुं शशाक शोकं हृदि वेदिमध्या**
**॥ ९२ ॥**

**प्रद्युम्नेति** ॥ प्रद्युम्नसूनोः प्रद्युम्नस्य सूनुः पुत्रः तस्यानिरुद्धस्य । अनुकारि प्रतिबिम्बं तच्चित्रपटगतं चित्रमालेख्यम् । नेत्रं पात्रमिव नेत्रपात्रं तेन । मुहुरसकृत् पिबन्ती । वेदेर्मध्यमिव मध्यं यस्याः सा वेदिमध्या

सूक्ष्मावलग्नेत्यर्थः । उषा । तत्प्राप्तेरनिरुद्धलाभस्य वैधुर्याद् भवतीति भवतेः क्विप् । तत्प्राप्तिवैधुर्यभूस्तम् । हृदि शोकं सोढुं हृदयगतशोकस्य सहनायेत्यर्थः । न शशाक । 'शक्लृ शक्तौ' लिट् शक्ता न बभूव । नेत्रस्य पानक्रियानुकूल्यप्रकटनाय पात्रतया परिणामप्रदर्शनात्परिणामालङ्कारः ॥ ९२ ॥

**अथाधिगम्याधिविनष्टधैर्यामुषा मनीषिण्यतुलानुभावा ।**
**आहर्तुकामा कमितारमस्या दम्भेन कुम्भाण्डसुतोदतिष्ठत् ॥ ९३ ॥**

**अथेति** ॥ अथ चित्रदर्शनजनितसखीक्लेशानुभवानन्तरम् । उषाम् । आधिना मानस्या व्यथया । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । विनष्टं धैर्यं यस्याः सा तथोक्ता ताम् । अधिगम्य विज्ञाय । अतुलोऽसदृशोऽनुभावो महत्ता यस्याः सा तथोक्ता मनीषिणी । मनीषा बुद्धिरस्यास्तीति मनीषिन्छब्दाद् व्रीह्यादिलक्षण इनिः । बुद्धिमती । अस्या उषायाः कमितारं कामुकम् । दम्भेन छद्मना 'कपटोऽस्त्री व्याजदम्भोपधयः छद्म कैतवम्' इत्यमरः । आहर्तुकामा 'तुङ्काममनसोरपि' इति तुमुनो मकारलोपः । कुम्भाण्डस्य तन्नामकबाणामात्यस्य सुता चित्रलेखा । उदतिष्ठत् । 'ष्ठा गतिनिवृत्तौ' लङ् । उत्थितवती प्रायततेत्यर्थः ॥ ९३ ॥

**निश्वासवैवश्यकृशां निशाया-**
**माश्वास्य विश्वासवशात्सुकेशीम् ।**
**पुरोगतं विद्धि तवानिरुद्धमित्यु-**
**द्धतात्मा दिवमुत्पपात ॥ ९४ ॥**

**निश्वासेति** ।। विवशाया भावो वैवश्यं निश्वासेन वैवश्यं निश्वासवैवश्यं तेन कृशाम् । सुकेशीं शोभनकेशशालिनीमुषाम् । निशायां रात्रौ विश्वास-वशात् विश्वासं विधायेति यावत् । यद्वा विश्वासस्य वशः प्रभुत्वं तस्माद्विश्वासवशात् । 'वशो जनस्पृहा यत्नेष्वायत्तत्वप्रभुत्वयोः' इति दर्पणः । आश्वास्य आश्वासवतीं कृत्वा । तवेति श्रवणाद्धे सखीति ग्राह्यम् । हे सखि अनिरुद्धं तव पुरोगतं पुरतः स्थितं विद्धि । 'विद ज्ञाने' लोट् । जानीहीत्येवम् उद्धत उन्नाहयुक्त आत्मा मनो यस्याः सा तथोक्ता चित्रलेखा । दिवमन्तरिक्षमुत्पपात । 'पत्लृ गतौ' लिट् गगनमुत्पतितवती ।। ९४ ।।

**आगत्य गत्या जितवातवेगा गृहं तदीयं तरसानिरुद्धम् ।**
**उद्धृत्य सिन्धोरिव रत्नमग्र्यमग्रे तरुण्याश्चतुरा चकार ।।९५।।**

**आगत्येति** ।। गत्या गमनेन जितो वातस्य वेगो यया सा तथा । अत एव चतुरा कुशला चित्रलेखा । तदीयमनिरुद्धीयं गृहमागत्य । तरसा वेगेन । अनिरुद्धं सिन्धोः समुद्रादग्र्यं श्रेष्ठं रत्नमिव । उद्धृत्य तरुण्या उषाया अग्रे पूरतः । चकार निहितवतीत्यर्थः ।। ९५ ।।

**लब्धं चिरादद्रिसुताप्रसादान्मुग्धानना सा त्रपयावरुद्धा ।**
**यथारुचीमं रमयाञ्चकार कस्यामृते हस्तगते ह्युपेक्षा ।।९६।।**

**लब्धमिति** ।। त्रपया लज्जया अवरुद्धा प्रतिवारितापि मुग्धानना सुन्दरानना । 'नक्रोडादिवह्वच' इति ङीषभावः । सा उषादेवी । अद्रि-सुतायाः उमायाः प्रसादात् । चिराद् बहोः कालात् । लब्धमिममनिरुद्धम् । यथारुचि तस्य स्वस्या वा रुचिमभिलाषमनतिक्रम्य । 'अथ रुचिः

स्त्रियाम् । अभिष्वङ्गेऽभिलाषे (शा?)'विति केशवः । रमयाश्चकार रमु क्रीडायामित्यतो णिजन्तााल्लिट् रमयामास । तथाहि– कस्य वा जनस्य हस्तगतेऽमृते ह्युपेक्षा असेवनादिरूपोऽनादरः स्यात् । न कस्यापीत्यर्थान्तरन्यासालङ्कारः ।। ९६ ।।

**प्रभ्रष्टचारित्रगुणां स्वपुत्रीमाकर्ण्य कर्णेजपमन्त्रशक्त्या ।**
**चुक्रोध बाणः श्रुतताक्ष्र्यमन्त्रश्चक्रीव चक्रीक्रियमाणनेत्रः**
**।। ९७ ।।**

**प्रभ्रष्टेति** ।। बाणो बाणासुरः स्वपुत्रीमुषां कर्णेजपमन्त्रशक्त्या कर्णेजपानां पिशुनानां मन्त्रस्य गुप्तवादस्य शक्त्या सामर्थ्येन । 'कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खल' इत्यमरः । 'वेदभेदे गुप्तवादे मन्त्र' इति चामरः । 'स्तम्बकर्णयोरमिजपो'रिति कप्रत्ययः । 'हलदन्तात्सप्तम्या सञ्ज्ञायाम्' इति ङेरलुक् । प्रभ्रष्टचारित्रगुणां प्रभ्रष्टौ विनष्टौ चारित्रमाचारः गुणः उदूढपतिनियमादिरूपश्च तौ यस्याः सा तथा ताम् । आकर्ण्य श्रुत्वा । श्रुतस्ताक्ष्र्यमन्त्रो गरुडप्रार्थनं येन सः श्रुतताक्ष्र्यमन्त्रः । 'मन्त्रो वेदप्रभेदे स्याद्देवादीनां च नाथने' इति विश्वः । चक्रीव सर्प इव । 'आशीविषो विषधरश्चक्री व्यालः सरीसृपः' इत्यमरः । चक्रीक्रियमाणनेत्रः चक्रीक्रियमाणे चक्राकारतया क्रियमाणे परिवर्त्यमाने नेत्रे यस्य स सन् । चुक्रोध । 'क्रुध कोप' इति क्रुध्यतेर्लिट् । उपमालङ्कारः ।। ९७ ।।

**कः खल्वयं कापुरुषोऽप्ययोग्यो**
**लक्ष्मीबुभूषुर्मम मार्गणस्य ।**
**परिक्षतं येन यशोऽभिगुप्तं**
**गूढेन मूढेन शुनेव हव्यम् ।। ९८ ।।**

**क इति** ।। अयमृषागृहं प्रविष्टः कापुरुषः । 'विभाषा पुरुष' इति कोः काभावः कुत्सितपुरुषोऽत एवायोग्यः । कन्याकरग्रहणानुकूलगुण-हीनतयानर्हः । अपि शब्दो गर्हायाम् । मम मार्गणस्य बाणस्य लक्ष्मीबुभूषुः 'सनाशंसभिक्ष उ'रित्युप्रत्ययः । लक्ष्यं भवितुमिच्छुः । कः खलु । खलुशब्दो जिज्ञासायाम् । 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्यमरः । को नाम बाणलक्ष्यत्वं कुत इत्यतः तदागो दर्शयति– **येनेति** ।। येन पुरुषेण गूढेन प्रच्छन्नेन मूढेन शुना हव्यमिव । अभिगुप्तं परिरक्षितं यशःपरिक्षतं विनाशितम् इति यावत् । स क इति सम्बन्धः ।।९८।।

**सा चाविलासीद्बत कन्यका मे हेयोर्वरेवोषरवारिमिश्रा ।**
**माभूज्जनानामपहासपात्रं कदाचिदेतद्विमलं कुलं नः ।।९९।।**

**सेति** ।। सा मे मम कन्यका च । ऊषरवारिमिश्रा ऊषरः क्षारमृत्तिका तद्वत् । 'ऊषसुषिमुष्कमधो र' इति मत्वर्थीयो रप्रत्ययः । तेन वारिणा जलेन निश्रा । अत एव हेया हातुं योग्या । उर्वरेव सर्वसस्याढ्यभूमिरिव भूमिमात्रमिव वा । 'उर्वरा सर्वसस्याढ्यभूमौ स्याद्भूमिमात्रके' इति केशवः । आविला कलुषा 'कलुषोऽनच्छ आविलः' इत्यमरः । आसीत् 'अस भुवि' लङ् अभवत् । बत खेदे । 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इत्यमरः । कदाचिदपि एतन्नोऽस्माकममलं निर्दोषं कुलं वंशः । जनानामपहासपात्रं माभूत् । माङि लुङ् । न भवेत् । उपमालङ्कारः ।। ९९ ।।

**इत्येवमादेश्य तदा स रोषादत्यन्तरूक्षः क्षपितारिपक्षः ।**
**प्रक्ष्वेलनेष्वासधरः क्षणेन क्षुब्धाब्धिकल्पो ददृशे पुरोऽस्य ।। १०० ।।**

**इतीति** ।। इति शब्दोपमर्शसमाप्तौ एवमुक्तप्रकारेणामृश्य उक्तयुक्तियुक्ततयावमृश्य । क्षपितः विनाशितोऽरीणां पक्षो बलं येन स तथोक्तः । 'पक्षो मासार्धके वृन्दे बले सखिसहाययोः' इति विश्वः । रोषादमर्षात् । अत्यन्तरूक्षः परुषः प्रक्ष्वेलना नाराचा इष्वासश्चापश्च तेषां धरतीति धरो धारकः । 'प्रक्ष्वेलनस्तु नाराचे' इति यादवः । क्षुब्धाब्धिकल्पः ईषदूनः क्षुब्धाब्धिः क्षुब्धाब्धिकल्पः । 'ईषदसमाप्तौ कल्पप्' । *[1](क्षुब्धोऽब्धिरिति उपसगत्युपमानादिति वृत्तिः?) । आगमशास्त्रस्यानित्यत्वात् क्षुब्द इति साधुरिति केचित् । स बाणासुरः । अस्यानिरुद्धस्य पुरोऽग्रे ददृशे कर्मणि लिट् दृष्टः ।। १०० ।।

**तया निरुद्धोऽप्यनिरुद्धनामा पितुर्भयाद्बाष्पजलाविलाक्ष्या ।**
**उत्थाय वीरः परिघं दधानः स सिंहनादं विदधे मृधाय**
**।। १०१ ।।**

**तयेति** ।। पितुर्बाणासुराद् भयाद्बाणासुरोत्पाद्यभयात् । बाष्पजलाविलाक्ष्या बाष्पजलेनाश्रुजलेन आविले कलुषे अक्षिणी यस्याः सा तथा तया उषया । निरुद्धोऽप्यनिरुद्धनामा स वीरः । उत्थाय स्वासनादिति शेषः । परिघं परिघातनामानमायुधविशेषम् । 'परिघः परिघातन' इति यादवः । 'परिघो मुद्गरोऽर्गले' इति कविदर्पणश्च । दधानः । मृधाय युद्धाय 'मृधमास्कन्दनं युद्धं समीकं साम्परायिकम्' इति यादवः । सिंहनादं विदधे कृतवान् । डुधाञ् धारणपोषणयोरित्यतो लिट् । अनिरुद्धनाम्नो विशेष्यसमर्पकस्यानिर्गलत्वाभिप्रायगर्भत्वात्परिकराङ्कुरालङ्कारः 'साभिप्राये विशेष्ये

---

१. 'क्षुब्ध इत्यत्र 'क्षुब्धस्वान्ते'ति निपातनादिण् न । क्षुब्धो मन्थार्थकश्चेदिति कौमुद्याम्' ।

तु भवेत्परिकराङ्कुरः' 'चतुर्णो पुरुषार्थानां दाता देवश्चतुर्भुजः' इति तल्लक्षणोदाहरणे ॥ १०१ ॥

**मायाविना तेन जितेन जन्येऽतिरोहितात्मात्मजयैषिणैषः ।**
**न्यबद्धतोद्भिन्नविषैः पृषत्कैर्नागास्त्रसम्पर्कसमृद्धवेगैः ॥ १०२ ॥**

**मायाविनेति** ॥ मायाविना 'अयस्मायामेधास्रजो विनिः' इति मायाशब्दाद्विनिप्रत्ययः । मायावता । जन्ये युद्धे 'युद्धमायोधनं जन्यम्' इत्यमरः । जितेन पराजितेन । आत्मनो जयमिच्छतीत्यात्मजयैषी ताच्छील्ये णिनिः । तेन बाणासुरेण । अतिरोहितोऽनाच्छादित आत्मा देहो यस्य स तथोक्तः । अमायित्वादिति भावः । एषोऽनिरुद्धः । नागास्त्रसम्पर्कसमृद्धवेगैः नागास्त्रस्य सम्पर्केण संस्पर्शेन समृद्धा अभिवृद्धा वेगा येषां ते तथोक्तास्तैः । उद्भिन्नविषैः उद्भिन्नानि विमिश्राणि विषाणि येषु ते तथोक्तास्तैः । 'भिन्नं तु त्रिषु मिश्रेऽपि' इति कविदर्पणः । पृषत्कैर्बाणैः । 'पत्रिशरविशिखसायकबाणपृषत्काशुगप्रदरा' इति रत्नाकरः । न्यबध्यत 'बध बन्धने' कर्मणि लङ् निबद्धः ॥ १०२ ॥

**सिद्धान्तसिद्ध्यै स निबध्य बालं शुद्धान्तमभ्येत्य सुखोपविष्टः ।**
**युद्धोत्सवौत्सुक्यरुजाभिभूतसिद्धेश्वरश्रावितभूरिकीर्तिः ॥१०३॥**

**सिद्धान्तेति** ॥ स बाणः । सिद्धान्तस्य स्वपक्षस्य सिद्ध्यै सिद्धये । बालमनिरुद्धं निबध्य । युद्धस्योत्सवः कोपः महो वा युद्धोत्सवस्तस्मिन्नौत्सुक्यमुद्योगस्तस्य रुजा रोगस्तया अभिभूता अभिहताः सिद्धेश्वराः सिद्धमूर्धन्यास्तैः श्राविता भूरिर्भूयसी कीर्तिर्यस्य स तथोक्तः । 'उत्सवस्तु

कोपोत्सेकमहेष्वपि' इति । रुजा रुण्मृत्युभङ्गेषु' इति दर्पणः । बाणासुरयुद्धोद्योगजनितनिजरुजाभिभूतसिद्धस्तोत्रपात्रकीर्तिस्फूर्तिरित्यर्थः । स सन् । शुद्धान्तमन्तःपुरं 'शुद्धान्तश्चावरोधश्चान्तःपुरम्' इत्यमरः । अभ्येत्य प्राप्य सुखोपविष्ट आसीदिति शेषः ।। १०३ ।।

**अचिन्त्यचिन्ताकुलमानसा सा सन्तापमन्तस्तरुणी विभर्ति ।**
**आलस्यशान्तिं मृदुभिः कटाक्षैः सम्पादयन्ती कुसुमास्त्रसूनोः**
**।। १०४ ।।**

**अचिन्त्येति** ।। अचिन्त्या अन्यैश्चिन्तितुमशक्या च सा चिन्ता च तया आकुलं पूर्णं मानसं यस्याः सा तथोक्ता । 'आकुलं भरितं पूर्णम्' इति हलायुधः । कुसुमास्त्रसूनोः प्रद्युम्नपुत्रस्यानिरुद्धस्य मृदुभिः कोमलैः प्रेमभरितैरिति यावत् । कटाक्षैरपाङ्गवीक्षणैः । आलस्यशान्तिं मान्द्योपशमम् । 'अलसौ पादरुग्मन्दौ' इति दर्पणः । सम्पादयन्ती कुर्वन्ती सा तरुणी युवती उषा । अन्तः सन्तापं बिभर्ति । 'डुभृञ् भरणे' लट् वहति । चिन्ताकुलमानसापीत्यालस्यशान्तिसम्पादनप्रतिबन्धकसद्भावमभिधाय सम्पादयन्तीति कार्योत्पत्तिवर्णनाद्विभावनाविशेषालङ्कारः ।। १०४ ।।

**तस्येतिवृत्तं गदितं सुरारेस्तपस्विनः कर्कशता च घोरा ।**
**तदत्र भक्तार्तिहराचिरेण विचार्य कार्यं करणीयतत्वम्**
**।। १०५ ।।**

**तस्येति** ।। सुरारेर्देवशत्रोस्तस्य बाणस्य वृत्तं चरितम् । इति 'आसीदसीमौजसी'त्यारभ्य अष्टोत्तरपञ्चाशति श्लोकेषु उक्तप्रकारेण गदितं व्यक्तमुक्तम् । तपस्विनस्तस्य घोरा कर्कशता च क्रूरता साहसिता वा ।

'कर्कशःसाहसिन्यपि । क्रूरासिकठिनस्पर्शेष्वपि' इति कविदर्पणः । गदितमिति क्रियान्वयमियाय यच्छब्दः । तत् तस्माद्धेतोः । भक्तार्तिहर हरतीति हरतेः पचाद्यच् । हरतेरनुद्यमनेऽजि'त्यज्वा । तस्य सम्बुद्धिः । शरणागतजनक्लेशनिबर्हणेत्यर्थः । भक्तं भजनं 'तदस्यास्ती'त्यर्श आद्यच् । भुक्ता ब्राह्मणा इति यथा भक्ता भजनवन्त इत्यर्थः । करणीयतत्वं कर्तव्यस्वरूपं 'तत्वं चिदचिदीशेषु स्वरूपे निश्चयार्थयोः' इति कविदर्पणः । विचार्य विमृश्य कार्यं कर्तव्यम् ।। १०५ ।।

**विविधमनुमिमानाः स्वोहतः स्वाप्तवाक्या-**
**दधिगतगहनार्थास्तत्वमीमांसका वा ।**
**वचनमुचितमेतन्मुञ्चता नारदेन**
**व्यपगतविचिकित्सा यादवाः सम्बभूवुः ।। १०६ ।।**

**विविधेति** ।। यादवाः स्वेषामूहतस्तर्कबलात् । विविधं यथा तथा अनुमिमानाः । अनुपूर्वात् 'माङ् मान' इति धातोः लटः शानचि जुहोत्यादित्वाच्छपः 'श्लौ'विति द्वित्वे 'अभ्यासस्य भृञौ' इति इत्वे 'श्नाभ्यस्तयोरात' इत्याल्लोपे अनुमिमाना इति रूपम् अनुमातार इत्यर्थः । उचितं योग्यमेतद्वचनं मुञ्चता व्याहरता नारदेन । स्वाप्तवाक्यात् सुष्ठु आप्ता वेदव्यासादयस्तेषां वाक्यात्सूत्रादिरूपात् । यद्वा स्वेषामाप्तः श्रीकृष्णस्तस्य वाक्यात्– 'प्रायः कयाचित् सुरवैरिदूत्ये'त्यादिरूपादिति योज्यम् । अधिगतगहनार्था अधिगता ज्ञाता गहना दुर्गमा अर्था यैस्ते तथोक्तः । 'गहनं विपिने दुर्ग' इति कविदर्पणः । 'गाहृ विलोडने' इत्यतो 'बहुलमन्यत्रापि' इति इतच् । 'कृच्छ्रगहनयोः' इति निर्देशाद्ध्रस्वः । तत्वमीमांसकाः मीमांसां विदन्तीत्यर्थे 'कमादिभ्यो उन्' इति उन्प्रत्ययः ।

तत्वस्य मीमांसका उपक्रमादिन्यायैर्धर्मब्रह्मादि वस्तु निश्चिन्वन्त इत्यर्थः । वाशब्द उपमानार्थे । 'वा विकल्पोपमानयोः' इत्यमरः । अपगता विचिकित्सा संशयो येषां ते अपगतविचिकित्साः । 'विचिकित्सा तु संशय' इत्यमरः । सम्बभूवुः सम्यग् बभूवुः । उपमालङ्कारः, मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति वृत्तरत्नाकरे लक्षणाभिधानात् ॥ १०६ ॥

**हृदयनिहितनिर्वितर्ककृत्यः सुविदितरुग्मवतीसुतप्रवृत्तिः ।**
**कृतमिव करणीयमेष मेने नहि महतां मतयो मुधा भवन्ति ॥ १०७ ॥**

**॥ इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यविरचिते उषाहरणे महाकाव्ये षष्ठः सर्गः ॥ ६ ॥**

**हृदयेति** ॥ सुविदिता रुग्मवत्या सुतस्यानिरुद्धस्य प्रवृत्तिर्वृत्तान्तो येन स तथोक्तः । अत एव हृदये निहितं धृतं निर्वितर्कं निस्संशयं कृत्यं कर्तव्यं यस्य स तथोक्तः । एष श्रीकृष्णः । करणीयं कर्तव्यं कृतप्रायं मेने । मनु अवबोधने लिट् । अवबुद्धवान् । कथं कर्तव्यस्य कृतप्रायत्वमित्यतः समर्थनीयमेतत्समर्थयते– महतां पूज्यानां महानुभावानां मतयो बुद्धयो मुधा वृथा । 'व्यर्थके तु वृथा मुधा' इत्यमरः । न भवन्ति हीति काव्यलिङ्गमलङ्कारः । 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् । जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः' । इति चन्द्रालोके सोदाहरणं तल्लक्षणमभिहितम् । अत्र पुष्पिताग्रानामकं वृत्तम् । तथा च वृत्तरत्नाकरे 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रे'ति ।

अयुजि प्रथमे तृतीये च पादे । युजि द्वितीये तुरीये चेत्यर्थः । तथा च तत्रैव युक् समं विषमं चायुगिति । एवं वृत्तभेदं निबध्नता 'सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम् । काव्यं कल्पान्तरस्थायि' इति कविसमयोऽनुगृहीतः ।। १०७ ।।

**।। इति श्रीमदुषाहरणव्याख्यायां रसिकरञ्जनीसमाख्यायां सूरीन्द्रश्रीमच्चरणशिष्यसुमतीन्द्रतीर्थयतिविरचितायां षष्ठः सर्गः ।। ६ ।।**

## ।। अथ सप्तमः सर्गः ।।

अथास्मिन् सप्तमे सर्गे महाकाव्याङ्गं प्रयाणमाजिं च वर्णयति–

**सम्यञ्चं तदनु परिक्वणत्सुवीणं सत्कुर्वन्नमरमुनिं मुदा मुकुन्दः ।**
**सानुज्ञो मतिमकरोदमोघकामः कालज्ञो रिपुनगरं प्रति प्रयाणे ।। १ ।।**

**सम्यञ्चमिति** ।। तदनु रुग्मवतीसुतवृत्तान्तावेदनानन्तरम् । 'पश्चात्सादृश्ययोरनु' इत्यमरः । परिक्वणत्सुवीणं परिक्वणन्ती शब्दायमाना शोभना वीणा यस्य स तथा तम् । सम्यञ्चं साधुम् । अमरमुनिं देवर्षि नारदं मुदा सन्तोषेण सत्कुर्वन् पूजयन् । सानुज्ञः तत उपात्तानुमतिः । अमोघकामोऽमोघोऽवितथः काम इच्छा यस्य स तथा । कालमवसरं जानातीति कालज्ञः । 'आतोऽनुपसर्गे कः' । रिपोर्बाणस्य नगरं शोणितपुरं प्रति प्रयाणे विषये मतिमकरोत् । 'डुकृञ् करणे' लङ् । सम्यञ्चमित्याद्या षट्श्लोकी प्रहर्षिणीवृत्तबद्धा । 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति वृत्तरत्नाकरे तल्लक्षणमभिहितं मगणनगणौ जगणरगणौ गुरुश्चेत् प्रहर्षिणीनामकं वृत्तं त्रिषु दशसु च यतिः कर्तव्येत्यर्थः ।। १ ।।

**गम्भीरः सरभसकिङ्कराहतानां भेरीणां रणसरणानुमापिकानाम् ।**
**उद्गाढस्तनितमहाभ्रविभ्रमाणामारावः पुरमथ पूरयाञ्चकार ।। २ ।।**

**गम्भीर इति** ।। अथ प्रयाणनिर्धारणानन्तरं रभसेन वेगेन सहिताः सरभसाः ते च ते किङ्कराश्च तैराहतानां ताडितानाम् । 'रभसो वेगहर्षयोः' इत्यभिधानम् । रणसरणानुमापिकानां रणस्य युद्धस्य सरणं गमनं युद्धो-

द्देश्यकगमनं तस्यानुमापिकानां सूचकानाम् । उद्गाढमतिमात्रम् 'अतिमात्रोद्गाढनिर्भरा' इत्यमरः । स्तनितं गर्जितं येषां तानि च तानि महाभ्राणि विशिष्टमेघाश्च तेषां विभ्रमो विलास इव विभ्रमो यासां तास्तथा तासां भेरीणां गम्भीरो मन्द्रः 'मन्द्रस्तु गम्भीर' इत्यमरः । आरावः 'विभाषा ढिरुप्लुवो'रिति घञ् । ध्वनिः । पुरं द्वारकापुरं पूरयाश्चकार । 'पूरी आप्यायने' लिट् । पूरितवान् । महाभ्रविभ्रमाणामित्युपमालङ्कारः ।। २ ।।

**जग्राह स्फुरदरचक्रमेव चक्रं चक्राङ्ग-**
**प्रतिमरुचं च पाञ्चजन्यम् ।**
**कोदण्डं निजमरिषण्डदत्तदण्डं**
**दोर्दण्डैरकृपणविक्रमः कृपाणम् ।। ३ ।।**

**जग्राहेति** ।। अकृपणविक्रमः अकृपणः अकुत्सितः विक्रमः पराक्रमः यस्य स तथोक्तः । 'कृपणस्तु कृमौ पुंसि त्रिषु कुत्सितनिस्स्वयोः' इति दर्पणः । एष कृष्णः स्फुरदरचक्रं स्फुरत् प्रकाशमानमराणां चक्रावयवानां चक्रं समूहो यस्य तत्तथा । चक्रं सुदर्शनाख्यम् । चक्राङ्गो हंसस्तस्य सदृशी रुग् यस्य तम् । 'हंसो मरालश्चक्राङ्ग' इति धनञ्जयः । 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकस' इत्यमरः । पाञ्चजन्यं पाञ्चजन्यनामानं शङ्खम् । अरीणां शत्रूणां षण्डं समूहस्तस्मिन् दत्तो दण्डो निग्रहो येन तत्तथा । यद्यपि 'अथ षण्डवाक् । अस्त्री वृक्षसमूहे स्यात्पद्मादीनामितीतरे' इति केशवादिभिः षण्डशब्दो वृक्षपद्मादिसमूहे वर्तत इत्युक्तम् । तथाप्यत्र ज्योत्स्नाशब्द इव समूहसामान्यवचनो वक्तव्यः । अत एव कविर्विष्णुस्तुतौ 'पदकिसलयज्योत्स्नये'त्यवादीत् । 'दण्डोऽस्त्री निग्रहे मयि । आज्ञायां शासने राज्ञां हिंसायां लगुडेऽपि च' इति केशवः । कोदण्डं कार्मुकं कृपाणं

करवालं च 'कौक्षेयको मण्डलाग्रं करवालः कृपाणक' इत्यमरः । दोर्दण्डैः शाखासदृशैर्भुजैर्जग्राह ग्रह उपादाने उपाददे गृहीतवानित्यर्थः । एकैकवर्णस्यासकृदावृत्तेर्वृत्त्यनुप्रासः शब्दालङ्कारः ।। ३ ।।

**सस्नेहं सदसि समीक्ष्य सात्यकिं सः**
**प्रेक्षावान् पुरपरिपालने प्रयोज्य ।**
**सङ्कल्पक्षणविदमादरात्सुपर्णीसूनुं**
**सुप्रणतिमुपेतमारुरोह ।। ४ ।।**

**सस्नेहमिति** ।। प्रेक्षावान् स श्रीकृष्णः । सदसि सभायाम् । सस्नेहं प्रेमसहितं यथा तथा भक्तमिति वा । सात्यकिं सत्यकनामकयादवकुमारं समीक्ष्य । पुरस्य द्वारवतीनगरस्य परिपालने नियोज्य । सङ्कल्पक्षणविदं सङ्कल्पः 'सङ्कल्पः कर्ममानसम्' इत्यमरः । तस्य क्षणोऽवसरः । 'क्षणस्त्ववसरे मध्ये पारतन्त्र्ये तथोत्सवे' इति केशवः । वेत्तीति वित् 'सत्सूद्विष' इति क्विब्वा । आदरात् कर्मसु त्वरणात् । 'स्यात्तु संवेग आदरः' इत्यमरशेषः। कर्मसु त्वरणमादर इति तद्व्याख्यानम् । सुप्रणतिं शोभनां भक्त्याद्यतिशयोपेतां प्रणतिं प्रणाममुपेतमुपगतवन्तम् । यद्वा शोभना प्रणतिर्यस्य तम् उपेतं समीपमागतं सुपर्णीसूनुं सुपर्ण्याः विनतायाः सूनुं गरुडमारुरोह 'रुह बीजजन्मनि प्रादुर्भावे' इत्यतो लिट् । उपसर्गवशादारूढवानित्यर्थः । प्रेक्षावानिति विशेषणस्य पुरपरिपालननिपुणपुरुषनियोजनाभिज्ञानाद्यभिप्रायगर्भत्वात् परिकरालङ्कारः । शब्दालङ्कारस्तु स्फुटप्रतिभासः ।। ४ ।।

**आरूढे तमनु गतानुजे विराजं**
**बिभ्राणे हलमुसले हलायुधे च ।**
**प्रद्युम्नो दधदिषुकार्मुकासिचर्माण्य-**
**न्वास्त स्फुरदुरुनीलशैलशोभः ।। ५ ।।**

**आरूढ इति** ।। अनुगतोऽनुसृतोऽनुजः श्रीकृष्णो यस्य तस्मिन् । हलं लाङ्गलं मुसलमयोऽग्रं च ते बिभ्राणे वहति हलायुधे बलभद्रे । वीनां पक्षिणां राजा विराजस्तं 'विः पक्षिपरमात्मनोः' इत्यभिधानम् । तं गरुड-मारूढे सति । 'गत्यर्थाकर्मके–'ति रुहेः कर्तरि क्तः । स्फुरन् प्रकाशमानः उरुरुत्कृष्टः नीलशैलो नीलपर्वतस्तस्य शोभेव शोभा यस्य स स्फुरदुरु-नीलशैलशोभः । इषुर्बाणः कार्मुकं धनुः असिः खड्गः चर्म खेटश्च इषुकार्मुकासिचर्माणि तानि दधत् प्रद्युम्नश्च अन्वास्त पश्चादुपाविशत् । बलभद्रश्रीकृष्णप्रद्युम्ना गरुडस्कन्धे यथान्यायमुपाविशन्नित्यर्थः ।। ५ ।।

**शंसन्तः शिवमशिवेतरैर्निमित्तैरुद्दिष्टप्रथितजयाशिषो द्विजेन्द्राः ।**
**सन्तापव्यसनमुदस्य यादवानां सन्तोषं विदधुरधोक्षजप्रयाणे**
**।। ६ ।।**

**शंसन्त इति** ।। अशिवेतरैः अशिवेभ्योऽमङ्गलेभ्य इतरैर्मङ्गलैः । अशिवान्यमङ्गलानि इतराणि येभ्यस्तानि तथोक्तानि तैरिति वा । पूर्वत्र 'पञ्चमी'ति योगविभागात्समासः । निमित्तैः शुभसूचकैः 'निमित्तं हेतुलक्ष्ययोः । शुभदैः सूचकैश्च' इति केशवः । उद्दिष्टा उच्चारिताः प्रथिताः प्रसिद्धाश्च या जयाशिषः तद्वन्त उद्दिष्टप्रथितजयाशिषः । द्विजेन्द्रा ब्राह्मण-श्रेष्ठाः । अधोक्षजस्य श्रीकृष्णस्य प्रयाणे प्रस्तुते सतीति शेषः । यादवानां

सन्तापव्यसनं सन्तापस्य व्यसनं सन्तापहेतुं विपदं 'व्यसनं सक्तिविपदोः' इति केशवः । उदस्य निरस्य । सन्तोषं विदधुः चक्रुः । व्यसनव्युदसनेन सन्तोषसम्पादनं समर्थनीयमुद्दिष्टेत्यादिविशेषणेन समर्थ्यत इति काव्यलिङ्गमलङ्कारः ॥ ६ ॥

**आदित्यारिपराभवोन्मुखमुखा हे(खीर्हे?)तीर्वहन्तो मुहुः**
**शुश्रूषारतमानसद्विजवरश्रेयस्कराः संस्कृताः ।**
**निर्यान्तो[१] नगरारणेः स्तुतिमयब्रह्मोक्तिभिः प्रेरिता**
**भान्ति स्म ज्वलना इव त्रय इमे नाकौकसां तृप्तिदाः**
**॥ ७ ॥**

**आदित्येति** ॥ आदित्यानां देवानानमरयोऽसुरास्तेषां पराभवे तिरस्कारे उन्मुखानि सन्नद्धानि मुखानि यासां ता आदित्यारिपराभवोन्मुखमुखाः स्वाङ्गत्वाभावादत्र न ङीष् । अत एव फलमुखी कारणमुखी च अनवस्थे-त्यादिप्रयोगा असाधव एवेति वैय्याकरणाः । हेतीः शस्त्राणि वह्निपक्षे ज्वालाश्च । 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतय' इत्यमरः । वहन्तो बिभ्राणा मुहुः पुनःपुनः । शुश्रूषारतमानसद्विजवरश्रेयस्कराः शुश्रूषायां परिचर्यायां रतमासक्तं मानसं यस्यासौ द्विजवरो गरुडस्तस्य श्रेयस्कराः ताच्छील्येन श्रेयस्सम्पादकाः । वह्निपक्षे शुश्रूषारतमानसा ये द्विजवरा ब्राह्मणोत्तमास्तेषां श्रेयस्कराः । 'शुश्रूषा श्रोतुमिच्छायां परिचर्या कथानयोः' इति विश्वः । 'वरिवस्या तु शुश्रूषा परिचर्याप्युपासने'त्यमरश्च । 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' इति सत्वम् । संस्कृताः वह्निपक्षे संस्कारयुक्ता आहितोत्कर्षाः । 'सम्पर्युपेभ्यः करोतौ भूषण' इति भूषणार्थे

१. 'निर्यन्त' इति पाठान्तरम्

सुट् । अन्यत्राभूषणेऽपि सुट् 'संस्कृतं भक्षा' इति ज्ञापकादिति वैय्याकरणाः । 'संस्कृतं तु भूषिते कृत्रिमेऽपि च । प्रशस्तलक्षणोपेते निर्मलीकृतभाषयोः' इति कविदर्पणः । वह्निपक्षे– 'संस्कृतं त्वाहितोत्कर्षः इति केशवः नगरमेवारणिरग्नियोनिकाष्ठं तस्मान्निर्यान्त उद्गच्छन्तः । निर्यन्त इति पाठेऽप्ययमेवार्थः । स्तुतिमया ब्रह्मोक्तयः । विप्रवेदसूक्तानि ताभिः । 'तत्कृतवचने मयट्' इति प्राचुर्येण प्रस्तुतेऽर्थे मयट्प्रत्ययः । 'ब्रह्मतत्वं तपो वेदो ब्रह्माविप्रः प्रजापतिः' इत्यमरः । ताभिः प्रेरिताः । नाकौकसां देवानां तृप्तिदाः प्रीतिमावहन्तः । त्रयो ज्वलनाः आहवनीयाद्या अग्नय इव भान्ति स्म । 'भा दीप्तौ' लिट् । बभुः । श्लेषानुप्राणितोपमालङ्कारः । आदित्येत्याद्या षट्श्लोकी शार्दूलविक्रीडिताख्यवृत्तबद्धा । तथाच वृत्तरत्नाकरे– 'सूर्याश्वैर्मसजाः स्तताः सगुरवः शार्दूलविक्रीडितम्' । मगणसगणजगणसगणतगणतगणगुरवो यत्र निबध्यन्ते । यत्र च द्वादशाक्षर्यो सप्ताक्षर्यो च विरतिस्तच्छार्दूलविक्रीडितं नाम वृत्तमिति तदर्थः ।। ७ ।।

**याता सोऽतिशयेन तोयशयनः शुद्धाञ्जनादञ्जसा**
**चूडारत्नमरीचिरञ्जितरुचा रूपेण रूक्षेतरः ।**
**जीमूतानधरीचकार चपलोत्तंसानसौ कंसभित्**
**कुम्भाण्डप्रियविप्रियप्रतिसमाधाने दधानो धुरम् ।। ८ ।।**

**यातेति** ।। शुद्धाञ्जनादितरासस्मिश्रितकज्जलात् । 'पञ्चमी विभक्त' इति पञ्चमी । अतिशयेन अञ्जनगिरेरपि नीलिमोत्कर्षेण उपलक्षितः । अञ्जसा याता गच्छन् स प्रसिद्धस्तोयशयनः । चूडारत्नमरीचिरञ्जितरुचा चूडारत्नं शिरोमणिस्तस्य मरीचयः कान्तयस्ताभिः रञ्जिता खचिता रुक् शोभा यस्य तत्तथा तेन रूपेण वपुषा 'रूपं नपुंसकम् । स्वभावाकृतिसौन्दर्यवपुष्षु

श्लोकशब्दयोः' इति केशवः । रूक्षेतरः परुषान्यः सौम्यः कुम्भाण्डप्रिय-विप्रियप्रतिसमाधाने कुम्भाण्डस्य प्रियो बाणस्तस्य विप्रियमप्रियं दुःखं तस्य प्रतिसमाधानं विधानं करणं तस्मिन् धुरं भारं 'धूःस्त्री भारे यानमुख' इति रत्नाकरः । दधानः कंसभित् श्रीकृष्णः चपलोत्तमान् विद्युच्छेखरान् 'तटित्सौदमिनी विद्युच्चञ्चला चपलापि च' इत्यमरः । 'उत्तंसः कर्णपूरे च शेखरे च' इति विश्वकविदर्पणौ । जीमूतान् मेघान् 'घनजीमूतमुदि-रजलमुग्धूमयोनय' इत्यमरः । अधरीचकार तिरश्चकार । शब्दालङ्कार ऊह्यः ॥ ८ ॥

**लीलालोलगतिस्तनूरुहगरुत्प्रोद्धूननाचूर्णित-**
**प्रायःप्रान्तपयोदपांसुपटलप्रस्तावितप्रस्थितिः ।**
**प्रायासीद्बहुयोजनापरिमितस्थानं[१] तदास्थायुतः**
**कालेनाल्पतरेण काश्यपसुतः कार्श्यङ्करः शत्रुषु ॥ ९ ॥**

**लीलेति** ।। लीलया लोला चला गतिर्यस्य स तथा तनूरुहाणां गरुतां प्रोद्धूमनेन प्रकम्पनेन आचूर्णितै रथैः प्रायाः सदृशाः 'प्रायस्तुल्ये च वयसि भूम्निवृत्तावनशने' इति दर्पणः । प्रान्तपयोदाः पर्यन्तवर्तिनो मेघाः ते च । पांसूनां पार्थिवरजसां पटलानि समूहाश्च 'समूहे पटलं नना' इत्यमरः । तैः प्रस्ताविता प्रशंसिता सूचिता प्रस्थितिर्गमनं यस्यासौ तनूरुहेत्याद्युक्तः । तदास्थायुतः सा प्रास्थितिस्तत्रास्थया तत्परत्वेन युतः प्रस्थाने तात्पर्यवानित्यर्थः । 'आस्थावलम्बने गोष्ठ्यां तत्परत्वप्रतिज्ञयोः' इति कविदर्पणः । शत्रुषु कार्श्यङ्करः कृशतां कुर्वाणः 'कृत्यल्युटो बहुलम्' इत्यत्र बहुलग्रहणं कृन्मात्रस्याव्यवस्थाज्ञापकमिति वैय्याकरणैरुक्तत्वादत्र

१. 'बहुयोजनीपरिमितस्थानं' इति पाठान्तरम् ।

खच् प्रत्ययः । यद्वा करोतीति करः पचाद्यच् । षष्ठी तु अपवाद-विषयेऽप्युत्सर्गो निविशत इति वचनान्न भवतीति द्वितीया युक्ता । काश्यप-सुतो गरुडोऽल्पतरेणात्यन्ताल्पेन कालेन । 'अल्पाच् तरम्' इति वत् स्वार्थे वा तरप् । शीघ्रं बहुयोजनापरिमितं बहुभिर्योजनैरासम्यक् । बहुयोजनीपरिमितेति पाठे बहुयोजनशब्दाद् 'द्विगो'रिति ङीप् । परिमितं स्थानम् । प्रायासीत् 'या प्रापणे' लुङ् प्रास्थित ।। ९ ।।

**स्कन्धारोपितरेवतीरतिरमाकान्तं समन्तादमुं**
**दृष्ट्वा दृष्टिविघातकद्युतिचयं खे खेचराणां भ्रमः ।**
**नानारत्ननगं सुमेरुशिखरं प्रायः प्रभावाद्विभो-**
**र्बाणस्योपवनस्थलीं स्वयमलङ्कर्तुं प्रयातीत्यभूत् ।। १० ।।**

**स्कन्धेति** ।। स्कन्धे अंसे 'स्कन्धो भुजशिरोंऽसोऽस्त्री'त्यमरः । आरोपिताः रेवतीच रतिश्च रमा च तासां कान्ता बलभद्रप्रद्युम्नकृष्णाः येन तम् । तथा 'वासुदेवार्जुनाभ्यां 'वुन्नि'त्यत्रेव अभ्यर्हितत्वा-(विपक्षयो?)विवक्षया रेवतीशब्दस्य पूर्वं प्रयोगः । रमाशब्दापेक्षया रति-शब्दस्य 'लध्वक्षरं पूर्वम्' इति पूर्वत्वम् । समन्तात् परितः । 'समन्तात् सर्वतो विष्वक् परितश्च समन्तत' इति शब्दरत्नाकरः । दृष्टीनां द्रष्ट्-विलोचनानां विघातकः प्रतिघातकः द्युतीनां कान्तीनां चयो निवहो यस्य तं तथा । दृष्टिविधातकेति शेषषष्ठ्या समासः । अमुं गरुडं खेऽन्तरिक्षे दृष्ट्वा । नानारत्ननगं नानाविधा रत्नानां नगा रत्नमयाः पर्वता यस्य तत्तथा । सुमेरोर्मेरुपर्वतस्य शिखरं शृङ्गम् । विभोः समर्थस्य बाणस्य प्रभावात् तेजसः पराक्रमात् । 'प्रभावः शान्तितेजसोः' इति दर्पणः । उपवनस्थलमलङ्कर्तुम् । स्वयमात्मना प्राय इत्यव्ययम् । 'प्राय इत्यव्ययं

भूम्नि' इत्यमरः । प्रयान्तीति खेचराणां भ्रमो भ्रमणं तथा च त्त्वा-प्रत्ययोपपत्तिः । अभूत् भवतेर्लुङ् । प्राय इत्युक्तेर्वस्तूत्प्रेक्षालङ्कारः । गरुडे सुमेरुशृङ्गत्वभ्रान्तिवर्णनाद्भ्रान्तिमानलङ्कारश्च तेन संसृज्यते ।। १० ।।

**मुञ्चन्तश्च्युतविष्फुलिङ्गमभितो ज्वालाकुलं व्याकुला**
**धूमव्रातनिगूहिताम्बरतला धूमध्वजा वर्त्मनि ।**
**दृष्टाः स्पष्टमनिष्टपुष्टिमथनैरावेष्टयन्तः पुरी-**
**मिष्टां दैत्यपतेः प्रवेष्टुमनसामारात्कृतध्वस्तयः ।। ११ ।।**

**मुञ्चन्त इति** ।। अभितः पार्श्वद्वयेऽपि ज्वालाभिराकुलं पूर्णज्वालाकुलम् । च्युतो गलितो विष्फुलिङ्गोऽग्निकणः 'त्रिषु स्फुलिङ्गोऽग्निकण' इत्यमरः । तम् । समुदायाशयमेकवचनम् अग्निकणान् मुञ्चन्तः सृजन्तः । व्याकुला व्यासङ्गवन्त इति कर्तव्यतामूढ इत्यमरे हरिदीक्षितः । धूमव्रातेन धूमानां सङ्घातेन 'स्तो मौघनिकरव्रातवारसङ्घातसञ्चया' इत्यमरः । निगूहितमपनीत-माच्छादितमम्बरतलमन्तरिक्षस्वरूपम् । 'स्वरूपधरयोर्वानातलम्' इति दर्पणः । यैस्ते तथोक्ताः । अनिष्टानां शत्रूणां पुष्टीनां पोषणानां मथनैर्विमर्दैः । अध्ययनेन वसतीतिवद्धेतौ तृतीया । शत्रुपराक्रमविमर्दयेत्यर्थः । अत एव 'मन्ये बाणस्य नगरमभ्यासस्थमरिन्दम । रक्षार्थं तस्य निर्यातो वह्निरेषःस्थितो ज्वलन्नि'ति हरिवंशे रक्षार्थमिति चतुर्थ्यर्थोक्तिः । दैत्यपतेरिष्टां पुरीमावेष्टयन्तः परिवेष्टयन्तः । प्रवेष्टुमनसां 'तुंकाममनसोरपी'ति मकारलोपः । प्रवेशाय कृतमानसानां येषां केषाञ्चिदपि प्रत्यर्थिनां वर्त्मनि । आराद्दूर एव कृता ध्वस्तयो ध्वंसा यैस्ते तथोक्ताः । एवम्भूता धूमध्वजा अग्नयः । 'अर्चिष्मान् ज्वलनः कृशानुरनलो धूमध्वजो हव्यवाडि'ति हलायुधः । आरात्समीपे स्पष्टं दृष्टा इति योज्यम् ।। ११ ।।

**उद्विग्नान् गरुडप्रतापतरसा सोऽग्नीन् विभग्नार्चिषः**
**कृत्वा कौरववीरवैरिभयकृद्भूयो भुवो भारभित् ।**
**गच्छन्नच्छलकीर्तिरार्तनिलयः श्रोत्रान्तयात्रावता**
**नेत्रेण त्रिपुरद्विषः प्रियतरं[१] देशं ददर्शादरात् ।। १२ ।।**

**उद्विग्नानिति** ।। वीराश्च ते वैरिणो वीरवैरिणः । कैरवाश्च ते वीरवैरिणश्च तेषां भयस्य कृत् कर्ता करोतेः कर्तरि क्विप् । भूयो मुहुर्मुहुः । भूमेर्भारस्य भित् भेत्ता भिदेः क्विप् । (स श्रीकृष्णः) तथा च पौराणिकाः– 'भूभारोत्तारणाय च । कौरवाणां विनाशय' इति । गरुडप्रतापतरसा गरुडस्य यः प्रतापः तस्य तरसा वेगेन 'रंहस्तरसी तु रयस्यदः' इत्यमरः । उद्विग्नान् भीतान् (अग्नीन्) 'ओविजी भयचलनयोः' इत्यस्य ओजीत्वान्निष्ठानत्वं 'त्रस्तश्चकितो दरितो भीतो विग्नो विशङ्कितस्त्रस्तः । कातरभीरुकभीलुकभीवर एवादशाधीर' इति शब्दरत्नाकरः । विभग्नान्यामृदितानि अर्चींषि ज्वाला येषां ते तथोक्तः तान् कृत्वा । अच्छला अस्खलिता कीर्तिर्यस्य स तथा 'छद्मस्खलितयोः छलम्' इति केशवः । आर्तानां निलय आश्रयः श्रीकृष्णः 'भक्तार्तिभञ्जन' इति प्रसिद्धिः । गच्छन् सन् श्रोत्रस्यान्तोऽन्तिकम् 'अन्तःप्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहर' इति विश्वः । श्रोत्रान्तस्य यात्रा गमनमस्यास्तीति श्रोत्रान्तस्य यात्रावत् । तेनात्यायतेन नेत्रेण त्रिपुरद्विषः द्वेष्टीति द्विट् क्विप् । त्रयाणां पुराणां समाहारस्त्रिपुरं पात्रादित्वान्न ङीप् । तस्य द्विषः शिवस्य प्रियतरम् । 'अल्पाच्तरं बहुतरकं वा प्रियतमम्' इति सूत्रभाष्यप्रयोगात् स्वार्थे तरप्प्रत्ययः । प्रियं देशम् । प्रियकरमिति पाठे करोतेस्ताच्छील्ये टः ।

---

१. 'प्रियकरं' इति पाठान्तरम्

आदरात्संवेगाद् ददर्श । तथाच हरिवंशे– 'एतच्छ्रुत्वा तु गरुडो वासुदेवस्य भाषितम्' इत्यादिना.....आप्लुत्याकाशगङ्गायां निपीय सलिलं बहु । स ववर्षोपरिगतो वैनतेयः प्रतापवान् । तेनाग्निं शमयामास' इत्यन्तेन पुरीवलयभूताग्नीनां निर्वाणनोक्ता ।। १२ ।।

**स्थानीयं तच्छोणिताख्यं प्रविश्य**
**प्रत्याकर्तुं[1] पूरयन् पाञ्चजन्यम् ।**
**रेजे राजीवेक्षणः पूर्णचन्द्रबिम्बो-**
**द्गारीवाम्बुदः प्रावृडादौ ।। १३ ।।**

**स्थानीयमिति** ।। राजीवे पद्मे इव ईक्षणे नेत्रे यस्य स तथा । शोणिताख्यं स्थानीयं नगरीं ('पूःस्त्री पुरी नगर्यौ वा पत्तनं पुटभेदनं' इत्यमरः ।?) प्रविश्य प्रत्याकर्तुं निराकर्तुं प्रत्याख्यातुमित्यपि पाठः। शोणितपुरे विद्यमानान् बाणप्रभृतीन् वित्रासयितुमित्यर्थः । पाञ्चजन्यं तन्नामकं शङ्खं पूरयन् । प्रावृडादौ वर्षकालादौ पूर्णचन्द्रस्योद्गारी उद्गमनशीलः । अम्बुदो मेघ इव रेजे । 'राजृ दीप्तौ' लिट् । दिदीपे । पूर्णोपमालङ्कारः । स्थानीयमित्याद्या चतुर्दशश्लोकी शालिनीनामकवृत्तबद्धा । तथाच वृत्तरत्नाकरे– शालिन्युक्ताम्तौ तगौ गोऽब्धिलोकैः' इति तल्लक्षणं मगणतगणौ तगणो गुरू इत्यर्थः ।।१३।।

**निर्यन्नूर्ध्वाण्डोपलास्फालदार्ढ्या-**
**दागच्छन्त्या स्वप्रतिध्वानवृत्त्या ।**
**शब्दः सद्यस्सानुगस्तन्मुखोत्थः**
**पृथ्वीं भित्वा सप्त चाष्टाशु लोकान् ।। १४ ।।**

---
१. 'प्रत्याख्यातुं' इति पाठान्तरम् ।

**निर्यन्निति** ।। तन्मुखोत्थस्य श्रीकृष्णस्य मुखादुत्तिष्ठतीति तन्मुखोत्थः 'सुपि स्थ' इति कप्रत्ययः । 'उदःस्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णम् । निर्यन् बहिर्निस्सरन् ऊर्ध्वो योऽयमण्डोपलः पाषाणः । 'पाषाणप्रस्तर-ग्रावोपलाश्मानः शिलादृषद्' इत्यमरः । स एव दृढ इत्यर्थः । तस्या-स्फालः सङ्घट्टनं तस्य दार्ढ्यात् गाढभावात् । आगच्छन्त्या प्रत्यावर्तमानया प्रितिध्वानवृत्त्या स्वस्य शब्दस्य प्रतिध्वानः प्रतिशब्दस्तस्य वृत्तिर्वर्तनं तया । अनुगया सहितः सानुगः शब्दः पाञ्चजन्यनिनदः सद्यस्तत्क्षणे पृथ्वीं भित्वा सप्त सप्तसङ्ख्याकान् लोकांश्च अतलवितलसुतलरसातल-महातलतलातलपातालाख्यान् । आष्ट अश व्याप्तौ लुङ् आशिष्ट । 'स्व-रतिसूतिसूयति धूञूदितोवे'ति किलिपतेट्त्वात्तदभावे रूपमाष्टेति व्याप्तवानित्यर्थः । अत्र पर्यायोऽलङ्कारः । 'पर्यायो यदि पर्यायेणैक-स्यानेकसंश्रयः । पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनप्रभा' इति सोदाहरणं तल्लक्षणाभिधानात् ।। १४ ।।

**सङ्ख्यारम्भोद्योगमुद्योतयन्तः शङ्खारावैर्गोपुरद्वारभूमौ ।**
**प्रेङ्खन्तीभिः स्वर्विमानावलीभिस्तं खे द्रष्टुं खेचरा योगमीयुः ।। १५ ।।**

**सङ्ख्येति** ।। खेचरा देवाः 'तत्पुरुषे कृती'त्यलुक् । गोपुरस्य पुर-द्वारस्य 'पुरद्वारं तु गोपुरम्' इत्यमरः । तस्य यद्द्वारं तस्य भूमौ गोपुरद्वारेति करिकलभन्यायेन व्याख्येयम् । तत्र श्रुतैरिति शेषः । शङ्खस्य पाञ्चजन्यस्य रावैः । आङ्पूर्वाद्रौतेर्घञ् । ध्वनिभिः सङ्ख्यस्य युद्धस्य 'कदनप्रदन-क्रन्दनसङ्ख्यसमीकानि युद्धवाचीनी'ति शब्दरत्नाकरः । तस्य योऽयमारम्भ-स्तस्योद्योगमुद्योतयन्तः प्रकाशयन्तः प्रेङ्खन्तीभिरागच्छन्तीभिः । स्वर्विमानानां

स्वर्गरथादीनाम् । आवलीभिः पङ्क्तिभिः । तं श्रीकृष्णं द्रष्टुं योगं सङ्गतिं युद्धरसास्वादनानुकूलं मेलनमीयुः । 'इण् गतौ' लिट् ।। १५ ।।

**तद्धोषान्तर्घट्टनापूर्णितायां सत्यां दैत्याः कर्णदर्यां नगर्याः ।**
**रक्षायुक्ताः सर्वतः पर्वताभास्तत्रोद्बुद्धा जृम्भमाणाः**
**कथञ्चित् ।। १६ ।।**

**तदिति** ।। नगर्याः सर्वतस्सर्वत्र रक्षायां रक्षणे युक्ता नियुक्ताः । पर्वताभाः पर्वताकारा दैत्याः । कर्ण एव दरी कन्दरः तस्यां कर्णदर्यां 'दरी तु कन्दरो वास्त्री'त्यमरः । तद्धोषान्तर्घट्टनाघूर्णितायां तस्य शङ्खस्य घोष आरावः तस्यान्तर्घट्टनेन अन्तस्सम्बन्धेन आघूर्णितायां भ्रान्तायां सत्यां तत्र नगरे जृम्भमाणाः सन्तः कथञ्चिदुद्बुद्धा । बुध्यतेः कर्तरि क्तः । उद्बुद्धवन्तः ।। १६ ।।

**अभ्युत्थानैः पोथयन्तो महाभ्राण्यभ्रादभ्रा उन्मुखा दिङ्मुखानि ।**
**भास्वद्विद्युद्भीषणोन्मेषणानां पर्यावृत्त्या रञ्जयाश्चक्रुरक्ष्णाम्**
**।। १७ ।।**

**अभ्युत्थानैरिति** ।। उन्मुखा उदग्रमुखा अभ्रादभ्रा अभ्राणि मेघा इव अदभ्राः स्थूलाः । 'अथ दभ्रः स्यात् । अल्पे शिशौ ह्रस्वे च' इति केशवः । दैत्या इति विशेष्यपदानुवृत्तिः । पुररक्षकाः । महान्त्यभ्राणि मेघान् । अभ्युत्थानैः पोथयन्तः । पुथ हिंसायामित्यस्य शतरि रूपम् । विलोडयन्तः । दिङ्मुखानि दिग्भागान् । भास्वान् सूर्यो विद्युतस्तटितस्तद्वद् भीषणानि भयङ्कराणि उन्मेषणानि उन्मीलनानि येषां तानि भास्वद्विद्युद्भीषणोन्मेषणानि केषाञ्चिन्नयनानि सूर्यसमानि । परेषां विद्युत्समानीति

तथोक्तानि तेषामक्ष्णां नेत्राणाम् । पर्यावृत्त्या परिवर्तनेन भ्रमणेन रञ्जयाञ्चक्रुः रञ्ज रागे हेतुमण्णिजन्ताल्लिट् । रक्तानि चक्रुः । अत्र नेत्ररक्तिम्ना दिशां रागासम्बन्धेऽपि तत्सम्बन्धकल्पनात्सम्बन्धातिशयोक्तिरलङ्कारः ।।१७।।

**नादः कोऽयं ह्रेषयन्[1] भीमनादं**
**संवर्तादौ वारिदं दुर्निवारम् ।**
**यत्रारब्धे नित्यविश्वस्तसुप्तं चित्तं**
**वृत्तं नः पदं सम्भ्रमस्य ।। १८ ।।**

**नाद इति** ।। संवर्तस्य प्रलयस्यादौ आरम्भकाले संवर्तादौ । 'संवर्तः प्रलयः कल्प' इत्यमरः । दुर्निवारं वारयतेः 'ईषद्दुस्सुषुकृच्छ्राकृच्छ्रार्थेषु' इति खल् । अवारणीयम् । भीमो भयङ्करो नादो यस्य तं भीमनादं 'भीमं भयानकम् । भयङ्करं प्रतिभयम्' इत्यमरः । वारिदं मेघं ह्रेषयन् ह्रेषावन्तं शब्दवन्तं कुर्वन् हेषृह्रेषृ अव्यक्ते शब्द इत्यतो हेतुमण्णिच् । ह्रेषते स्वनतीति मेघस्तं प्रेरयतीति ह्रेषयन् । भीषयन्निति पाठः सुगमः । नादः कोऽयमिति विस्मयात् यत्र यस्मिन्नारब्धे उपक्रान्ते नित्यं विश्वस्तं विश्वासं प्राप्तं सुप्तं भावे निष्ठा । स्वापो यस्य तत् । नश्चित्तं मनः । सम्भ्रमस्यानवस्थानस्य भयस्य वा 'सम्भ्रमो भये । अत्यादरावेगयोस्स्यात्' इति दर्पणः । पदं स्थानं वृत्तं कर्तरि क्तः । अवर्तत ।। १८ ।।

**इत्यालोला रक्षितारोऽतिरूक्षा लोकालोकास्फालनोद्भूतशङ्काः ।**
**शुम्भैरङ्गैरुच्छ्वसद्रोमरौद्रैरध्वानं तं दुद्रुवुर्यत्र शार्ङ्गी ।। १९ ।।**

**इतीति** ।। इत्येवंप्रकारेण । आलोला अतिचलाः 'लोलश्चलसतृष्णयोः'

1. 'भीषयन्' इति पाठान्तरम् ।

इत्यमरः । रूक्षाः । रूक्ष पारुष्य इत्यतः पचाद्यच् । परुषाः प्रेमरहिता वा । लोकालोकस्य चक्रवालपर्वतस्य आस्फालनेन प्रतिघट्टनेन उद्भूता उत्पन्ना शङ्का भयं वितर्को वा येषां ते तथोक्ताः । 'अथ शङ्का स्यात् वितर्के साध्वसेऽपि च' इति कविदर्पणः । रक्षितारः पुरस्य रक्षकाः । उच्छ्वसद्रोमरौद्रैरुच्छ्वसन्ति विकसन्ति यानि रोमाणि तै रौद्रैरुग्रैः 'रौद्रं तूग्रम्' इत्यमरः । तुङ्गैरुन्नतैरङ्गैः पादाद्यवयवैर्लक्षितास्सन्तः । यत्राध्वनि शार्ङ्गी शार्ङ्गधन्वा श्रीकृष्णस्तमध्वानं मार्गं दुद्रुवुः । द्रु गतौ लिट् प्राप्तवन्तः । वृत्त्यनुप्रासच्छेकानुप्रासौ शब्दालङ्कारौ संसृष्टौ ।। १९ ।।

**शूलैरेके मुद्गरैः केचिदन्ये खड्गैरुग्रैर्भिण्डिवालैः प्रचण्डाः ।**
**मुष्ट्यामृष्टैः पट्टसैस्साट्टहासा वृष्णीन्द्रांस्ते जघ्निवांसः समन्तात्**
**।। २० ।।**

**शूलैरिति** ।। एके भटाः शूलैः केचित्तु मुद्गरैर्द्रुघणैः । 'द्रुघणे मुद्गरघनौ' इति यादवः । केचित्तूग्रै रौद्रैर्भिण्डिवालैस्सृगैः । 'भिण्डिवालः क्षेपणीयः सृगोदीर्घमहापल' इति यादवः । मुष्ट्यामृष्टैर्मुष्टिना आमृष्टाः परिमृष्टा गृहीता इत्यर्थः । तैः पट्टसैः 'पट्टसो लोहदण्डो यस्तीक्ष्णधारः क्षुरोपम' इति यादवाभिहितलोहदण्डास्तैरायुधैः । साट्टहासा अट्टहासेन सहिताः 'निकुञ्चितशिरोगात्रमट्टहासो महाहस' इति वैजयन्ती । प्रचण्डाः प्रतापिनः 'प्रतापिनि प्रचण्डोऽस्त्री'ति केशवः । ते बाणभटास्समन्तात् सर्वतो वृष्णीन्द्रान् बलभद्रश्रीकृष्णप्रद्युम्नान् जघ्निवांसो हिंसितवन्तः । प्रहृतवन्त इत्यर्थः । हनहिंसागत्योरित्यतो लिटःक्वसुः । लिटि द्वित्वं हलादिशेषः। 'कुहोश्चुः' । 'अभ्यासाच्च' इति कुत्वम् । 'गमहन–' इत्युपधालोपः । सति चैवं जघ्निवांस इति रूपम् । यद्यपि 'छन्दसि लिट् । लिटः

कानज्वाक्कसुश्च' इति छन्दस्येव क्वसुकानचौ मुनित्रयाभिमतौ भातः । तथापि कवयो बहुलं प्रयुञ्जते भाषायामपि । 'तं तस्थिवांसं नगरोपकण्ठे' 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' प्रातः पौरस्त्यपृथ्वीधरगुरुशिखरं जग्मुषस्तिग्मभानोः' इत्यादाविति वैय्याकरणाः कविप्रयोगमपि प्रयोगशरणं वदन्ति ॥ २० ॥

**तत्रामीषां विद्युदाध्माततीव्राः शस्त्रापातान्नाभिभूत्यै बभूवुः ।**
**सामग्रीभिः साधनानामपीद्धा दैवोद्रिक्ते वाभिचारप्रयोगाः ॥ २१ ॥**

**तत्रेति** ॥ तत्र युद्धरङ्गे अमीषां वृष्णीन्द्राणां कृष्णबलभद्रप्रद्युम्नानां विद्युदाध्मातानीव अशनिशब्दा इव तीव्राः कटवः अशनिशब्दा निष्ठुरा इत्यर्थः । यदि धर्मेण चरत्सु विद्युदापतेदित्यत्र प्रवर्ग्यप्रायश्चित्तप्रकरणे विद्युच्छब्दोऽयमशनिवाचक इति व्याख्यातम् । शस्त्रापाता बाणाद्यायुधागमनानि साधनानां सामग्रीभिः । समग्राणां भावः सामग्र्यमित्यत्र 'हलस्तद्धितस्य' इति यकारलोपे ष्यञः षित्त्वान्ङीषि सामग्रीशब्दः । ताभिरिद्धा दीप्ता अपि दैवेनोद्रिक्तेऽधिकेऽभिमुखदैवे पुरुषेऽभिचारप्रयोगा मरणप्रयोगा वा इव । अभिभूत्यै अभिभवाय तिरस्काराय न बभूवुः । उपमालङ्कारः ॥ २१ ॥

**अत्यायत्तैस्तार्क्ष्यहुङ्काररंहःप्रत्यादिष्टैः स्वप्रहाराभिवेधात् ।**
**ग्रासापेक्षावीक्षितो वारिजाक्षश्चापे रोपान् रुग्मपुङ्खानयुङ्क्त ॥ २२ ॥**

**अत्यायत्तैरिति** ॥ स्वप्रहाराभिवेधात् स्वेषां प्रहारा आयुधानि तेषामभिवेधः प्रत्यसनं तस्मात् । स्वायुधानामकिञ्चित्करत्वादितीयमुक्तिः ।

ताक्ष्र्यहुङ्काररंहः प्रत्यादिष्टैः तार्क्ष्यस्य गरुडस्य यो हुङ्कारस्तस्य रंहो वेगस्तेन प्रत्यादिष्टा निराकृतास्तैः । 'प्रत्यादिष्टो निरस्तः स्यात्' इत्यमरः । अत्यायत्तैः अत्यन्तप्रयत्नयुक्तैः सन्नद्धैः । ग्रासापेक्षावीक्षितः ग्रासस्य कबलस्यापेक्षया वीक्षितोऽवलोकितो वारिजाक्षः श्रीकृष्णः चापे शार्ङ्गे रुग्मपुङ्खान् स्वर्णखचिताः पुङ्खा बाणावयवविशेषाः येषां ते तथोक्तास्तान् 'पुङ्खः श्येने शरादौ च' इति नानार्थरत्नमाला । रोपान् बाणान् 'कलम्ब-मार्गणशराः पत्री रोप इषुर्द्वयोः' इत्यमरः । अयुङ्क्त 'युजिर् योगे' लङ् प्रयुक्तानकरोत् ॥ २२ ॥

**विष्णोरस्त्रप्रस्तरो विश्वयोनेरासीन्नासौ सङ्गरोपक्रमाय ।**
**जिह्वास्फालस्फोटिताङ्गे पतङ्गे नह्याटोपः सावकाशः**
**कृशानोः ॥ २३ ॥**

**विष्णोरिति** ॥ विश्वस्य प्रपञ्चस्य योनिः कारणं तस्य विष्णोः कृष्णस्य । असौ चापगलितोऽस्त्रप्रस्तरः । प्रकर्षेण स्तृणातीति पचाद्यच् अस्त्ररूपश्चासौ प्रस्तरश्चास्त्रप्रस्तरः । अनेन कर्तरि पचाद्यजूत्वादनेन 'प्रस्त्रोऽयज्ञ' इति अयज्ञविषये घञनुशासनात् प्रस्तार इति स्यादिति चोद्यं परिहृतम् । घञनुशासने भावे 'अकर्तरि च कारके' इति विवक्षितत्वा-त्कर्तरि चात्राजूत्वादिति । उक्तं चैवमेवामरव्याख्याने 'पाषाणप्रस्तर-ग्रावे'त्यत्र । सङ्गरस्याहवस्य उपक्रम आरम्भः तस्मै तादर्थ्य इति वक्तव्यादत्र चतुर्थी । नासीत् । तार्क्ष्यहुङ्काररंहः प्रत्यादिष्टतया लक्ष्याभावात् चापे रोपारोपणं युद्धारम्भमपि न द्योतयितुं निपुणमासीदिति भावः । अमुमर्थमर्थान्तरन्यासेनाह– **जिह्वेति** ॥ जिह्वाया ज्वालायाः । 'जिह्वा तु वाचि च ज्वालायां रसनायां च' इति केशवः । आस्फालनमावेधः

सङ्घट्टनं तेन स्फोटितानि विदारितान्यङ्गानि यस्य सः । जिह्वास्फाल-स्फोटिताङ्गस्तस्मिन् पतङ्गे शलभे 'पतङ्गः शलभे शालौ खगे कमलबान्धवे' इति शब्दरत्नाकरः । कृशानोरनलस्य 'कृशानुः पावकोऽनलः' इत्यमरः । आटोपः संरम्भः 'आटोपो वेगसंरम्भसम्भ्रमा' इति यादवः । सावकाशः अवकाशसहितः । स लक्ष्यो नहीत्यर्थान्तरन्यासोऽलङ्कारः ।। २३ ।।

**निर्वास्यामूनैच्छदच्छेद्यशक्तिः सप्रद्युम्नः सीरिणा चानुयातः ।**
**कर्तुं पश्चान्निष्कृपं विक्रमिष्यन्नान्दीपूजां देवकीनन्दनोऽत्र**
**।। २४ ।।**

**निर्वास्येति** ।। अच्छेद्या शक्तिः सामर्थ्यं यस्य सोऽच्छेद्यशक्तिः । प्रद्युम्नेन सहितः सप्रद्युम्नः । सीरिणा बलभद्रेणानुयातश्च । देवकीनन्दनः नन्दतेः नन्द्यादिलक्षणः कर्तरि ल्युः । श्रीकृष्णः अत्र पुर्याम् अमून् बाणभटान् निर्वास्य निष्कास्य । पश्चान्निष्कृपं निर्गता कृपा दया यस्मा-त्कर्मणस्तद्यथा भवति तथा । विक्रमिष्यन् पराक्रमं करिष्यन् नान्दीपूजां कल्याणवृद्ध्यर्थं नान्दीनामकदेवतापूजनम् । 'नान्दी कल्याणवृद्धो स्यान्नाट्यारम्भेऽर्चनान्तरे' इति केशवः । कर्तुमैच्छत् । 'इषु इच्छायां' लङ् 'इषुगमियमां छः' ।। २४ ।।

**पेतुस्तस्यामुद्गलद्भीमदंष्ट्रैर्वक्त्रैर्व्यात्तैरात्तशस्त्रैश्च हस्तैः ।**
**छिन्ना मर्मण्युल्बणैर्बाणवेगैरुद्गीर्णास्रा दैत्यभर्तुर्भुजिष्याः**
**।। २५ ।।**

**पेतुरिति** ।। तस्यां शोणितनगर्यामुद्गलन्त्योऽवस्रंसन्त्यो भीमा भयङ्कर्यो दंष्ट्रा येषां तानि उद्गलद्भीमदंष्ट्राणि तैः । व्यात्तैः व्याङ्पूर्वाद्ददातेः कर्मणि

क्तप्रत्यये 'अच उपसर्गात्तः' इति ददातेराकारस्य तकारे चर्त्वे भिसि च व्यात्तैरिति रूपम् । विवृतैरित्यर्थः । वक्त्रैर्मुखैः । आत्तान्युपात्तानि शस्त्राणि आयुधानि यैस्ते आत्तशस्त्रास्तैः । 'आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्थियाम्' इत्यमरः । हस्तैरुपलक्षिताः । दैत्यानां भर्तुर्बाणस्य पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः । दैत्यभर्तुर्भुजिष्याः किङ्कराः 'नियोज्यकिङ्करप्रेष्य-भुजिष्यपरिचारकाः' इत्यमरः । उल्बणैः प्रव्यक्तैः स्फुटं 'प्रव्यक्तमुल्बणम्' इत्यमरः । बाणवेगैः । मर्मणि जीवावस्थानप्रदेशे 'जीवस्थानं भवेन्मर्म' इति हलायुधः । छिन्ना द्विधाकृता अत एव उद्गीर्णानि निर्गतानि अस्राणि रुधिराणि येषां ते उद्गीर्णास्राः सन्तः 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः । पेतुः 'पत्लृ गतौ' लिट् पतितवन्तः । गलद्दंष्ट्रवक्त्रविवरणादे-र्वर्णनात्स्वभावोक्तिरलङ्कारः ।। २५ ।।

**केचिद्याताः प्राणमात्रावशेषाः स्रस्ता गात्रैः प्रस्रवन्मूत्रदिग्धैः ।**
**आर्तारावव्याप्तविश्वादिगन्तान्युद्धारम्भोद्घोषणायैव विष्णोः**
**।। २६ ।।**

**केचिदिति** ।। प्रस्रवन्मूत्रदिग्धैः प्रस्रवत् क्षरच्च तन्मूत्रं च प्रस्रवन्मूत्रं तेन दिग्धानि लिप्तानि तैः । 'दिग्धस्तु विषलिप्तेषौ त्रिषु लिप्तप्रवृद्धयोः' इति केशवः । गात्रैः शरीरैः स्रस्ता गलिताः । प्राणमात्रं प्राणा एवावशेषो येषां ते प्राणमात्रावशेषाः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । अत एवार्तारावः आर्तः सन्न आरावः शब्दस्तेन व्याप्तं विश्वं जगद्येषां ते आर्तारावव्याप्तविश्वाः । 'न बहुव्रीहौ' इति सर्वनामत्वाभावः । केचिद्भुजिष्याः । दिगन्तान् दिग्भागान् । विष्णोः कृष्णस्य युद्धारम्भस्योद्घोषणा एव प्रकाशं कर्तुमिवेति फलोत्प्रेक्षालङ्कारः । याताः कर्तरि क्तः । गताः ।। २६ ।।

**अथाग्रतो ग्रसितुमिवोग्रविग्रहः परिग्रहस्त्रिपुररिपोः कृताग्रहः ।**
**समग्ररुग्ग्रह इव राहुरग्रणीर्जगद्द्रुहामिह ददृशे महागदः ।।२७।।**

**अथेति** ।। अथ पुरपालककिङ्करपलायनानन्तरम् । त्रिपुररिपोः त्रिपुरशब्दो व्याख्यातस्त्रिपुरद्विषेत्यत्र । तस्य शत्रोर्महादेवस्य परिग्रहः परिजनः 'परिग्रहः परिजने पत्न्यामाधानशाययोः' इति रत्नाकरः । उग्रविग्रहः उग्रो रौद्रो विग्रहः शरीरं यस्य स तथा । 'उग्रः स्यात्कालशेये न रौद्रे त्रिः' इति केशवः । कृताग्रहः कृत आग्रहः स्पर्धा येन स तथा । 'आग्रहः स्यात्स्वीकरणे विरोधस्पर्धयोरपि' इति दर्पणः । जगद्द्रुहां भुवनद्रोहिणामग्रणीराद्यः समग्ररुक् समग्रा सम्पूर्णा रुक् कान्तिर्यस्य स चासौ ग्रहो राकाचन्द्रश्च तस्मिन् राहुरिव इह पुरे । अग्रतः पुरः महागदः महाज्वरः 'उपतापेरागव्याधिगदामया' इत्यमरः । ग्रसितुमागत इव ददृशे । कर्मणि लिट् । दृष्टः । फलोत्प्रेक्षालङ्कारः । उपमा स्पष्टा । वृत्त्यनुप्रासः शब्दालङ्कारश्च । अथाग्रत इत्याद्यायां द्वादशश्लोक्यां रुचिरानामकं वृत्तम् । तदाह सूत्रे 'जभसा जगौ रुचिराब्धिग्रहयोः' इति तदर्थे वृत्तरत्नाकरे चतुर्ग्रहैरिह रुचिरा ज्भौ स्जौ ग' इति वर्णितः ।। २७ ।।

**भुजैस्त्रिभिस्सरभयभोगिभैरवैः फणप्रभाग्रतलविलग्नभस्मभिः ।**
**रुजां पतिः प्रहरणमक्षिपत्स्वकं विषोद्भटं भुवनभृतो**
**भुजान्तरे ।। २८ ।।**

**भुजैरिति** ।। रुजां पतिर्ज्वरः । फणस्य प्रभेव प्रभा यस्य तत्फणप्रभं तच्च तदग्रतलं च तस्मिन् विलग्नं विलीनं भस्म येषां तानि फणप्रभाग्रतलविलग्नभस्मानि तैः । सरभसाः सवेगाश्च ते भोगिनः सर्पाश्च त

इव भैरवा भयङ्कराः सरभसभोगिभैरवास्तैर्भीषणं दारुणम् । 'घोरं भैरवं च भयङ्करम्' इति रत्नाकरः । त्रिभिर्भुजैर्ज्वरस्य त्रयो भुजा इति पुराणप्रसिद्धिः । स्वकं स्वकीयं विषोद्भटं विषोद्धतम् 'उल्बणस्तूद्धतस्तस्मिन्नुद्भटश्चोत्कटश्च सः' त्रिकाण्डीशेषः । प्रहरणमायुधं भस्म भुवनभृतः शेषस्य बलभद्रस्य भुजान्तरे भुजयोरन्तरालेऽक्षिपत् क्षिप प्रेरणे पातितवानित्यर्थः । ज्वरस्य भस्मायुधत्वात्स्वायुधं भस्म फणच्छायेन करतलेन बलभद्रे प्रायुङ्क्तेति भावः ।। २८ ।।

**अमुष्य तद्भसितरजांस्युरस्थले**
**परिस्फुरत्स्फटिकशिलातलत्विषि ।**
**विरेजिरे रजतगिरेर्यथा तटे**
**विसर्पिभिर्घनतुहिनानि रेणुभिः ।। २९ ।।**

**अमुष्येति** ।। अमुष्य बलभद्रस्य परिस्फुरत्स्फटिकशिलातलत्विषि परिस्फुरच्च तत् स्फटिकशिलातलं च तस्य त्विट् कान्तिरिव त्विट् यस्य तस्मिन् उरस्थले । रजतगिरेः कैलासपर्वतस्य तटे विसर्पिभी रेणुभिर्घनतुहिनानि यथा सान्द्रमहिमानीवेत्युपमा । तद्भसितरजांसि ज्वरक्षिप्तभस्मपांसवः । 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रज' इत्यमरः । विरेजिरे 'राजृ दीप्तौ' लिट् । दीप्तवन्ति ।। २९ ।।

**विषादवन्मनसि मुखे विशोषवद्विशेषतो**
**मुषितबलं बलस्य तत् ।**
**निषेदुषः पतगपतौ कषायितं**
**निमेषतः प्लुषितमिवाभवद्वपुः ।। ३० ।।**

**विषादवदिति** ।। मनसि विषादोऽवसन्नता तद्वद्विषादवत् । मुखे विशोषो विशोषणं तद्वत् विशोषवत् । 'विशेषतो विशेषाकारेण मुषितमपहृतं बलं शक्तिर्यस्य तन्मुषितबलम् । विहगपतौ गरुडे निषेदुषः 'भाषायां सदवसश्रुव' इति लिटः क्वसुः क्वसोः सम्प्रसारणं च । कषायितं कषायशब्दादितच् । सञ्जातकषायं क्वाथितमित्यर्थः । 'कषायस्तु रसे रागे क्वाथनिर्यासयोरपि' इति कविदर्पणः । 'तज्ज्वरेणारोपितं वपुः शरीरं निमेषतोऽष्टत्रुटिपरिमितकालतः 'अष्टौ तास्तु निमेष' इति शब्दरत्नाकरः । प्लुषितमिव दग्धमिवाभवत् 'प्लुष दाह' इति दैवादिकस्य निष्ठाया मिटि रूपम् । 'प्रुष्टप्लुष्टोषिता दग्ध' इत्यमरे तु भौवादिकस्य प्लुष दाह इत्यस्य उदित्वेन उदितो वेति क्त्वायां वेट्त्वात् यस्य विभाषेति इण्निषेधात् प्लुष्टं दग्धमिति पठितमिति तद्व्याख्यातारः । केचित्तु प्लुष दाह इत्यस्मादेव धातोः सम्पदादिलक्षणक्विपि प्लुट् दाहस्तदस्य सञ्जातमितीतच् प्लुषितमिति रूपमित्याहुः । 'अकृशं कृचयोः कृशं विलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे' इत्यत्रेवात्रापि मन आदौ विषादादेर्वर्णनादुल्लेखालङ्कारः । 'एकस्य बहुधोल्लेखेऽप्यसौ विषयभेदतः । गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ।।' इति तल्लक्षणोदाहरणे ।। ३० ।।

**निरीक्ष्य तन्नलिनदलायतेक्षणस्तदङ्गमुद्गिरदिव वह्निविप्लुषः।**
**परिष्वजन्नपि मृदुनास्म पाणिना निरस्यति ज्वररुजमान्तरीं**
**बत ।। ३१ ।।**

**निरीक्ष्येति** ।। नलिनदले इव आयते विशाले ईक्षणे यस्य स नलिनदलायतेक्षणः श्रीकृष्णस्तं बलभद्रं निरीक्ष्य वह्निविप्लुषोऽग्निकणान् उद्गिरद्वमदिव स्थितं तदङ्गं बलशरीरं मृदुना कोमलेन पाणिना परिष्वजन् ।

'अनुदात्तेत्त्वकृतमात्मनेपदमनित्यम्' इति शतृप्रत्ययः । आलिङ्गन् । आन्तरीमपि रुजं व्याधिं 'रुक् तु स्याद्व्याधितोदयोः' इति केशवः । न केवलं बाह्यामित्यपिशब्दः । निरस्यति स्म निरसितवान् 'असु क्षेपणे' लट् । स्मयोगे लिडर्थता । बतेत्याश्चर्ये 'विस्मयामन्त्रणे बत' इत्यमरः । अत्र देहसमालिङ्गनेन करणीयाद्बाह्यतापोपघातादधिकस्यान्तरशापोपशमनस्यापि वर्णनात्प्रहर्षणमलङ्कारः । यदाह– 'वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् । दीपमुद्योतयेद्यावत्तावदभ्युदितोरविः' इति चन्द्रालोके तल्लक्षणोदाहरणे अभिहिते ।। ३१ ।।

**श्रमातुरं किमिति मुखं गुरोरिदं**
**प्रसीद हे त्रिदशगणारिमर्दन ।**
**कनीयसा तव भगवन्मया मृधे**
**विधीयते विरहितदर्पकः सकः ।। ३२ ।।**

**श्रमातुरमिति** ।। त्रिदशगणारिमर्दन त्रिदशगणस्य देवसमूहस्य येऽरयः शत्रवः तेषां मर्दनः संहर्ता तस्य सम्बुद्धिः । गुरोरग्रजस्य तव मुखं किमितीति हेतौ । केन हेतुना श्रमेणातुरं भ्रान्तं श्रमातुरं सकः कुत्सित इत्यर्थे कनूप्रत्ययस्थाने 'अव्ययसर्वनाम्नामकच्प्राक्टेरि'त्यकच्च । कुत्सितः सः मुखे श्रमादिकारी तव कनीयसा अनुजेन मया मृधे युद्धे 'मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम्' इत्यमरः । विरहितदर्पकः विरहितस्त्याजितो दर्पो यस्य स तथा 'शेषाद्विभाषे'ति बहुव्रीहेः कप् । विधीयते क्रियते तत् प्रसीद ततः प्रसन्नो भव । तत्र श्रमातुरस्य प्रसादः समर्थनीय उत्तरार्धवाक्यार्थेन समर्थ्यत इति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।।३२।।

**निवर्तयन्ननुनयवर्त्मनामुना रणादमुं रणनिपुणारिदारणः ।**
**मदोद्धतं मुदितमना गदाधिपं जगाद स स्फुरितगदो गदाग्रजः ॥ ३३ ॥**

**निवर्तयन्निति** ॥ रणे निपुणाः प्रवीणा रणनिपुणाः । 'सप्तमी शौण्डै'-रिति समासः । ते च तेऽरयः शत्रवस्तेषां दारणः पाटयिता । मुदितं सन्तुष्टं मनो यस्यासौ मुदितमनाः । स्फुरिता प्रकाशिता गदा कौमोदकी-नाम्नी यस्यासौ स्फुरितगदः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । गदाग्रजः श्रीकृष्णः 'गदाग्रजो मुञ्जिकेशो दाशार्हो दशरूपभृत्' इत्यमरः । अमुना पूर्वोक्तेनानुनयवर्त्मना अनुनीतिमार्गेण । रणादमुमग्रजं निवर्तयन् सन् । मदेनोद्धतमुत्कटं गदाधिपं गदानां व्याधीनामधिपं ज्वरं 'गदो रुजि । कृष्णस्याप्यनुजे स्त्री तु गदा प्रहरणान्तरे' इति केशवः । तत्र रणनिपुणारि-दारण इति शत्रूणामुद्धतिवर्णनात्प्रत्यनीकालङ्कारः । 'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः । जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ ॥' इति तल्लक्षणोदाहरणाभिधानात् ॥ ३३ ॥

**उपागतोऽस्यभिरुचितेक्षणः स्वयं**
**विधेर्बलादिह खलु लोककण्टक ।**
**समागमश्रुतमहिमातिरेकिणः**
**स्वरूपतश्चिरतरमर्थितस्तव ॥ ३४ ॥**

**उपागत इति** ॥ लोकस्य कण्टकः क्षुद्रशत्रुस्तस्य सम्बुद्धिः लोक-कण्टक । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टक' इत्यमरः । अभिरुचित-मपेक्षितमीक्षणं दर्शनं यस्य स तथा त्वम् । विधेर्नियतेः 'दैवं दिष्टं भागधेयं

भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । बलात्स्वयमात्मना इह समागतोऽसि खलु अनुनये 'निषेधवाक्यालङ्कारे जिज्ञासानुनये खलु' इत्यमरः । 'अस भुवि' लट् । श्रुतस्य महिम्नोऽतिरेकोऽतिशयः सोऽस्यास्तीति श्रुतमहिमातिरेकी तस्य तव स्वरूपतः समागमश्चिरतरं बहोः कालादर्थितः ।।३४।।

**जुगुप्सितं दुरितमयाच्छिरस्त्रयं शरीरतो रहयितुमुद्यतोऽद्य ते ।**
**भुजस्तु मे भवतु तथा महत्फलं भवन्तु भोर्जगति जना निरामयाः ।। ३५ ।।**

**जुगुप्सितमिति** ।। हे लोककण्टकेत्यनुवर्तते । ते तव दुरितमयात् दुरितप्रचुरात् शरीरतः । आद्यादिभ्य इति वक्तव्यत्वात्तसिः । जुगुप्सितं निन्दितं शिरस्त्रयं शिरसां त्रयम् । रहयितुं त्याजयितुं 'रह त्याग' इत्यस्यादन्ततया चुरादौ पठितस्य हेतुमण्णिचि तुमुनि रूपं रहयितुमिति । अद्य मे मम भुजद्वय उद्यतस्तथाशब्दः समुच्चये । 'तथा समुच्चये साम्ये परमार्थाभ्यनुज्ञयोः' इति यादवः । महत्फलं भवतु । किं तदित्यत उक्तं भो लोककण्टक जगति जना निर्गत आमयो येषां ते निरामया भवन्तु । 'भू सत्तायां' लोट् ।। ३५ ।।

**तमीरयन्निति स जघान बाहुना**
**पुरा हतः प्रहरदनिष्टमुष्टिभिः ।**
**स विष्टरश्रवसमथ प्रविष्टवानरिष्ट-**
**कृद्घनघनमुष्टिपिष्टहृत् ।। ३६ ।।**

**तमिति** ।। स श्रीकृष्ण इत्युक्तप्रकारेण तमीरयन् तं प्रतिवदन्निति यावत् । प्रहरन् प्रहर्ता अनिष्टः शत्रुर्ज्वरस्तस्य मुष्टिभिर्मुष्टिघातैः पुराहतः

सन् तं ज्वरं बाहुना जघान । 'हन हिंसागत्योः' लिट् । अथ हननानन्तरं स ज्वरोऽरिष्टमशुभम् 'अरिष्टं तु शुभाशुभे' इत्यमरः । करोतीति कृत् तस्य कर्ता अरिष्टकृत् । घनघनमुष्टिपिष्टहृत् घनो मुद्गर इव घनः कठिनो यो मुष्टिस्तेन पिष्टं चूर्णितं हृद्धृदयं यस्य स तथा । 'घनाः कठिन-सङ्घातमेघकाठिन्यमुद्गरा' इति वैजयन्ती । स सन् ज्वरो विष्टरश्रवसं कृष्णं 'विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवा' इत्यमरः । प्रविष्टवान् । उपमावृत्त्यनुप्रासयोः संसृष्टिः ।। ३६ ।।

**अलक्षयन् क्षणिकसलक्षणं बहिर्निराकुलः**
**कलहचलो न च स्खलन् ।**
**निमीलयन् भृशमधिकोष्मणान्तरं**
**निदानवेद्यमनुत माधवो ज्वरम् ।। ३७ ।।**

**अलक्षयन्निति** ।। माधवो माया लक्ष्म्या धवः पतिः श्रीकृष्णः । क्षणिकसलक्षणं क्षणिकं क्षणमात्रावस्थायि तेन समानं लक्षणं यस्य स क्षणिकसलक्षणस्तम् । 'स्त्रियां तु क्षणिका ज्ञेया विद्युति क्षणवस्तु यत् । तत्र त्रिःक्षणमात्रावस्थायिवस्तुनि च ।।' इति केशवः । ज्वरं बहिरलक्षयन् स्वार्थे णिच् । अपश्यन्नपि निराकुलोऽव्यग्रः । अव्यग्रतां व्यनक्ति न कलहेन चलो न च स्खलन्निति । दृशं नयनं भीलयन् अधिकेनोष्मणा उष्णेन अधिक्रोष्मणा । 'ऊष्मा ग्रीष्मोष्मबाष्पेषु' इति कविदर्पणः । हेतौ तृतीया । निदानवेदी आदिकारणं जानन् आन्तरमन्तर्गतममनुत 'मनु अवबोधने' लङ् अवबुद्धवान् ।। ३७ ।।

**रुजावहं जठरगतं हरज्वरं**
**गरोज्ज्वलं जितमभितः सुदुर्जरम् ।**
**महाज्वरं जरयितुमोजसा निजं**
**ससर्ज सज्वलनमिवार्जुनप्रियः ।। ३८ ।।**

**रुजावहमिति** ।। अर्जुनस्य प्रियोऽर्जुनप्रियः । अर्जुनः प्रियो यस्य स इति वा स श्रीकृष्णः रुजावहं रोगप्रापकं ज्वरस्य सर्वव्याधिनिदानत्वादिति भावः । 'व्याधिरामय आतङ्को गदो रोगो रुजा च रुक्' इति शब्दरत्नाकरः । जठरमुदरं गतं प्रविष्टं जठरगतं 'द्वितीयाश्रिते–'ति समासः । गरोज्ज्वलं गरो विषमिवोज्ज्वलो दीप्तो गरोज्ज्वलस्तम् । 'गरस्तु नृलिङ्गकः । ऋषिभेदे निगरणे विषे च' इति केशवः । अभितोऽभिमुखं जितं पराजयं प्राप्तम् । अन्तस्सुदुर्जरं सुतरां कृच्छ्रेण जरयितुमर्हम् । महाज्वरं महान्तं ज्वरं शैवज्वरम् । ओजसा बलेन जरयितुं निजं ज्वरं वैष्णवं ज्वरं ज्वलनमिव वह्निमिव । ससर्ज 'सृज विसर्गे' लिट् उत्पादितवान् ।। ३८ ।।

**अथ चञ्चरीकनिकराञ्चितश्रियः**
**स्फुटितश्रियः पतिशरीरवारिदात् ।**
**ददृशे झडित्यशनिपातशङ्कया**
**ज्वरवीर एष निचकर्ष चापरम् ।। ३९ ।।**

**अथेति** ।। चञ्चरीकनिकराञ्चितश्रियः चञ्चरीका भृङ्गास्तेषां निकरस्य समूहस्य अञ्चिता पूजिता श्रीः कान्तिरिव श्रीर्यस्य स तथा तस्य श्रियः पतेः कृष्णस्य 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । 'श्रियः पतिः श्रीपतिः स्यात्' इति द्विरूपकोशः । शरीरमेव वारिदो मेघस्तस्मात् स्फुटितः

प्रव्यक्त उद्गत एष ज्वरवीरो ज्वरेषु वीरः शूरः । 'सप्तमी'ति योगविभागात्समासः । ज्वरं वीरयते विक्रमत इति कर्मण्यणि वा ज्वरवीर इति रूपम् । तेन 'पूर्वापरप्रथमजघन्यसमानमध्यमध्यमवीराश्च' इति वीरशब्दः 'प्रथमानिर्दिष्ट इति पूर्वं प्रयोज्य इति पर्यनुयोगो निरवकाशः। सामानाधिकरण्यस्यात्रानभिमतेः । अशनिपातशङ्कया अशनिपातस्य शङ्कया वितर्केण । अशनिरापतति किमित्युत्प्रेक्षा । 'शङ्का वितर्कभययोः' इत्यमरः । ददृशे कर्मणि लिट् । अपरं प्रत्यर्थिभूतं शैवज्वरं विचकर्ष 'कृष विलेखने' कर्तरि लिट् । अवकृष्टवान् । शरीरवारिदादित्यत्र रूपकमलङ्कारः । मञ्जुभाषिणीनामकं वृत्तं 'सजसाजगौ भवति मञ्जुभाषिणी'ति वृत्तरत्नाकरः ।।३९।।

**दृशि गोचरौ च जगतोऽभिमतौ**
**कृतनिश्चयौ हरिमहेश्वरयोः ।**
**गदपुङ्गवौ गगनसङ्गिशिखौ**
**समवेयतुः समुदयाय तदा ।। ४० ।।**

**दृशीति** ।। तदा विकर्षसमये । हरिमहेश्वरयोरभिमतौ 'क्तस्य च वर्तमान' इति षष्ठी । जगतो दृशि दृष्टौ गोचरौ द्रष्टृजननयनविषयावित्यर्थः । समुदयाय समीचीनशुभप्राप्त्यै 'उदयः पूर्वशैले स्यादुन्नतावुद्गतावपि । आविर्भावे शुभप्राप्तौ' इति कविदर्पणः । कृतनिश्चयौ आपादिताध्यवसायौ । गदपुङ्गवौ रोगाधिपौ गगनसङ्गिशिखौ गगनेऽन्तरिक्षे सङ्गिन्यौ शिखे मूर्धानौ ययोस्तौ तथा । 'शिखा तु स्त्री शिफा धाम घृणि ज्वालासु मूर्ध्नि च' इति केशवः । समवेयतुः समवपूर्वादिण्गताविति धातोर्लिट् । सङ्गतवन्तौ । गगनसङ्गिशिखाविति सम्बन्धातिशयोक्तिरलङ्कारः । प्रमिताक्षरानामकं वृत्तं 'प्रमिताक्षरा सजससैरुदिता' इति हि वृत्तरत्नाकरः ।। ४० ।।

**उपगूहने नखविलेखनोन्मुखौ क्षणचुम्बनावधरदंशनिर्दयौ ।**
**भुजमध्यघट्टनपटू च मुष्टिभिः परिवर्तितेक्षणनिरीक्षणौ**
**मिथः ॥ ४१ ॥**

**उपगूहन इति** ॥ उपगूहने आलिङ्गने प्रसक्त इति शेषः । क्षणचुम्बनौ क्षणे चुम्बनं ययोस्तौ 'सप्तमी विशेषणे बहुव्रीहौ' इति ज्ञापकाद्व्यधिकरणोऽपि बहुव्रीहिरिष्यते । अनन्तरं नखविलेखनोन्मुखौ नखानां विलेखने उन्मुखौ उद्युक्तौ ततः । अधरदंशनिर्दयौ निर्गता दया याभ्यां तौ निर्दयौ । उपसर्जनह्रस्वता । अधरयोरोष्ठयोर्दंशे दशने निर्दयौ मुष्टिभिः भुजमध्ययोर्घट्टने परस्पराभिघाते पटू समर्थौ । 'मिथोऽन्योन्यं रहस्यपि' इत्यभिधानम् । परिवर्तितानीक्षणयोर्नयनयोर्निरीक्षणान्यवलोकनानि ययोस्तौ परिवर्तितेक्षणनिरीक्षणौ । इमौ शैववैष्णवज्वरौ प्रमददम्पती इव विरजेतु इति भाविक्रियान्वयः ॥ ४१ ॥

**विपरीतकर्मचटुलावुपर्यधौ लुठनालसावपि विरामनिस्पृहौ ।**
**कलहप्रियौ क्लमजलाविलाविमौ प्रविरेजतुः प्रमददम्पती**
**इव ॥ ४२ ॥**

**विपरीतेति** ॥ विपरीते रात्रौ करणीये सुरतादिकर्मणि चटुलौ कुशलौ 'स तया शुशुभे श्रीमान् लतया कण्ठसक्तया । विपरीत इवाकाशे सूर्यो नक्षत्रमालये'ति वाल्मीकिरामायण इव 'परीतं तु दिवा प्रोक्तं विपरीतं तु शर्वरी'ति तद्व्याख्यानोक्तरीत्या विपरीतशब्दो रात्रिवचनस्तथा च कविदर्पणः– 'विपरीतं तु निश्यपि । अर्थस्वभावकौटिल्येऽपी'ति । ज्वरपक्षे कुटिलव्यापारनिष्णातावित्यर्थः । उपर्यधो लुठनेन अलसौ मन्दौ ।

पुरुषायिते उपर्यधोभावेनालस्यशालिनावपि विरामनिस्पृहौ विरामे विरतौ निर्गता स्पृहा इच्छा याभ्यां तौ । तथा कलहे स्पर्धने युद्धे च 'कलहः स्पर्धने युद्धे' इति दर्पणः । क्लमजलाविलौ क्लमजलं श्रमवारि तेनाविलौ कलुषौ । इमौ शैववैष्णवौ ज्वरौ प्रकृष्टमदशालिदम्पती प्रमददम्पती इव विरेजतुः 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति प्रगृह्यन्वेन प्लुतप्रगृह्या अचिनित्यम्' इति प्रकृतिभावः । मणीवादेनेन्तिवचनं तु मुनित्रयासम्मतत्वादनादरणीयमिति वैय्याकरणाः । 'मणीव नीलावलिदम्पतीव तद्विलोचनाभ्याम्' इत्यादिनैषधप्रयोगम् । 'कादम्बखण्डितदलानिव पङ्कजानि' इत्यादाविवशब्द एव सादृश्यार्थक इत्युक्त्वा निर्व्यूढवन्तः । अत्र उपमा । आलिङ्गनादि-रूपाणां युगपद्भावभाजां क्रियाणां गुम्भनात् समुच्चयालङ्कारश्च । यदाह चन्द्रालोके 'बहूनां युगपद्भावभाजां गुम्भः समुच्चयः । नश्यन्ति पश्चात्पश्यन्ति भ्रश्यन्ति च तव द्विष' इति । श्लोकद्वयमेकार्थतात्पर्य-कत्वात्सन्दानितकं नाम काव्यम् । उपगूहन इत्यादिसप्तश्लोक्यां मञ्जुभाषिणीवृत्तं लक्षणमुक्तम् । अत्रादावुपगूहनमनन्तरं चुम्बनं ततो नखविलेखः ततो दन्तक्षतं चेति दम्पत्योश्चत्वारो विलासा उपगूहन इति प्रथमार्धे निबद्धाः । उत्तरार्धे भुजमध्ये मुष्टिकुट्टनं मिथो निरीक्षणं च दम्पतिधर्मो निबद्धः । विपरीतकर्मचटुलाविति श्लोके उपर्यधो लुठनालसत्वं विरामनिस्पृहत्वं कलहप्रियत्वं श्रमजलाविलत्वं चेति चत्वारो व्यापारा निबद्धाः । अत्र उपगूहन इति विपरीतकर्मेति च श्लोकद्वये उपगूहनादयो विलासा सम्पतिधर्मा रतिरहस्यदीपिकायां काञ्चीनाथोक्तरीत्या पञ्चमे उषानिरुद्धसङ्गमे निपुणतरं निरूपिता इति नात्र प्रपञ्चन्ते ।। ४२ ।।

**भसितप्रसारपरिभासुरान्तयो[1]रनवाङ्मुखारुणशिरोरुहार्चिषोः ।**
**वपुषी तयोरनुगतात्मधर्मिणी सहसा विवेश भगवानिवानलम्**
**॥ ४३ ॥**

**भसितेति** ॥ भगवान् श्रीकृष्णः । भसितप्रसारपरिभासुरान्तयोर्भसितस्य भस्मनः प्रसारेण परितो व्यापनेन परिभासुरोऽन्तः स्वरूपं ययोस्तौ तथा तयोः । 'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽति मनोहर' इति विश्वः । परिभासुराङ्गयोरिति पाठे अङ्गान्यवयवा अनवाङ्मुखानि ऊर्ध्वमुखानि अरुणानि यानि शिरोरुहाणि केशास्तेषामर्चींषि ज्वाला ययोस्तौ अनवाङ्मुखारुणशिरोरुहार्चिषौ तयोः शैववैष्णवज्वरयोरनुगतः परस्परमनुसृत आत्मा स्वभावो ययोस्तौ अनुगतात्मानौ अनुगतात्मानौ धर्मौ ययोस्ते अनुगतात्मधर्मिणी 'धर्मादनिचि केवला'दिति धर्मान्तबहुव्रीहेरनिच्प्रत्ययः । सन्दिग्धसाध्यधर्मेति यथा दाहकत्वोज्ज्वलत्वादिना धर्मेण शैववैष्णवज्वरदेहौ समानाविति तात्पर्यार्थः । तथाविधे वपुषी शरीरे सहसा अकस्मात् 'सहसेत्याकस्मिकाविमर्शयोः' इति मनोरमाकारः । अनलमग्निमिवाविवेश 'विश प्रवेशने' लिट् प्रविष्टवान् । एकस्य बलोत्तम्भनायेति भावः ॥४३॥

**अपचिक्यिरे भरभुवो यथा यथा**
**प्रधनक्रमप्रशिथिलाः पराक्रमाः ।**
**उपचिक्यिरे हरिभुवस्तथा तथा**
**प्रधनक्रमप्रकटिताः पदे पदे ॥ ४४ ॥**

**अपचिक्यिर इति** ॥ हराद्भवतीति हरभूः भवतेः क्विप् । तस्य शैवज्वरस्य । पराक्रमाः युद्धसामर्थ्यानि प्रधनस्य युद्धस्य यः क्रमः परिपाटी

१. 'परिभासुराङ्गयोः' इति पाठान्तरम् ।

तस्मिन् प्रशिथिला निस्सारास्सन्तो यथा यथा येन येन प्रकारेण अपचिक्यिरे चिञ् चयने लिट् । 'लिटी'ति द्वित्वं 'एरनेकाच' इति यण् । 'विभाषा चेः' इति वैकल्पिकं कुत्वमिति चिक्यिर इति रूपम् । अपचयं ह्रासं प्राप्तवन्तः । तथा तथा हरिभुवो वैष्णवज्वरस्य पदे पदे 'नित्य-वीप्सयोः' इति द्वित्वम् । प्रथमक्रमे प्रकटिताः पराक्रमा उपचिक्यिरे उपचयमभिवृद्धिं प्राप्तवन्तः ।। ४४ ।।

**करजानुघर्षणविनीतविग्रहः प्रसभान्निगृह्य गलनालके परः ।**
**करुणाकरस्य चरणाग्रसन्निधौ प्रणिपातितः प्रणतमूर्तिनामुना**
**।। ४५ ।।**

**करेति** ।। त्रिकरपादत्वात्कराणां जानूनां च घर्षणेन विमर्देन विनीतः शिक्षितः 'विनीतः सुखगाम्यश्वे वणिजः स्यादथ त्रिषु । निभृते शिक्षिते दान्त' इति कविदर्पणः । विग्रहो देहो यस्य हरज्वरस्य स करजानु-विनीतविग्रहः परः शैवज्वरः गलनालके गलस्य नालके काण्डे 'नालं शेफसि काण्डे च विवरे च' इति कविदर्पणः । प्रसभाद्बलात्कारात् । 'प्रसभं तु बलात्कार' इत्यमरः । निगृह्य प्रणता नम्रा मूर्तिर्यस्य स प्रणत-मूर्तिस्तेनामुना वैष्णवज्वरेण करुणाकरस्य दयानिधेः श्रीकृष्णस्य चरणाग्रसन्निधौ प्रणिपातितः प्रणिपातमवनमनं प्रापितो नमस्कारित इत्यर्थः ।। ४५ ।।

**मुखरं मुखैः स्वगुणगौरवेरणप्रवणैः प्रसादसुमुखस्तमुन्मुखः ।**
**अभयं भयस्खलितसंस्तुतस्तवं स ततान मानमिव**
**मन्मथद्विषः ।। ४६ ।।**

**मुखरमिति** ।। स्वस्य श्रीकृष्णस्य गुणानां गौरवस्य च ईरणे वर्णने प्रवणैः प्रह्वैर्मुखैः त्रिशिरस्त्वाद्बहुवचनम् । मुखरं 'नखमुखकुञ्जेभ्यो र' इति रप्रत्ययः । शब्दायमानम् । भयेन स्खलितः संस्तुतः परिचितः बहुवारमभ्यस्तः 'संस्तवः स्यात्परिचय' इत्यमरः । स्तवं स्तवनं 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः । तं भयस्खलितसंस्तुतस्तवं तं शैवज्वरं प्रसादेन प्रसन्नतया सुमुखः श्रीकृष्णः मन्मथद्विषो महेश्वरस्य मानं बहुमानं कुर्वन्निव अभयं न भयं यस्य तम् ततान 'तनु विस्तारे' लिट् चकार ।। ४६ ।।

**अचलां स भक्तिमचिरादिहाचि(त)-**
**नोच्च्युतमत्सरः कृतधियोऽपि दुर्लभाम् ।**
**विचलन्ति कृत्यमधिकृत्य धीमतां न हि**
**वृत्तयः प्रकटितेऽपि पौरुषे ।। ४७ ।।**

**अचलामिति** ।। स प्रणतो हरज्वरः इहाच्युते च्युतमत्सरः । च्युतो गलितो मत्सरोऽन्यत्र शुभद्वेषो यस्य स तथा सन् । कृता पर्याप्ता धीर्यस्य तस्य शिक्षितबुद्धेः 'कृतं तु फलपर्याप्तयुगेषु' इति दर्पणः । दुर्लभां कृच्छ्रेण लभ्यां 'न लोकाव्ययनिष्ठा खलर्थतुना'मिति निषेधस्तु कारकषष्ठीविषयः । सर्वोऽप्ययं प्रतिषेधः कारकषष्ठ्या एवेति वैय्याकरणवचनात् प्रकृता च शेषषष्ठी । अचलां भक्तिं 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्त' इति शास्त्रलक्षितं प्रेमाणमाचिनोत् 'चिञ् चयने' लङ् अकरोत् । एतमर्थमर्थान्तरन्यासेनाह– कृत्यं प्रयोजनमधिकृत्य पौरुषे विक्रमे भावकर्मणोः पुरुषस्य च' इति कविदर्पणः । प्रकटिते धीमतां प्रशस्तमतीनां वृत्तयो न विचलन्ति हि चाञ्चल्यं न प्राप्नुवन्ति हि ।।४७।।

सदृशाकृतिना समीक्ष्य योद्धुं स
दृशा यान्तमुपान्तमन्तकारिम् ।
जगदेकपतिः सुतेन वाक्यं
जगदेऽनेन मनोरमार्थबन्धम् ।। ४८ ।।

**सदृशेति** ।। जगदेकपतिर्भुवनमुख्यरक्षकः स श्रीकृष्णः । सदृशाकृतिना स्वसदृशी आकृतिर्विग्रहो यस्य स तथा तेन अनेन प्रद्युम्नाख्येन सुतेन । योद्धुमुपान्तं समीपमायान्तमागच्छन्तमन्तकारिं हरं दृशा समीक्ष्य । मनोरमौ मनोहरौ अर्थोऽभिधेयं बन्धो रचना च यस्मिन् तत्तथाविधं वाक्यं जगदे । गदव्यक्तायां वाचीत्यतः कर्मणि लिट् उक्तः । पादचतुष्टयाद्येऽपि वर्णत्रयानुवृत्तेरनुप्रासो नाम शब्दालङ्कारः । मनोरमार्थबन्धमित्यनेन सदृशीत्यादिपञ्चश्लोकी मनोरमानामवृत्तबद्धेति मुद्रालङ्कारभङ्ग्या सूचितम् । यदाह वृत्तरत्नाकरे केदारः– 'विषमे ससजा गुरूयदिष्टाः सभरायश्च समे मनोरमेयम्' इत्यर्धसमवृत्ताध्याये । गदतेर्दु(र्दृ?)ह्यादित्वेन द्विकर्मकत्वात् कर्मद्वयेऽलङ्कारप्राप्तावपि 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण' इति न्यायसिद्धान्तहरिवचने दुहादेरप्रधान एव कर्मणि लकारप्राप्तेस्तङा अभिहिततया द्वितीयाभावः । अप्रधानस्य तु अनभिहितत्वाद्वाक्यमिति द्वितीयैव । विस्तृतमेतन्मञ्जर्याम् ।। ४८ ।।

सहसा सहसायुधैरनीकैरनुगच्छद्भिरदृष्टपूर्वरूपैः ।
पुरतः पुरतः क एष निर्यन्ननुभावात्सदृशं वपुर्दधानः
।। ४९ ।।

**सहसेति** ।। अदृष्टपूर्वं पूर्वमदृष्टं रूपं विग्रहो येषां ते अदृष्टपूर्वरूपा-

स्तैरनुगच्छद्भिः सायुधैरायुधसहितैरनीकैः सैन्यैः सः । अनुभावात् प्रभावात् 'अनुभावः प्रभावः स्यान्निश्चये भावसूचक' इति दर्पणः । सदृशं दृशोऽनुरूपं वपुर्दधानः परतोऽग्रतः । पुरतः शोणितपुरात् । सहसा निर्यन्निर्गच्छन् एष पुरुषः क इति जगदे इति पूर्वेण सम्बन्धः । सहसा सहसेति पुरतः पुरत इति यमकं शब्दालङ्कारः । ननु कथं पुरत इति प्रयोगः । यावता 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इति पूर्वशब्दादसिप्रत्यये प्रकृतेः पुरादेशे च पुर इत्येव स्यात् । अस्तातौ तु पुरस्तादिति चेत् अत्र शरणदेवः पुरस्तिष्ठतीति प्रातिपदिकाद्धात्वर्थ इति णिचि टिलोपे पचाद्यचि च आद्यादित्वात्तसिरित्याह । केचित्तु 'विभाषा परावराभ्याम्' इति विभाषाग्रहणं योगाद्विभज्यते ततो न पूर्वशब्दादतसुच्प्रत्ययः । 'अस्ताति च' इति सूत्रे चकारस्यानुक्तसमच्चयार्थत्वात्पूर्वशब्दस्य पुरादेशे पुरत इति रूपमिति वदन्ति । 'पश्यामि तामित इतः पुरतश्च पश्चात्' इति भवभूतिः । 'नीरसतरुरिह निवसति पुरत' इति कश्चित् । 'स्यात्पुरः पूरतोऽग्रत' इत्यमरः । 'पूरतः प्रथमे चाग्रे' इति विश्वश्च । सर्वमेतन्मनोरमायां स्फुटम् ।। ४९ ।।

**न गणा गणयन्ति नस्तदीया विदधद्भिश्चिकुरै[1]रुदायताग्रैः ।**
**भुजलम्भितभीमशूलधाराः प्रतिगर्जन्ति जगन्ति वा ग्रसन्ते**
**।। ५० ।।**

**नेति** ।। भुजलम्भितभीमशूलधारा भुजे लम्भिताः प्रापिता भीमानां भयङ्कराणां शूलानां धारा अग्राणि ताः 'धारास्त्राग्रेऽम्बुसन्तत्यां सैन्याग्रेऽश्वगतिष्वपी'ति यादवः । विदधद्भिः कुर्वद्भिरुदायताग्रैः उदायतानि

---

१. 'चिभुरैः' इति पाठान्तरम् ।

उन्नतानि दीर्घाणि च अग्राणि येषां ते तैः चिकुरैः कुन्तलैः चिभुरैरिति पाठेऽपि स एवार्थः । 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुह' इत्यमरः । 'चिकुराश्चिभुराः कचा' इति दुर्गः । स्तब्धरोमाणि भयानक-शूलायुधभावं भजन्त इति भावः । तैरुपलक्षिता गणाः प्रमथाः । 'गणश्चये सैन्यभेदप्रमथयोः' इति दर्पणः । नोऽस्मान् न गणयति 'गण सङ्ख्याने' लट् । नाद्रियन्त इत्यर्थः । प्रत्युत जगन्ति ग्रसन्ते वा । ग्रसमाना इव प्रतिगर्जन्ति । 'ग्रसु अदने' लट् 'गर्ज शब्दे' लट् । इत्युभयत्र धातुव्याख्यानम् । इति जगदे ।। ५० ।।

**इतरेतरमप्युपक्रमन्ते घनमस्तिष्कतृषेरिताः समीकम् ।**
**असृजोपभुजः कपालहस्ता दृढवद्धोचितकालखण्डकक्ष्याः**
**।। ५१ ।।**

**इतरेतरमिति** ।। दृढं यथा तथा बद्धा उचिता अनुरूपाः कालखण्डाः काले यानि दक्षिणकुक्षिस्थमांसविशेषाः कक्ष्या वरत्रा येषां ते दृढबद्धोचित-कालखण्डकक्ष्याः । 'करण्डा तु महास्नायु कालेयं कालखण्डक' इति रभस इति भट्टः । कपालहस्ताः कपालसहितो हस्तो येषां ते तथा । असृजा रुधिरेण उपभुजः 'सौमित्रिणा पुत्रवती सुमित्रे'तिवत् असृजा रक्तेनोप-भोगवन्त इत्यर्थः । घना अधिका मस्तिष्कतृषा मस्तकभवस्नेहलाभतृष्णा-स्ताभिरीरिताः घनमस्तिष्कतृषेरिताः । समीकं 'समीकं साम्परायिकम्' इत्यमरः । इतरेतरमपि मिथोऽपि उपक्रमन्ते प्रारभन्ते 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् । 'क्रमु पादविक्षेपे' लट् ।। ५१ ।।

**उपवीतपदं ततास्थिमाला स्थिरदौर्गन्ध्यसिरालताजिनाढ्या ।**
**उपवीतयुतं करोत्यमीषां नवसेकापतदास्रसान्द्रबिन्दुः ।।५२।।**

**उपवीतेति** ।। नवसेकेन नूतनसेचनेन आपतन् आस्रस्य रुधिरस्य सान्द्रो निबिडो बिन्दुर्यस्याः सा नवसेकापतदास्रसान्द्रबिन्दुः । स्थिरदौर्गन्ध्यसिरालताजिनाढ्या स्थिरमचञ्चलं दौर्गन्ध्यमसुरभिर्यस्याः सा च सा सिरैव नाड्येव लता च सैवाजिनं तेनाड्या सम्पन्ना ततानामस्थ्नां माला अमीषां प्रमथगणानामुपवीतस्य यज्ञोपवीतस्य पदं स्थानं वक्षस्थलमुपवीतयुतं करोति । माणवकाः सकृष्णाजिनमुपवीतमिव प्रमथा अपि ससिरास्थिमालां वक्षसि विभ्रतीति भावः ।। ५२ ।।

**क्षणलक्षितेऽत्र हृदयं मम प्रभो कथमप्यहो नयनमार्गगामिनि ।**
**भवता च संहृतिविभेदभाजने बहुमानभाजि भवति प्रमोदते**
**।। ५३ ।।**

**क्षणेति** ।। क्षणेऽवसरे युद्धसमये लक्षिते दृष्टे 'क्षणस्त्ववसर' इति केशवः । अनन्तरं नयनमार्गगामिनि नयनपथमवतरति । संहृतेर्विभेदस्य च भाजने पात्रे संहृतिविभेदभाजनेऽपि अत्र पुरः स्थिते भवता बहुमानभाजि बहुमानं भजतीति बहुमानभाक् तस्मिन् भवति सति प्रातिभट्येन समभियाततया संसाहविभेदादिप्रतिक्रियामात्रेऽपि जने त्वया सादरनिरीक्षणादिबहुमानकरणं तत्र मम मनः प्रमोदश्च आश्चर्यमावहतीति भावः । इति जगदे । अत्रापि मञ्जुभाषिणीनामकं वृत्तम् ।। ५३ ।।

**वपुरस्य शंसति भयानि विवलितधनुः सुदारुणम् ।**
**वृष्टिमपि शरमयीमभितः परिवेषभूषितमिवार्कमण्डलम्**
**।। ५४ ।।**

**वपुरिति** ।। अस्य जनस्य विवलितं मण्डलीकृतं धनुर्यस्य

विवलितधनुः । सुदारुणमतिभीषणं वपुः शरीरं परिवेषभूषितं परिवेषेण परिधिना भूषितमलङ्कृतमर्कमण्डलमिव । अभितः समन्तात् । शरमयीं वृष्टिम् । एकत्र शरशब्द उदकार्थः । अपरत्र बाणवाचकः । 'शरो रसाग्रसारे स्यात् काण्डे बाणे तृणान्तरे । क्लीबमम्भसी'ति दर्पणः । भयान्यपि शंसति शंस स्तुतौ लट् सूचयतीत्यर्थः । उपमालङ्कारः । वपुरस्येत्यादित्रिश्लोकी उद्गतानामकवृत्तबद्धं तल्लक्षणं तु वृत्तरत्नाकरे– 'सजसादिमे सलघुके च नसजगुरुकेऽप्यथोद्गता । अङ्घ्रिगतभजनला गयुताः सजसाजगौ चरणमेकतः पठेत् ।।' इत्युक्तम् । आदिमे पादे सगणजगणौ सगणलघू च । द्वितीयपादे नगणसगणजगणगुरवः । तृतीयपादे भगणनगण-जगणलघुगुरवः । तुरीयपादे सगणजगणसगणजगणगुरवश्चेत् उद्गतानामकं वृत्तमिति तदर्थः । अत्र अर्धमयमप्येकीकृत्योच्चारयेत् यथा पूर्वार्धमुत्तरार्धं चेतरश्लोकानां पृथक् पठ्यते नेह तथा पठितव्यमित्येकतः पठेदित्येतत् धीशोधिनीकारो व्याचख्यौ ।। ५४ ।।

**इति सत्यलङ्घितजनोऽत्र तनयमतिवेलविस्मयात् ।**
**व्याहृतवचनमवागमयत्तमिमं पुराणपुरुषः पुरद्विषम् ।।५५।।**

**इतीति** ।। पुराणपुरुषः श्रीकृष्ण इत्येवं प्रकारे वचने सति इति सति । अलङ्घितजनोऽलङ्घित आदृतो जनो यस्य स तथा सन् । अतिवेल-विस्मयात् भृशाश्चर्यात् । व्याहृतमुक्तं वचनं येन स व्याहृतवचनस्तमिममेवं पर्यनुयोक्तारं तनयं पुत्रं प्रद्युम्नं पुरद्विषं त्रिपुरान्तकं हरमवागमयत् अवबोधितवान् 'गतिबुद्धिप्रत्यवसानार्थे'ति द्विकर्मकत्वम् ।। ५५ ।।

**गुरुसारमेनममरेषु परमपरमेष्ठिनोरधः ।**
**भक्तभरणकृतसंहननं तमवेहि तात तरुणेन्दुशेखरम् ।।५६।।**

**गुरुसारमिति** ।। हे तातेति प्रद्युम्नसम्बोधनम् । अमरेषु देवेषु परमः परमपुरुषः परमेष्ठी चतुर्मुखस्तयोः परमपरमेष्ठिनोः । 'परमं ब्रह्मणि पर' इति दर्पणः । 'परमेष्ठी पितामह' इत्यमरः । अधोऽधस्तात् । अवमतयेति यावत् । गुरुसारं गुरुश्रेष्ठं भक्तानां बाणादीनां भरणे पोषणे कृतं संहतिनं वपुर्देहो यस्य स भक्तभरणकृतसंहननस्तम् । 'गात्रं वपुः संहननम्' इत्यमरः । तमेनं लक्ष्यमाणं जनं तरुणेन्दुशेखरं बालचन्द्रशेखरम् । अवेहि 'इण गतौ' लोट् । जानीहि । अवैहीति वृद्धिरसाधुरिति वैय्याकरणवचनात् अवेहीत्यत्र 'ओमाङोश्च' इति पररूपमेव ।। ५६ ।।

**तदिहावयोर्जयगुणाकरयोः करयोरुपाहितशरासनयोः ।**
**हलिनावलोकय कलिं सहितः स हि तस्य वेत्ति मम**
**वातिशयम् ।। ५७ ।।**

**तदिति** ।। हे तातेत्यनुवर्तते । तत् शिवावगत्यनन्तरं तस्मादिति वा । इह स्थले जयगुणाकरयोर्विजयलक्षणगुणस्य स्थानयोः । 'आकरो निकरे खन्यां स्थाने च' इति कविदर्पणः । करयोर्हस्तयोः उपाहितशरासनयोः उपाहितं गृहीतं शरासनं धनुर्याभ्यां तौ तथा तयोः आवयोर्मम हरस्य च कलिं युद्धं 'कलिसंस्फोटसंयुगा' इत्यमरः । हलिना बलभद्रेण सहित-स्त्वमवलोकय पश्य । स बलभद्रस्तस्य शिवस्य मम वा भवन्तमतिशयं जयलक्षणं वेत्ति हि । 'विद ज्ञाने' लट् । प्रमिताक्षरावृत्तम् । प्रथम-पादान्त्यद्वितीयपादाद्यवर्णत्रयस्य तृतीयपादान्तवर्णत्रयस्य तुरीयपादाद्य-वर्णत्रयस्य च द्विः समीरणात् 'यमकं बहुवर्णानां साच्कानां द्विस्समीरणम्' इति लक्षितो यमकरूपः शब्दालङ्कारः ।। ५७ ।।

**गिरमित्युचितामुदाहरन्तं सुतमालोक्य तदा मुदाहरं तम् ।**
**अभियान्तमनन्तशक्तिमन्तं युधि लक्ष्मीपतिमाप**
**वीरलक्ष्मीः ।। ५८ ।।**

**गिरमिति** ।। युधि युद्धे सम्पदादित्वाद्भावे क्विप् । 'युद्धे समित्याजिसमिद्युध' इत्यमरः । वीरलक्ष्मीर्वीराणां लक्ष्मीः श्रीः । सुतं प्रद्युम्नमालोक्य । इत्युक्तप्रकारामुचितां योग्यां गिरं वाचमुदाहरन्तम् । मुदा सन्तोषेण तं हरमभियान्तम् । अनन्ताः शक्तयोऽस्य सन्तीत्यनन्तशक्तिमान् तम् । अन्तं मनोहरं मनोहरस्वरूपम् । 'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽति मनोहरे' इति विश्वः । अनन्तशक्तिमनन्ताः शक्तयो यस्य तमिति वा । लक्ष्मीपतिं श्रीकृष्णमाप । 'आप्लृ व्याप्तौ' लिट् प्राप्तवती अत्र प्रकरणे श्लोके यमकादिशब्दालङ्कारो यथासम्भवमूहनीयः । गिरमितीतरेतरमिति च श्लोकद्वयं मनोरमानामकवृत्तवद्धम् ।। ५८ ।।

**इतरेतरमाजुहूषमाणौ जघटाते जगतां पती जयाय ।**
**इतरः प्रकृतेः परः परस्यास्त्वपरस्तद्भवभूतताभिमानः**
**।। ५९ ।।**

**इतरेतरमिति** ।। जगतां पती हरिहरौ । इतरेतरमन्योन्यम् । आजुहूषमाणौ स्पर्धया आह्वानेच्छावन्तौ सन्तौ जयाय झगटाते घट चेष्टायामित्यतो लिट् । मिलितवन्तौ । तत्र तयोरितर एकः परस्याः प्रकृतेः परः श्रीतत्वादप्युत्तमः । अपरस्तु तताभिमानः ततोऽभिमानोऽहङ्कारो यस्य स तथा । तद्भवभूः विष्णुजन्यब्रह्मोद्भवो ज्ञातव्यः । कर्मव्यतिहारे इतरेतरमिति द्वित्वम् । ह्वेञ् स्पर्धायामिति धातोः 'कर्मणः समानकर्तृकादिच्छायां वा'

इति सनि 'अभ्यस्तस्य च' इत्यभ्यस्ती भविष्यतो धातोः सम्प्रसारणे 'सन्यङो'रिति द्वित्वे अभ्यासस्य जश्त्वे 'अज्झनगमां सनी'ति दीर्घत्वे षत्वे सन्नन्ततया 'सनाद्यन्ता धातव' इति धातुसञ्ज्ञायां 'स्पर्धायामाङ्' इति प्रकृतेरात्मनेपदित्वात् पूर्ववत्सन इत्यात्मनेपदित्वे लटि लटः शानचि च आगुहूषमाणाविति रूपम् । तद्भवभूस्तताभिमान इति पितामहेऽपि तामसभावेन जयाय यतते हर इत्यभिप्रायगर्भत्वात्परिकरालङ्कारः ।।५९।।

**एकः प्रबुद्धोत्पलकान्तिधामा विभिन्नकुन्दद्युतिविभ्रमोऽन्यः ।**
**हरीशयोरंशुमुचोरभींशू मिथोऽभिरामौ परिषस्वजाते ।।६०।।**

**एक इति** ।। हरीशयोर्मध्ये एकः श्रीकृष्णः प्रबुद्धोत्पलकान्तिधामा प्रबुद्धमुद्बुद्धं विकसितं तच्च तदुत्पलं च तस्य कान्तिः (प्रकृष्टा बुद्ध-नीलोत्पलकान्तिः?) यस्य तत्तथा प्रबुद्धनीलोत्पलकान्ति धाम देहो यस्य स तथा । 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयो'रिति विश्वः । प्रबुद्धं च तदुत्पलं च तस्य कान्तिरिव कान्तिर्यस्य तथाविधं धाम देहो यस्येति वा । अन्यो हरः विभिन्नकुन्दद्युतिविभ्रमः विभिन्नो विमिश्रः कुन्दद्युतेर्विभ्रमो विलासो यस्य स तथा । 'भिन्नं विदारितेऽन्यस्मिन् मिश्रे च' इति केशवः । एवं विधशोभाशालिनोरंशुमुचोरंशून् रश्मीन् मुञ्चत इत्यंशुमुचौ तयोः उद्वमद्रश्मिभाजोर्हरीशयोः कृष्णशङ्करयोः । हरिशब्दस्याभ्यर्हितार्थ-त्वाद्धरीशाविति पूर्वप्रयोगः । अभिरामौ मनोहरौ अभींशू रश्मिकान्ती इति यावत् 'अभींशुः प्रग्रहे रश्मौ' इत्यमरः । परिषस्वजाते स्वञ्ज परिष्वङ्ग इत्यतो लिटि 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा' इति लिटः कित्त्वे अनिदितानामिति नलोपः 'परिनिविभ्यः–' इत्यादिना षत्वम् । 'स्थादिष्वभ्यासेनचाभ्यासस्य' इति उत्तरषकारस्यापि षत्वं न भवति ।

'सदेः परस्य लिटि' इति निषेधात् । आलिङ्गितवन्तावित्यर्थः । एक इति जातमिति श्लोकद्वयमिन्द्रवज्रोपेन्द्रवज्रासम्मिश्रणात्मकोपजाति-नामकवृत्तबद्धम् ॥ ६० ॥

**जातं निकामं निजुगूहनैको हृदि प्रहर्षं भगवान् कथञ्चित् ।**
**अन्योन्यमुत्कृष्टसुखापि मैत्री बिभर्ति शोभामवकाश एव**
**॥ ६१ ॥**

**जातमिति** ॥ ना मनुष्यरूप एको मुख्यो भगवान् हृदि निकामं यथेष्टं जातं हर्षं कथञ्चित् निजुगूह । 'गुह संवरणे' लिट् । 'ऊदुपधाया गोह' इत्युक्तम् । गूहितवान् । किमिति हर्षं न प्रकाशितवान् इत्यत उक्तम् अन्योन्यं परस्परमुत्कृष्टं सुखं यस्याः सा उत्कृष्टसुखापि मैत्री मित्रभावः अवकाश एव अवसरे प्राप्त एव शोभां बिभर्ति । 'डुभृञ् भरणे' लिट् । धत्त इति 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्' इति द्वित्वे बहुलग्रहणादसमासवद्भावे पूर्वपदस्य सुप्रत्यये उत्तरपदक्रियाविशेषणयोः नपुंसकत्वेऽपि अदड्भावे 'अतोऽमि'त्यपि अन्योन्यमिति रूपम् । सर्वमेतत् 'प्रकारे गुणवचनस्य' इति सूत्रभाष्यादौ प्रपञ्चितम् ॥ ६१ ॥

**सममुखरितकाहलीसमृद्धैः सुरसचिवाहतडिण्डिमोपवाद्यैः ।**
**गगनचरमृदङ्गधीरनादैः प्रतिघटितेषु जगत्सु जातकम्पम्**
**॥ ६२ ॥**

**समेति** ॥ सममुखरितकाहलीसमृद्धैः समा एकदैव सन्नद्धा मुखरिताः सञ्जातमुखराश्च याः काहल्यस्ताभिः समृद्धैरभिवृद्धैः सुरसचिवाहतडिण्डिमोप-वाद्यैः सुराणां सचिवैः सहायैराहतानि डिण्डिमा वाद्यप्रभेदा एव उपवाद्यानि

येषां ते तथोक्तास्तैः । 'सचिवो मित्रमन्त्रिणोः । सहायेऽपि' इति कविदर्पणः । 'वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः' गगनचरमृदङ्गधीरनादैः गगनचराणां देवानां यानि मृदङ्गानि तेषां धीरनादैर्गम्भीरस्वनैः । जातकम्पं यथा तथा जगत्सु प्रतिघटितेषु सत्सु वरविशिखास्तदङ्गं विविशुरिति वक्ष्यमाणेनान्वयः । सममुखरितेत्यादिपञ्चश्लोकी पुष्पिताग्रानामकवृत्तबद्धा । तल्लक्षणमुक्तम् । तत्र सममुखरितेत्यादिचतुःश्लोकी वक्ष्यमाणैकक्रियासम्बन्धादेकं वाक्यमिति विशेषकं नाम काव्यम् । तथा च वीरनारायणः 'छन्दश्चतुष्टयं त्वेकक्रियान्वयिविशेषकम्' इति ।। ६२ ।।

**हरिहरचरिताभियुक्तगीतेष्वनवरतास्खलितस्तुतिक्रमेषु ।**
**समितिसमुदिताभिधानदीक्षामुपगतवत्सु च सिद्धचारणेषु**
**।। ६३ ।।**

**हरीति** ।। हरिहरयोश्चरितेष्वभियुक्तानि श्रेष्ठानि गीतानि येषां तेषु हरिहरचरिताभियुक्तगीतेषु । अनवरता अविच्छिन्ना अस्खलिताश्च स्तुतिक्रमा येषु तेषु सिद्धचारणेषु सिद्धेषु चारणेषु च देवयोनिषु । सिद्धाः प्रसिद्धाश्चारणाः कुशीलवाः 'चारणाश्च कुशीलवा' इत्यमरः । तेष्वत्यन्यत्र समितिसमुदिताभिधानदीक्षां समितिर्युद्धमन्यत्र सभा 'समितिः सङ्गमे मृधे । सभायां समतायां च' इति दर्पणः । तस्यामुदितान्युत्पन्नानि यानि चरितानि तेषामभिधाने दीक्षामभिनिवेशमुपगतवत्सु सत्सु विशिखाः तदन्तरङ्गं विविशुः ।। ६३ ।।

**द्रुतकनकदृढप्रबद्धकक्ष्या रुचिरपतत्रतरङ्गितांशुकाढ्याः ।**
**बहुविधविकृतिक्रियासुदक्षाः स्थिरतरसन्निहितातिरौद्रभावाः**
**।। ६४ ।।**

**द्रुतेति** ।। द्रुतं तप्तं कनकं स्वर्णं तेन दृढा प्रबद्धा कक्ष्या बन्धनरज्जुर्येषां ते द्रुतकनकदृढप्रबद्धकक्ष्याः कुशीलवपक्षे द्रुतं कनकं यस्याः सा च सा दृढा प्रबद्धा च कक्ष्या कच्छं येषामिति विग्रहः । रुचिरपतत्रतरङ्गितांशुकाढ्याः रुचिराणि सुन्दराणि पतत्राणि गरुतस्तेषां तरङ्गिताः व्याप्ता अंशुकाः अंशुशब्दात् स्वार्थिकः कन् । मयूखास्तैराढ्याः । अन्यत्र रुचिरैः पतत्रैरवतंसायितैस्तरङ्गितानि विमिश्राणीति यावत् । यान्यंशुकानि उष्णीषादिरूपाणि वासांसि । 'अंशुकं वस्त्रमात्रे च सूक्ष्मवस्त्रोत्तरीययोः' इति केशवः । तैराढ्याः सम्पन्नाः बहुविधासु विकृतिक्रियासु विकारकरणेषु अन्यत्र विकृतिरूपासु क्रियासु व्यापारेषु दक्षाः समर्थाः स्थिरतराः सन्निहिताश्च अतिरौद्रभावाः अत्यन्तोग्रत्वानि येषां ते स्थिरतरसन्निहितातिरौद्रभावाः 'रौद्रं तूग्रम्' इत्यमरः । अतिक्रान्ता रौद्रभावमतिरौद्रभावाः गृहीतशृङ्गारादिविलासा इत्यर्थः । स्थिरतराः पटुतराः सन्निहिताः परिसरवर्तिनोऽतिरौद्रभावा येषामिति कुशीलवपक्षे शृङ्गारादिचेष्टायुताः केचन परिसरवर्तिनः पुरुषाः कुशीलवसन्निधाने चलन्तीति भावः । विशिखा विविशुः ।। ६४ ।।

**हरिहरसमरोत्सवप्रवृत्तौ वरविशिखा विविशुस्तदन्तरङ्गम् ।**
**इषुधियवनिकाव्यवायमात्रावधिकरसं दधतो विचित्रवेषाः**
**।। ६५ ।।**

**हरीति** ।। हरिहरसमरोत्सवप्रवृत्तौ हरिहरयोः समरो रणः स एवोत्सवः तस्य प्रवृत्तौ सत्याम् । इषुधी तूणे एव यवनिका तिरस्करिणी तस्या व्यवायमात्रं व्यवधानमेव तदवधिर्यस्य स तथोक्तः स चासौ रसः वीर रौद्रादिरूपः तं दधतः विचित्रो वेषोऽलङ्कारकृतशोभा येषां ते विचित्रवेषाः ।

विशिखा बाणास्तदन्तरङ्गं हरिहरयोरन्तरङ्गम् अन्तर्विद्यमानमङ्गम् । अन्यत्र अन्तं रम्यं रङ्गं नटनस्थानम् । 'अन्तोऽस्त्यवदिते रम्य' इत्यमरः । अन्यत्र वरं विशिखं चित्तं येषामिति नटा ग्राह्याः 'विशिखं चित्तम्' इति यादव इति केशवः । विविशुः 'विश प्रवेशने' लिट् ।। ६५ ।।

**अतिदृढमनसां सुरासुराणामपि विदधुर्नियमेन हर्षशोकौ ।**
**रसनटनपटूकृतैर्मुखैस्ते हरति मनो महतामपीह नाट्यम्**
**।। ६६ ।।**

**अतिदृढेति** ।। ते विशिखा नटाश्च । अत्यन्तं दृढं मनो येषां ते अतिदृढमनसस्तेषां सुराणामसुराणामपि नियमेन नैय्यत्येन । रसनटनपटूकृतैः रसे द्रवे शृङ्गारादौ च नटनेन अभिनयेन प्रवेशेन च पटूकृतैः कुशलीकृतैः मुखैः हर्षशोकौ विदधुः । इह युद्धरङ्गे नाट्यं महतामपि मनोहरति । अत्र देवासुरसुखदुःखदानं समर्थनीयं हरति मन इति समर्थ्यत इति काव्यलिङ्गमलङ्कारः ।। ६६ ।।

**उत्कार्मुकौ कनकनिर्मितवर्मवीतौ**
**निर्मुक्तबाणनिकरौ द्युतिमादधाते ।**
**सन्ध्याम्बुदाविव निरन्तरवृष्टिमन्ता-**
**वुल्काशतैः सुरधनुश्शकलाकुलौ तौ ।। ६७ ।।**

**उत्कार्मुकाविति** ।। उद्गते कार्मुके शार्ङ्गपिनाकौ याभ्यां तौ उत्कार्मुकौ । कनकनिर्मितवर्मवीतौ कनकेन सुवर्णेन निर्मिते एव वर्मणी तनुत्रे ताभ्यां वीतौ दंशितौ । निरस्तरा विच्छेदशून्या वृष्टिरनयोरस्तीति निरन्तरवृष्टिमन्तौ । 'एकदेशिनैकाधिकरण' इतिवत् कर्मधारयादपि मतुप् । सुरधनुःशकलाकुलौ

सुरधनुषोरिन्द्रचापयोः शकलाभ्यामाकुलौ भरितौ । उल्काशतैरशनिपातशतैः सन्ध्याम्बुदाविव । निर्मुक्तबाणनिकरैस्तौ हरिहरौ द्युतिं कान्तिमादधाते । 'डुधाञ् धारणे' लट् । वहतः । उपमाविशेषोऽत्रालङ्कारः । उल्कामुकि-त्यादित्रिश्लोकी वसन्ततिलकनामकवृत्तबद्धा । 'उक्ता वसन्ततिलका तभजा जगौ गः' इति तल्लक्षणमभिहितम् ।। ६७ ।।

**खड्गं लघो कुशलकार्मुकमाशुकारिन्**
**रिष्टिं गदां प्रबलमुद्गरमिद्धवीर्य ।**
**गृह्णीष्व शक्तिधर शक्तिमशक्त भक्तिं**
**भक्तप्रिये भवविभेदिनि भूतनाथे ।। ६८ ।।**

**खड्गमिति** ।। हे लघो खड्गं गृह्णीष्व । आशुकारिन् रिष्टिं खड्गभेदं गृह्णीष्व प्रबलगदां गृह्णीष्व । इद्धं दीप्तं वीर्यं यस्य स तथा । तत्सम्बुद्धिः । मुद्गरं द्रुघणम् । हे शक्तिधर कुमार शक्तिं कासुनामिकां गृह्णीष्व । अशक्त असमर्थ भक्तप्रिये भक्तानां प्रीतिविषये । भवं संसारं विभेत्तुं शीलमस्येति भवविभेदी तस्मिन् भूतनाथे हरे 'भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः' इत्यमरः । भक्तिं गृह्णीष्वेत्याज्ञापिताः प्रत्युद्ययुरिति वक्ष्यमाणेनान्वयः ।। ६८ ।।

**युध्यध्वमद्य पुर एव हरस्य**
**यूयमित्यात्तजल्पमसुरा दितिजेश्वरेण ।**
**आज्ञापिताः परमपालितपालनाय**
**प्रत्युद्ययुर्विभुमहो युधि यादवानाम् ।। ६९ ।।**

**युध्यध्वमिति** ।। हे दितिजाः यूयं हरस्य पुर एवाग्रत एव युध्यध्वम्

युध सम्प्रहारे इत्यतो लोट् । युद्धं कुरुतेत्येवंप्रकारेण दितिजेश्वरेण बाणासुरेण परमपालितपालनाय परमेण परमशिवेन पालितस्यास्य जनस्य पालनाय रक्षणाय आज्ञापिता दितिजा इह युधि युद्धरङ्गे यादवानां प्रभुं श्रीकृष्णं प्रत्युद्ययुः । तं प्रतियत्नं कृतवन्तः ।। ६९ ।।

**ध्वनतां गभीरमभितः प्रसर्पतामुपरि**
**श्रिया समभिशिश्रिये हरिः ।**
**बहुपात्पलाशशयनो महीयसि प्रलये**
**महाब्धिपयसामिवोच्छ्रये ।। ७० ।।**

**।। इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यविरचिते उषाहरणे महाकाव्ये सप्तमः सर्गः ।। ७ ।।**

**ध्वनतामिति** ।। हरिर्गभीरं गम्भीरं यथा तथा ध्वनतामभितः प्रसर्पतां पार्श्वद्वये गच्छतां प्रतिभटानामुपर महीयसि प्रलये काले महाब्धिपयसामुच्छ्रये । बहुपात्पलाशशयन इव बहुपाद्वटः तस्य पलाशं पत्रं तच्छयनं यस्य स इव श्रिया सह समभिशिश्रिये संश्रितवान् । 'न्यग्रोधो बहुपाद्वट' इति 'पत्रं पलाशं छदनम्' इति चामरः । सकलसेनाम्बुधेरुपरि तदवश्यः महाप्रलयाब्धिपयसामुपरिवटपत्रपुटे शयान इव अभितः अचञ्चल आसीदिति भावः । 'अदिश्रयतियौतिपूद्रुव' इति शास्त्रविहितो घञ्प्रत्ययो बाहुलकान्न भवतीति 'एरचि' उच्छ्रय इति रूपं निष्पादयन्ति । अत एव 'नगाद्यारोह उच्छ्राय उत्सेधश्चाश्रयश्च स' इत्यमरः । अत्र मञ्जुभाषिणीनामकं वृत्तम् ।। ७० ।।

**।। इति श्रीमदुषाहरणव्याख्यायां रसिकरञ्जनीसमाख्यायां सूरीन्द्रश्रीमच्चरणशिष्यसुमतीन्द्रतीर्थयतिविरचितायां सप्तमः सर्गः ।।७।।**

## ।। अथ अष्टमः सर्गः ।।

**ततः करस्तलस्थस्य सहस्रारस्य चक्रधृक् ।**
**सहस्रकिरणात्यच्छतेजसस्तेजसा ततः ।। १ ।।**

**तत इति** ।। योधानामभितः प्रसर्पणानन्तरम् । धरतीति धृक् चक्रस्य धृक् चक्रपाणिः श्रीकृष्णः । करतले तिष्ठतीति करतलस्थं तस्य । 'सुपि स्थः' इति तिष्ठतेः कप्रत्ययः । सहस्रकिरणस्य सहस्रं किरणा यस्य तस्य सूर्यस्य अत्यच्छमत्यन्तस्वच्छं तेजो यस्य तत्सहस्रकिरणात्यच्छतेजस्तथाविधस्य । सहस्रारस्य चक्रस्य तेजसा ततो व्याप्तः रेज इति वक्ष्यमाणेनान्वयः । शिष्याननुजिघृक्षुः कविरत्र पद्ये शब्दालङ्कारं निर्दिशति निरोष्ठ्यमिति । 'स्वरवर्णस्तानबद्धगतीनां नियमस्तथा । प्रहेलिका च गूढं च च्युतकं चित्रमुच्यते ।।' इति वदन्त आलङ्कारिकाः स्थाननियमेषु ओष्ठस्थानकवर्णान्यवर्णविन्यासो निरोष्ठ्यनामकशब्दालङ्कार इत्याहुरित्यत्रापि 'उपूपध्मानीयानामोष्ठा'वित्योष्ठस्तानकवर्णान्यवर्णैरेव पद्यरचनादुक्तः शब्दालङ्कारो ज्ञातव्य इति भावः । तत इत्यादौ तत इत्यन्ते निबन्धनं च कविकाव्यपरिणतिरेव न तु लक्षणान्तर्गतम् । ओष्ठशब्दात् 'शरीरावयवाद्यत्' इति यत्प्रत्ययः । ओष्ठात्पृथक्कृतं निरोष्ठ्यमित्यर्थः । 'सुखप्राप्तावभावे च प्रादुरर्थे प्रथक्कृतौ । भेदनिग्रहकात्स्न्र्योपभोगादिषु निरीरित' इत्यमरशेषः। निर्गतमोष्ठ्यान्निरोष्ट्यमिति वा । रचितं च निरोष्ठ्यपद्यमलङ्कारमञ्जर्यां सुधीन्द्रश्रीचरणैः यथा– 'स जयति यतिचन्द्रः साहितीशास्त्रसान्द्रः सततगलिततन्द्रः सद्यशाः श्रीजयीन्द्रः । जहि हि निजजयाशां जाग्रदायासलेशां जडयदयि निदेशाज्जातहर्षा दिगीशा' इति ।। १ ।।

**अन्धकारितदेवारि तदेवारिमहारयम् ।**
**हारयन्निजया रुच्या जयारुच्यान्धकारितः ।। २ ।।**

**अन्धकारीति** ।। चक्रधृक् अन्धकारितः हरात् । 'विभाषे'ति योगविभागाद्धेतौ पञ्चमी । अन्धकस्यान्धकनामकासुरस्य अरितोऽरेर्महादेवस्य । जयारुच्या महादेवकर्तृके जयेऽरुच्यानुशयेनेति वा । महान्रयो वेगो यस्य तन्महारयम् । अन्धाः कारिता देवारयो दैत्या येन तदन्धकारितदेवारि यत्तेजसा । ततो भगवान् तदेव अरिं चक्रं निजया आत्मीयया रुच्या कान्त्या हारयन्नभिभावयन् सन् 'हृक्रोरन्यतरस्याम्' इति रुचिशब्दे कर्मत्वाभावात्तृतीया । रेज इति सम्बन्धः । अत्रालङ्कारमाह कविः– काञ्चीयमकमिति । अत्र पद्याद्यपादगतबहुवर्णानां पद्यान्तपादगतबहुवर्णरूपतया द्विरावर्तनात् आद्यपादान्त्यवर्णानां द्वितीयपादादिवर्णैर्बहुभिः प्रथमार्धान्त्यवर्णानां द्वितीयार्धाद्यवर्णैरेव तृतीयपादान्त्यवर्णानां तुरीयपादाद्यवर्णैरभेदेनोच्चारणाच्च काञ्चीयमकमित्यालङ्कारिकसमय इति भावेन काञ्चीयमकमित्युक्तम् । तथा च शुभोदयेऽपि नारायणपण्डिताचार्यैरुदाहृतम्– 'विभवोऽस्य हि विश्वस्य विश्वस्य वरदो रसः । वरदो रसमानस्य मानस्य विभवोऽस्य हि ।।' इति उक्तं च तत्रैव काञ्चीयमकमिति । यादवाभ्युदयेऽपि काञ्चीयमकमुदाहृतम्– 'नम्यते हयमिताविभूतये भूतयेश्वरतया विराजते । राजतेदृशतटीमहीयसे हीयसे न यदि नाम नम्यते'[1] ।। इति ।। २ ।।

---

१. यादवाभ्युदयव्याख्याने तु 'अत्र पादान्त्यभागानां पादान्तरादिषु यमकं शृङ्खलायमकं नाम' इति शृङ्खलायमकमित्युच्यते ।

**चापं चापन्नसन्त्राता सन्तधानोऽवनेऽवनेः ।**
**रोपारोपायसोद्योगः प्रभावप्रज्ययाज्यया ।। ३ ।।**

**चापमिति** ।। आपन्नसन्त्राता आपन्नानामापदं प्राप्तानां सन्त्राता प्रपालयिता । अवनेर्भूमेरवने रक्षणे सोद्योगः सप्रयत्नः । रोपाणां बाणानामारोपाय संयोजनाय 'पत्रीरो इषुर्द्वयोः' इत्यमरः । 'रुह बीजजन्मनि प्रादुर्भावे च' इत्यतो णिचि एरचि रुह चान्यतरस्यामिति नकारस्य पकारः । प्रभावप्राज्यया प्रभावेन प्रतापेन प्राज्यया प्रभूतया अतिसुदृढयेत्यर्थः । 'प्रतापमाहात्म्ययोः प्रभावः स्यात्' इति वैजयन्ती । 'प्रभूतं बहुलं प्राज्यम्' इत्यमरः । ज्यया मौर्व्या 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । चापं धनुः सन्दधानश्च स श्रीकृष्णः रेज इत्यन्वयः । अत्र छेकानुप्रासः शब्दालङ्कारः । 'भवेदव्यवधानेन द्वयोर्व्यञ्जनयुग्मयोः । आवृत्तिर्यत्र स बुधैश्छेकानुप्रास इष्यते' इति विद्यानाथेन छेकानुप्रासलक्षणमुक्तम् । उदाहृतं च– महीमहीनविभवे धत्ते क्षेमङ्करे करे' इति ।। ३ ।।

**पूर्णयोः कर्णयोस्तुल्यं शङ्कुसम्पातशङ्किभिः ।**
**बधिरैः शङ्खशब्देन वीक्षितो विश्वतोऽखिलैः ।। ४ ।।**

**पूर्णयोरिति** ।। शङ्खशब्देन पूर्णयोः परिपूरितयोः कर्णयोः तुल्यं यथा तथा शङ्कोः कीलस्य सम्पातः सम्पतनं संलग्नत्वं शङ्कितुं शीलमेषामिति शङ्कुसम्पातशङ्किनस्तैः । 'शङ्कुः पर्णसिराजाले स्थाणौ मेहनकीलयोः' इति दर्पणः । अत एव बधिरैः । अखिलैर्जनैः विश्वतः सर्वतो वीक्षितः रेज इति बधिरस्थितिवर्णनात्स्वभावोक्तिरलङ्कारः । वृत्त्यनुप्रासः शब्दालङ्कारश्च ।। ४ ।।

**नन्दकोज्ज्वलितो रेजे किरीटाङ्गदकुण्डलैः ।**
**श्यामो विद्युद्भिरुद्भिन्नो धृताशनिरिवाम्बुदः ॥ ५ ॥**

**नन्दक इति** ॥ चक्रधृक् कृष्णः । नन्दकेन तन्नामकखड्गेन उज्ज्वलितः प्रकाशितः नन्दकोज्ज्वलितः । किरीटेन अङ्गदेन केयूरेण कुण्डलाभ्यां कर्णभूषणाभ्यां च किरीटाङ्गदकुण्डलैः । लक्षित इति योज्यम् । धृतोऽशनिर्वज्रनिपातो येन स तथोक्तः । विद्युद्भिस्तटिद्भिरुद्भिन्नो विमिश्रितः । श्यामोऽम्बुदो मेघ इव रेजे 'राजृ दीप्तौ' लिट् । 'पुंस्त्रियोस्त्वशनिः पवौ । वज्रनिपातयोश्च' इति केशवः । उपमालङ्कारः । तत इत्यादिपञ्चश्लोकी कुलकं नाम काव्यम् । 'छन्दोभिर्यत्र पञ्चाद्यैर्वाक्यार्थस्तु समाप्यते । चतुर्दशान्तैः कुलकम्' इति वीरनारायणेन कुलकलक्षणमुक्तम् ॥ ५ ॥

**इत्थमुन्मीषितं तेजो वैष्णवं कृष्णनामतः ।**
**जन्मस्वनुष्ठितैर्धन्याः पुण्यैरवजगाहिरे ॥ ६ ॥**

**इत्थमिति** ॥ धन्याः सुकृतिनः । 'सुकृती पुण्यवान् धन्य' इत्यमरः । जन्मसु प्राचीनेष्विति शेषः । अनुष्ठितैराचीर्णैः पुण्यैः । कृष्णनामत उन्मीषितन्मुन्मीषितं प्रसिद्धमिति यावत् । वैष्णवं विष्णोरिदं तेजो धाम । इत्थं पूर्वोक्तप्रकारेण अवजगाहिरे गाहू विलोडने विषयीकृतवन्त इत्यर्थः ॥ ६ ॥

**तन्मयं तन्मनोदग्धकल्कशेषमुदञ्चलत् ।**
**हेमेव वह्निसंश्लिष्टमाश्लिष्टमुदरे हरेः ॥ ७ ॥**

**तन्मयमिति** ॥ तन्मयं भगवत्प्रचुरं तत् । प्रकृतवचने मयट् । अत एव दग्धः कल्कस्य एनसः । अन्यत्र शमलस्य शेषः अल्पभागोऽपि

यस्य तं तथा 'कल्कः स्याच्छमलैनसोः' इत्यमरः । तन्मनः तेषां धन्यानां मनश्चित्तम् । उदञ्चलत् उत्कृष्टमञ्चलं वस्त्रान्त इवाचरत् 'वस्त्रान्ते त्वञ्चलोऽस्त्रियाम्' इति शब्दरत्नाकरः । वह्नौ संश्लिष्टमग्नौ तप्तं वह्निसंश्लिष्टं हेम सुवर्णमिव । उदरे आश्लिष्टं सम्बद्धम् । धन्यानां मनः प्राधान्यात् उदरे तदुपलक्षितसर्वावयवे विग्रहे लग्नमिति भावः । केचित्तु इदं जगदिति पठित्वा तन्मयं भगवन्मयं तत् । तन्मनसा भगवन्निवेशितचित्तेन दग्धकल्कशेषमिदं जगत् धन्यजना वह्निसंश्लिष्टं हेमेव हरेरुदरे आश्लिष्टं हरेर्जगदुदरत्वात् । तस्य पुण्यैरवजगाहिरे इत्युक्तधन्यजनावगाहनकर्मत्वं नायुक्तमिति भाव इति व्याचक्षते । छेकानुप्रासः शब्दालङ्कारः ।। ७ ।।

**सुहृदं यादवा मृत्युमसुराः स्वामिनं सुराः ।**
**प्राकृताः कृष्णमीशानं मेनिरे मुनयः परम् ।। ८ ।।**

**सुहृदमिति** ।। यादवाः । कृष्णं सुहृदं मित्रं मेनिरे । असुरा मृत्युं मेनिरे । सुराः स्वामिनम् । प्राकृताः पृथग्जनाः 'प्राकृतश्च पृथग्जन' इत्यमरः । ईशानं प्रभुम् । 'ईशानः स्यात्प्रभौ' इति केशवः । मुनयस्तु परं परमात्मानं मेनिरे 'परोऽरिपरमात्मनोः' इति दर्पणः । बहुभिः कर्तृभिः सुहृत्त्वादिप्रकारैः एकस्य कृष्णस्य उल्लेखादुल्लेखालङ्कारः । 'बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते । स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि स ।।' इति चन्द्रालोके तल्लक्षणोदाहरणे अभिहिते ।। ८ ।।

एवं श्रीकृष्णः पण्डितैः पामरैश्च साक्षात्कृतोऽथेदानीं प्रद्युम्नं प्रत्यष्टादशश्लोक्या बाणासुरवाहिन्यादि बोधयितुमारभत इत्याह कविः–

**सन्दृश्य चित्रं तत्सैन्यं सेनान्यं चाजितं जयी ।**
**तेजश्चेशस्य निर्लक्ष्यं जगाद तनयं हरिः ।। ९ ।।**

**सन्दृश्येति** ।। जयी नित्ययोगे मत्वर्थ इनिः । जयतेस्ताच्छील्ये णिनिर्वा 'जिदृक्षी'ति स्मरणात् । हरिः श्रीकृष्णः चित्रमाश्चर्यभूतं कर्बुराभिख्यवर्णयुक्तं च 'चित्रं नपुंसकं पुण्ड्रे स्यादालेख्येऽप्यथ त्रिषु आश्चर्ये कर्बुराभिख्यवर्णयुक्त' इति केशवः । तत्सैन्यं बाणस्य सेनाम् । अजितं सेनान्यं सेनापतिं गुहमीशस्य शम्भोः । 'सेनानीरग्निभूर्गुहः । शम्भुरीशः पशुपतिः' इति चामरः । निर्लक्ष्यमविषयकमिति यावत् । तेजः प्रतापं च सन्दृश्य दृष्ट्वा तनयं पुत्रं प्रद्युम्नं जगाद । 'गद व्यक्तायां वाचि' लिट् । व्यक्तमुक्तवान् । प्रथमश्लोक इवात्रापि कविरेवालङ्कारमाह– 'निरोष्ठ्यम्' इति ।। ९ ।।

प्रद्युम्नं प्रति भगवदुक्तिप्रकारमेवाह–

**पश्य बाणम्बुवाहिन्यो भीरुतीरद्रुमद्रुहः ।**
**व्याकुलं बाणवाहिन्य आपतन्त्यापगा इव ।। १० ।।**

**पश्येति** ।। बाणा अम्बूनीव बाणाम्बूनि 'उपमितं व्याघ्रादिभिः' इति समासः । तानि ताच्छील्येन वहन्तीति वहतेर्णिनिः । बाणाम्बुवाहिन्यो भीरवः कातराः । बिभ्यतेः 'भियः क्रुक्लुकनौ' इति क्रुप्रत्ययः । भयवन्तस्तीदद्रुमास्तीरगतवृक्षा इवेति पूर्ववत्समासः । तान् द्रुह्यन्तीति भीरुतीरद्रुमद्रुहः । द्रुह जिघांसायामित्यतः 'सत्सूद्विषद्रुह–' इत्यादिना क्विप् । बाणवाहिन्यो बाणस्य सेनाः । 'ध्वजिनी वाहिनी सेना' इत्यमरः । आपगा नद्य इव 'स्रवन्ती निम्नगापगा' इत्यमरः । आकुलं कर्तव्यव्यापारमूढं यथा तथा आपतन्ति त्वं पश्येति सम्बन्धः ।। १० ।।

**अतिवेलोज्ज्वलैरस्त्रैरभिभूता इवोर्मिभिः ।**
**अस्तं गच्छन्ति चास्मासु प्रायशः सागरेष्विव ।। ११ ।।**

**अतिवेलेति** ।। बाणवाहिन्य इत्यन्वेति । अतिवेलमत्यर्थमुज्ज्वलैः प्रकाशमानैः । 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरा' इत्यमरः । अन्यत्र वेलातीरमतिवेलं यथा तथोज्जवलैरित्यर्थः । ऊर्मिभिस्तरङ्गैरिव विद्यमानैरस्त्रैरस्मत्प्रेरितैरभिभूता आपगाः सागरेष्विवास्मासु । अस्तमदर्शनं प्रायशो बाहुल्येन गच्छन्ति च । आपतन्तीत्युक्तक्रियासमुच्चयार्थश्चशब्दः । त्वं पश्येति सम्बन्धः । अनेकेवोपमालङ्कारोऽप्यस्तीति प्रागुक्तम् ।। ११ ।।

**अक्षता खुरविक्षेपैः क्षितिरस्पर्शनादिव ।**
**अहो लाघवमेतेषामश्वानां पततामिव ।। १२ ।।**

**अक्षतेति** ।। अश्वानां खुरविक्षेपैः खुराणां विन्यासैः । अस्पर्शनादिव क्षितिर्भूमिरक्षता अनुल्लिखिता । अस्पर्शनादिवेति हेतूत्प्रेक्षा । अत एव पततां पक्षिणामिव तेषां पुर उपलभ्यमानानामश्वानां लाघवमहो आश्चर्यम् । उत्तरार्धे उपमालङ्कारः । पश्येति सम्बन्धः ।। १२ ।।

**रथाङ्गनेमिपिष्टानां हैमानां धूलिरध्वनाम् ।**
**वायुना कुम्भिकुम्भेषु मदार्द्रेषूपबध्यते ।। १३ ।।**

**रथाङ्गेति** ।। रथाङ्गानां चक्राणां नेमिभिः प्रान्तभागैः पिष्टानां 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्' इत्यमरः । हैमानां हेमविकाराणामध्वनां मार्गाणां धूलिः । वायुना मदार्द्रेषु मदजलैः क्लिन्नेषु कुम्भिनां गजानां कुम्भेषु कुम्भप्रदेशेषु उपबध्यते । 'बध बन्धने' कर्मणि लट् ।। १३ ।।

**अतिपातितकालानामहम्पूर्विकया युधि ।**
**करालधारा यौधानामुद्धूयन्ते महासयः ।। १४ ।।**

**अतिपातितेति** ।। अतिपातितो निवारितः कालोऽन्तको यैस्ते अतिपातितकालास्तेषाम् । अहम्पूर्विकया अहम्पूर्वमिति 'सुप्सुपे'ति समासः । स्वार्थे कन् अहं पूर्वमस्म्यस्यामित्यर्थे ठन्वेति । 'अहम्पूर्वमहम्पूर्वमित्यहम्पूविका स्त्रियाम्' इत्यत्रामरे व्याख्याता । 'अहम्पूर्वमहम्पूर्वमित्यहम्पूर्विका कृतिः' इति शब्दरत्नाकरः । यौधानां योद्धृणां पदातीनां कराला भीषणा धारा मुखानि येषां ते करालधाराः । 'धारा प्रवाहे नद्यादेः सैन्याग्रे द्रवसन्ततौ । वाचि शस्त्रमुख' इति केशवः । महासयो महाखड्गा युधि युद्धे उद्धूयन्ते प्रकम्प्यन्ते धूञ् कम्पने कर्मणि लट् पश्य ।। १४ ।।

**अमी पृथुतराकारा मदशीकरशीतलाः ।**
**सिन्दूरनिकषस्निग्धविद्युदादीप्तमस्तकाः ।। १५ ।।**

**अमीति** ।। पृथुतराकाराः पृथुतर आकारो येषां ते मदा एव शीकरा जलकणास्तैः शीतलाः । सिन्दूराणां रक्तचूर्णानां 'सिन्दूरं रक्तचूर्णकम्' इत्यभिधानम् । निकषोऽनुलेपनं स एव स्निग्धविद्युत् सोन्मेषचपला तया आदीप्तः प्रकाशितो मस्तको मूर्धा येषां ते निकषस्निग्धविद्युदादीप्तमस्तकाः । 'स्निग्धः सुहृदि मन्त्रिणि । घनीभावे च सोन्मेष' इति दर्पणः ।।१५।।

**निर्भासन्तां तरस्वन्तो मत्तदन्तिबलाहकाः ।**
**तार्क्ष्यपक्षोदितो यावत् प्रतीपयति नानिलः ।। १६ ।।**

**निर्भासन्तामिति** ।। तरस्वन्तो वेगबन्धवन्तः सर्वत्र मतुप् समुच्चीयत इति वृत्तिकारवचनात् 'अयस्मायामेधे'ति विनिर्नकृतः । मत्तदन्तिन एव बलाहका मेघाः । 'अभ्रं मेघो वारिवाहस्तनयित्नुर्बलाहक' इत्यमरः । तार्क्ष्यस्य गरुडस्य पक्षाभ्यामुदित उद्गतस्तार्क्ष्यपक्षोदितोऽनिलो वायुर्यावन्न

प्रतीपयति प्रतीपं विरोधं करोतीति णिच् । तावन्निर्भासन्ताम् । नितरां दीप्यन्तां नाम । इति श्लोकद्वयमेकार्थत्वात् सन्दानितकं नाम काव्यम् । पश्य ।। १६ ।।

**कृतागसमिमं धीमान् धर्मतत्वपरीक्षया ।**
**निवारयति कुम्भाण्डो नूनं बाणं रणार्थिनम् ।। १७ ।।**

**कृतागसमिति** ।। धीमान् कुम्भाण्डः कुम्भाण्डनामा बाणामात्यः कृतमागोऽपराधोऽनिरुद्धबन्दीग्रहणलक्षणः स कृतागास्तं नूनं रणार्थिनं रणो युद्धं तं ताच्छील्येनार्थयत इति रणार्थी तं बाणम् । धर्मतत्वस्य धर्म-स्वरूपस्य परीक्षया विवेकेन निवारयति । अस्मानभिधावन्तमिति शेषः । रणादिति वा । पश्येत्यन्वयः ।। १७ ।।

**ऐश्वर्यादप्रतीकाराद्वीर्यादार्यासुतेशयोः ।**
**तारुण्याच्चापराद्दृप्तौ न विजानात्युपस्थितम् ।। १८ ।।**

**ऐश्वर्यादिति** ।। अप्रतीकारात् न विद्यते प्रतीकारः प्रतिक्रिया यस्य तत्तथा तस्मादैश्वर्यात् । सुतः षण्मुखः ईशः स्वामी च तयोः सुतेशयोः आर्याया गौर्याः सुतेशयोः । वीर्यात् पराक्रमात् । 'वीर्यं पराक्रमे रेतस्यन्न-माहात्म्ययोरपी'ति वैजयन्ती । अपरात्प्रत्यग्रात्तारुण्याद्यौव्वनाच्च दृप्तो बाण इति शेषः । उपस्थितं कार्यमिति शेषः न जानाति 'ज्ञा अवबोधने' लट् । पश्य ।। १८ ।।

**अवतारान्तरे यस्य निरभेदि नखैरुरः ।**
**हिरण्यकशिपोस्तस्य प्रह्लादो मत्परः सुतः ।। १९ ।।**

**अवेति** ।। अवतारान्तरेऽन्योऽवतारोऽवतारान्तरम् । मयूरव्यंसकादिलक्षणः समासः । तस्मिन् नृसिंहावतारे । अवतारशब्दश्च प्रथमसर्गे 'पद्मनाभोऽवतारोऽयम्' इत्यत्र समर्थितः । यस्योरः वक्ष्यस्थलं नखैर्निरभेदि निष्पूर्वाद् भिदिर् विदारण इत्यतः कर्मणि । लुङ् । निर्भिन्नम् । तस्य हिरण्यकशिपोः सुतः प्रह्लादो मत्परः अहं परो मुख्यो यस्य स मत्परो मद्भक्त आसीदिति शेषः । 'परो दूरान्यमुख्येषु परोऽरिपरमात्मनोः' इति यादवः ।। १९ ।।

**तस्य पौत्रो बलिः स्वर्गान्न चान्येनाप विच्युतिम् ।**
**सहस्रबाहोस्तत्सूनोः सुकरो मे पराभवः ।। २० ।।**

**तस्येति** ।। तस्य प्रह्लादस्य पौत्रो बलिः । अन्येन प्रस्तावान्मदन्येन स्वर्गाद् विच्युतिं विभ्रंशं नाप । न प्राप्तवान् । मयैव वामनावतारे प्रह्लादपौत्रो बलिरपि स्वर्गात्प्रच्यावित इत्यर्थः । तत्सूनोर्बलिसुतस्य सहस्रं बाहवो यस्य सहस्रबाहुस्तस्य बाणस्य पराभवोऽवज्ञा 'पराभवस्त्ववज्ञायां वर्षभेदविनाशयोः' इति दर्पणः । मे मम सुकरः बाणासुरतिरस्कारो मया सुखेन करणीय इत्यर्थः । म इति शेषषष्ठी । तेन 'न लोकाव्यये'ति प्रतिषेधात् कथमत्र षष्ठीति चोद्यं निरस्तम् । कारकषष्ठ्या एव प्रतिषेध इति वैय्याकरणसमयात् । अवतार इत्यादिद्विश्लोकी सन्दानितकं नाम काव्यम् ।। २० ।।

**पाणिना विधृता मा भूच्छक्तिः प्राणभृता यथा ।**
**अत्याशङ्कापदं नैकजन्मनः शरजन्मनः ।। २१ ।।**

**पाणिनेति** ।। नैकजन्मनः नैकमनेकं जन्म यस्य सः नैकजन्मा तस्य ।

अनेकजन्मत्वं च 'तं कार्तिकेयं गाङ्गेयमाग्नेयं च प्रचक्षते' इत्यादिशास्त्रसिद्धम् । नसमासोऽयं तेन न नुट् । शरेषु जन्म यस्य सः शरजन्मा तस्य षण्मुखस्य प्राणभृता शक्तिः सामर्थ्यमिव पाणिना विधृता शक्तिः कासुः 'कासुसामर्थ्ययोः शक्तिः' इत्यमरः । आयुधविशेषः । अत्याशङ्कापदमत्यर्थभयस्थानम् । 'शङ्का तु वितर्के साध्वसेऽपि च' इति कविदर्पणः । मा भूत् भवतेर्लुङ् न भवेदित्यर्थः ।। २१ ।।

**अविजित्य हरः शत्रून् भक्तं न त्रातुमर्हति ।**
**अपाक्रियायां चास्मासु किमैश्वर्यं महेश्वरे ।। २२ ।।**

**अविजित्येति** ।। हरः शत्रूनविजित्य भक्तं बाणं त्रातुं रक्षितुं नार्हति । अस्मासु शत्रुबुद्ध्या अपाक्रियायां कृतायामपाकरणे कृते च महेश्वरे ऐश्वर्यं किं न किमपि । शत्रुबुद्ध्या अस्मांश्चेदवजानाति । तदा तस्य ऐश्वरं कुतः स्यात् । 'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वेर्तिरश्विना विरावत्' इति तदैश्वर्यस्य मदनुग्रहायत्तत्वादिति भावः ।। २२ ।।

ननु किमैश्वर्यं महेश्वर इति महामान उक्तः । स कथं त्वयि उन्नम्रो युक्तः स्यादित्यतः सहजत्वाद्युक्त इत्याह–

**मानो मम नमेन्नाम नामुनोमानुनामिना ।**
**मामानि मानिना मेनो मानिनीमाननोऽमनाः ।। २३ ।।**

**मान इति** ।। मानः । मम । नमेत् । नाम । न । अमुना । उमानुनामिना । मा । मानि । मानिना । मेन । उ । मानिनीमाननः । अमनाः । इति पदच्छेदः । मम मानश्चित्तसमुन्नतिः । न नमोन्नाम । उ एव ।

उमानुनामिना उमामनुनामयतिताच्छील्येनेति उमानुनामी तेन । मानिना अहङ्कारवता अमुना मेन शङ्करेण । अमनाः न विद्यते मनो यस्य स तथा । मानिनी गोपीः मानयतीति मानिनीमाननः मा मानि मानितो माभून्नामेति मम मानः परेष्वनम्रः तैरनादृतोऽपि शिवाद्यैश्वर्यदातुर्भूषणमेवेति भावः । केचित्तु नोऽस्माकं मा लक्ष्मीर्जयश्रीः मम नमेत् । शेषे षष्ठी ममेति । नाम प्राकाश्ये । अमुना उमानुनामिना मानिना मेन पूर्ववदर्थः । उ इति सन्बोधनद्योतकमव्ययम् । मानन चन्द्रवदनेति प्रद्युम्नं प्रतिवचनम् । मानिनी स्त्री प्रकृतत्वाज्जयश्रीः मा मानि मानिता माभूत् । कुतः । यतः उमनाः औ शम्भौ मनो यस्याः सा उमनाः न शम्भुलग्नचित्ता न भवतीत्यर्थ इत्याहुः । अस्मिन् पक्षे पदविभागस्तु मानः । मम । नमेत् । नाम । न । अमुना । उमानुनामिना । मा । मानि । मानिना । मेन । उ मानिनी । मानन । उमनाः । इति । 'मः शम्भौ दातरीन्द्रौ ने'ति 'उकारः क्षेत्रपे क्षेत्रे हरमौलौ हरे हरौ' इति च विश्वः । इ उ इति सम्बोधनेऽव्ययमिति वैय्याकरणाः स्वरादौ पठन्ति । तथा कालिदासः– 'उ मेति मात्रातपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम' इति ।।२३।।

**नो मामनुममेऽनूनं मैन्मोनिनममानिनी ।**
**नेमां नूनममां नौमि मन्नामामननाननाम् ।। २४ ।।**

**नो इति** ।। छेदस्तु नो । माम् । अनुममे । अनूनम् । मा । ऐत् । मा । ऊनिनम् । अमानिनी । न । इमाम् । नूनम् । अमाम् । नौमि । मन्नामामननाननाम् इति । किं च मा लक्ष्मीः अनूनं परिपूर्णं माम् । नो अनुममे न परिच्छिन्नतया प्राप्तवतीति यावत् । सा अमानिनी अन्यत्राबहुमानवती सती । ऊनिनमूनवन्तमपरिपूर्णं मैत् 'इण् गतौ' इत्यतो

लङ् नागच्छत् । माशब्दोऽयं न माङ् । अमां परिच्छेदरहिताम् । मन्नाम्नां कृष्णरामगोविन्दादीनामामननमभ्यासः असकृदुच्चारणमेव अननं जीवनं यस्याः सा तामिमां मां लक्ष्मीं न नौमि न स्तौमि नूनं निश्चयः । परिपूर्णे मय्येवानुरागवती । अत एवापरिपूर्णे शङ्करे अदत्तपदचित्ता सती मामेव स्तुवन्ती वर्तते । तामेनां नाहं नौमि । तस्यास्तत्स्वाभाव्यादिति भावः । अत्र श्लोकद्वयेऽपि द्व्यक्षरीनियमलक्षणं चित्रं नाम शब्दालङ्कारः ।।२४।।

**भासुरा समरानर्थ्या सासुराश्च वरानया ।**
**यानरावपरासत्या[१] कानरासमरासभा ।। २५ ।।**

**भासुरेति** ।। भासुरा । समरानर्थ्या । सा । असुराः । च । वरानया । यानरावपरा । असत्या । कानरा । असमरासभा इति पदच्छेदः । समरानर्थ्या समरे युद्धे अनर्थ्या अनपेक्ष्या । असुराः अशोभना राः धनं यस्याः सा असुराः । वरोऽत्युत्कृष्टोऽनयोऽन्यायो यस्याः सा वरानया अत्युत्कृष्टानीति शालिनी । यानरावपरा । यानानामश्वमातङ्गादीनां रवाणां ध्वनीनां समूहो रावं तत्परा गजाश्वादिबृंहितहेषारवादिश्रवणलम्बटेत्यर्थः । सत्सु साधुस्सत्या सा न भवतीत्यसत्या । न सत्यं सत्यवचनं यस्याः सा तथेति वा । कानरा ईषदर्थे चेति कोः कादेशः । अत्र 'तत्पुरुष' इति नानुवर्तते । 'का पथ्यक्षयोः' इति सूत्रे मञ्जर्यादौ तथा सूचनात् कठोरभटोपेता । असमरासभा असमा असदृशाः श्रेष्ठाः रासभा अश्वतराः खरा वा यस्याः सा तथा । सा प्रसिद्धा । एतादृशी सेनेति वक्ष्यमाण-मत्राप्याकृष्यते भासुरा भासमाना लक्ष्यत इति शेषः । सासुराश्ववरानया । यानरावपराऽसह्येति पाठे सासुराश्ववरा असुरैरश्ववरैश्च सहिता असुरैः

१. 'यानरावपराऽसह्य' इति पाठान्तरम् ।

सादिरूपैः सहिताः सासुराः सासुरा अश्ववरा यस्यां सा तथेति वा । रावमुद्घोषस्तत्परा या सेना । असह्या सोढुं शक्या न भवतीत्यसह्या सेयं सेनेति वक्ष्यमाणेनान्वयः । अन्यत्पूर्ववत् । अत्र कविरेव शब्दालङ्कारं दर्शयति– मुरजबन्ध इति । मुरजे मुरजशब्दितवाद्यविशेषाकृतौ बन्धो विन्यासो यस्य श्लोकस्य स मुरजबन्धः । चित्रं काव्यमित्यर्थः । तदुद्धार-प्रकारस्तु– तिर्यक् पञ्चरेखा ऊर्ध्वं नवरेखाश्च विलिखेत् । द्वात्रिंशद्गृहा भवन्ति । तत्र वीथीचतुष्टयेऽनुष्टुभः पादचतुष्टयं क्रमाद्विलिख्य प्रथमपङ्क्तौ प्रथमं वर्णम् । द्वितीयायां द्वितीयम् । तृतीयायां तृतीयम् । तुरीयायां चतुर्थपञ्चमौ । तृतीयायां षष्ठम् । द्वितीयायां सप्तमम् । प्रथमायामष्टमं च वर्णं लिखेत् । प्रथमः पादः पठितो भवति । उक्तेष्वेव वर्णेषु पाठक्रमेण एका रेखा लेखनीया सा प्रथमा वध्री । एवं द्वितीयायां प्रथमं प्रथमायां द्वितीयं तृतीयं द्वितीयतृतीययोश्चतुर्थद्वयं चतुर्थ्यां पङ्क्तौ तृतीयद्वितीयौ तृतीयायां प्रथमं च वर्णं पठेत् । द्वितीयः पादो भवति । एतेष्वेव वर्णेषु संवेष्ट्यैका रेखा लेखनीया । तदेकं मुखं भवति । द्वितीयायामष्टमं प्रथमायां सप्तमषष्ठौ द्वितीयायां पञ्चमौ तृतीयायामपि पञ्चमं चतुर्थ्यां पङ्क्तौ षष्ठ्यां तस्यामेव सप्तमं तृतीयायामष्टमं च वर्णं पठेत् तृतीयः पादो लक्ष्यते । तत्राप्येका रेखा लेखनीया तदन्यन्मुखं भवति । चतुर्थ्यां प्रथमं तृतीयस्यां द्वितीयं द्वितीयस्यां तृतीयं प्रथमायां चतुर्थं तस्यामेव पञ्चमं द्वितीयस्यां षष्ठं तृतीयस्यां सप्तं चतुर्थ्यां पङ्क्तावष्टमं च वर्णं पठेत् । तुरीयः पादो भवति । उक्तेष्वेव वर्णेषु पाठक्रमादपरा रेखा लेखनीया । सा द्वितीया वध्री भवति । तथा प्रथमायां प्रथमं द्वितीयायां द्वितीयतृतीयौ पुनः प्रथमायां चतुर्थपञ्चमौ पुनर्द्वितीयायां षष्ठसप्तमौ पुनः प्रथमायां पङ्क्तावष्टमं च वर्णं लिखेत् । एवमपि प्रथमः पादो भवति । द्वितीयायां पङ्क्तौ प्रथमं प्रथमायां

द्वितीयतृतीयौ पुनर्द्वितीयायां चतुर्थपञ्चमौ पुनः प्रथमायां षष्ठसप्तमौ द्वितीयायामष्टमं च वर्णं पठेत् । द्वितीयः पादो भवति । तृतीयायां पङ्क्तौ प्रथमं चतुर्थ्यां प्रथमं तृतीयायां द्वितीयतृतीयौ पुनश्चतुर्थ्यां चतुर्थपञ्चमौ पुनस्तृतीयायां षष्ठसप्तमौ पुनश्चतुर्थ्यामष्टमं च वर्णं पठेत् । चतुर्थः पादो भवति । तथाऽन्योऽपि वाचनप्रकारो विच्छित्तिविशेषशाली शक्यत ऊहितुम् । तथाहि– प्रथमपादो यथाक्रमं पठनीयः । द्वितीयपङ्क्तौ प्रथमवर्णादारभ्य चतुरो वर्णानानुलोम्येन पठित्वा तृतीयपङ्क्तौ चतुर्थवर्णादारभ्य प्रातिलोम्येन पठने द्वितीयः पादो भवति । द्वितीयपङ्क्तावष्टमवर्णादारभ्य प्रातिलोम्येन चतुरो वर्णान् पठित्वा तृतीयपङ्क्तौ पञ्चमवर्णादारभ्यानुलोम्येन पठने तृतीयः पादो लक्ष्यते । तुरीयस्तु यथास्थानं यथा क्रमं पठनीय इति । एवमेव विच्छित्तिविशेषशाली उक्तः सर्वोऽपि वाचनप्रकारो द्रष्टव्यः । वाचनप्रकार-विशेषोऽप्यस्ति । तथा च नारायणपण्डिताचार्यकृते शुभोदयकाव्ये– ‘सा रामा परमा रम्या सा रामा परमारदा । दारमाररमायत्ते या रमा परमायया ।।’ इति मुरजबन्धः । दारमाररमायत्त इति तृतीयपादे तुरीयवर्णं रेफमपठित्वा तत्र पकारपठने वाचनप्रकारः प्रथमपादाद्यवर्णद्वयस्य द्वितीयपादतृतीयवर्णस्य प्रथमपादतुरीयवर्णस्य द्वितीयपादपञ्चमवर्णस्य प्रथमपादषष्ठवर्णस्य द्वितीयपादसप्तमवर्णस्य आद्यपादान्त्यवर्णस्य च पाठे प्रथमः पादो भवति । एवं द्वितीयपादे प्रथमद्वितीयवर्णयोः । प्रथमपादे तृतीयवर्णस्य द्वितीयपादे चतुर्थवर्णस्य प्रथमपादे पञ्चमवर्णस्य द्वितीयपादे षष्ठवर्णस्य प्रथमपादे सप्तमवर्णस्य द्वितीयपादेऽष्टमवर्णस्य च पाठे द्वितीयः पादो भवति । एवं तृतीयपादे आद्यवर्णद्वयस्य चतुर्थपादे तृतीयवर्णस्य तृतीयपादे चतुर्थवर्णस्य तुरीयपादे पञ्चमवर्णस्य तृतीयपादे षष्ठवर्णस्य

चतुर्थपाये सप्तमवर्णस्य तृतीयपदेऽष्टमवर्णस्य च पाठे तृतीयपादो लक्ष्यते । एवं तुरीयपादाद्यवर्णद्वयस्य तृतीयपादे तृतीयवर्णस्य तुरीयपादे चतुर्थवर्णस्य तृतीयपादे पञ्मवर्णस्य तुरीयपादे षष्ठवर्णस्य तृतीयपादे सप्तमवर्णस्य तुरीयपादेऽष्टमवर्णस्य पाठे चतुर्थः पादो लक्ष्यते । तथा वाचनप्रकारान्तरमपि प्रथमपादे प्रथमं द्वितीयपादे द्वितीयं प्रथमपादे तृतीयं द्वितीयपादे चतुर्थं प्रथमपादे पञ्चमं द्वितीयपादे षष्ठं च पठित्वा प्रथमपादे सप्तमाष्टमौ वर्णौ नैरन्तर्येण पठेत् प्रथमः पादो भवति । एवं द्वितीयतृतीयचतुर्थपङ्क्तिषु एकान्तरितवर्णानां षष्ठं पठित्वा तास्वेव पङ्क्तिषु सप्तमाष्टमौ नैरन्तर्येण पठेत् पादत्रयं लक्ष्यते । अत्रैव वचनान्तरमप्यस्ति । आद्यपादे वर्णद्वयमाद्यं द्वितीयपादे तृतीयतुरीयौ प्रथमपादे पञ्चमं द्वितीयपादे षष्ठसप्तमौ आद्यपादेऽष्टमवर्णं च पठेत् आद्यः पादो भवति । एवं द्वितीयतृतीयतुरीयपङ्क्तिषु द्वयं द्वयमेकं द्वयमेकं च पठेत् । पादत्रयमपि निष्पाद्यते । यदाहुः 'द्वयं द्वितीयमेकं च द्वयमेकं पठेत्सुधीः' इति । एवं वर्णत्रयमादौ पठित्वा द्वितीयपङ्क्तौ तुरीयपञ्चमषष्ठवर्णांश्च पठित्वा प्रथमपादान्त्यवर्णद्वयं नैरन्तर्येण पठेत् आद्यपादो भवति । एवं द्वितीयादावपि पठने पादत्रयं भवति । द्वयमेकं द्वयं द्वैतकमित्यादिवा पठेत् । इत्यादिकं बुद्धिमद्भिरूहनीयम् । या लक्ष्मीस्त्वदिच्छया मां पुत्रं लब्धवती । सा रमा तव मान्या । रामा तव रम्या भार्या इति श्लोकस्यार्थनिष्कर्षः ।। २५ ।।

**सेयं सेना हिमानीव शीर्यते सूर्यरश्मिभिः ।**
**उत्पतत्प्रदरार्चिष्मन्निकरप्रसरैरितः ।। २६ ।।**

**सेयमिति** ।। सूर्यरश्मिभिर्हिमानीव महद्धिममिव 'हिमानी हिमसंहतिः' । हिमारण्ययोर्महत्वे इत्यानुक् ङीष् च सेयं बाणासुरवाहिनी उत्पतन्त

उद्गच्छन्तः ये प्रदरा बाणास्त एवार्चिष्मन्तो ज्वलनास्तेषां निकराः समूहाः तेषां प्रसरैर्व्यापनैः । इतो रणमण्डलात् शीर्यते 'शॄ हिंसायां' विशीर्यते पलायमाना क्रियते । 'सायकः प्रदरः काण्ड' इत्यमरः । 'ज्वलदर्चिरर्चिष्मदाश्रयाशधनञ्जया' इति शब्दरत्नाकरः ॥ २६ ॥

**इति विद्विषतां वीर्यं लघूकृत्योपवर्णनम् ।**
**मेने शङ्कितमात्मानमुत्तम्भयितुमङ्गजः ॥ २७ ॥**

**इतीति** ॥ अङ्गजः प्रद्युम्नः । 'पुत्रोवाथाङ्गजः कामे प्राणादौ तनये रुजी'ति रत्नाकरः । इत्युक्तप्रकारेण विद्विषतां शत्रूणां वीर्यं पराक्रमं लघूकृत्य अल्पीकृत्य । उपवर्णनं कर्म । शङ्कितं सञ्जातभयं शङ्काशब्दात्तारकादिलक्षण इतच् । 'शङ्का वितर्कभययोः' इति केशवः । आत्मानं स्वात्मानम् उत्तम्भयितुमुत्तेजयितुं मेने । 'मनु अवबोधने' लिट् अवबुद्धवान् । कृष्णेन कृतं शत्रुवीर्यस्याल्पीकरणेन वर्णनं स्वात्मभयपरिजिहीर्षयैव न तु लोकदृष्ट्यापि शत्रुपराक्रमोऽल्प इत्यवबुध्यतेति भावः । मकारस्य चासकृदावृत्तेर्वृत्त्यनुप्रासः शब्दालङ्कारः ॥ २७ ॥

**विगतो विनयात् पित्रोः संरम्भात्प्रियसाहसः ।**
**मन्युना दीपितः शत्रून् वीरान् वीक्ष्याब्रवीदिदम् ॥ २८ ॥**

**विगत इति** ॥ अङ्गज इत्यनुवर्तते । प्रद्युम्नः पित्रोः कृष्णरामयोः संरम्भात् क्रोधात् 'संरम्भः पुनराटोपे क्रोध' इति केशवः । विनयाच्छमात् उपशान्तेः 'विनयस्तु शमे भवेत्' इति केशवः । विगतो विनिर्गतः विगतोपशम इत्यर्थः । प्रियं साहसं वीरकर्म यस्य स प्रियसाहसः 'साहसं वीरकर्मणि । अनालोचितकार्येऽपि सहसैव कृतेऽपि च' इति दर्पणः ।

वीरान् शत्रून् वीक्ष्य मन्युना कोपेन दीपितः प्रज्वलितः स च सन् । इदं वक्ष्यमाणमब्रवीत् । 'ब्रूञ् व्यक्तायां वाचि' इत्यतो लङ् ।। २८ ।।

अब्रवीदित्युक्तं विशदमाह–

**आनन्दाद्वैतबोधस्य शृणुमो देव ते वयम् ।**
**तिष्ठतस्तपसः पारे लीलां लोकेऽनुरुध्यते ।। २९ ।।**

**आनन्देति** ।। हे देव । द्वयोर्भावो द्विता तस्या अयं द्वैतः भिन्नः स न भवतीत्यद्वैतः आनन्देनाद्वैत आनन्दाद्वैतः बोधो ज्ञानं यस्य स आनन्दाद्वैतबोधः आनन्दैकरसज्ञानात्मकः तस्य । तमसः प्रकृतेः पारे परस्तात् तिष्ठतोऽतिक्रान्तप्रकृतेरित्यर्थः । ते तव लीलां लोकोऽनुरुध्यते । 'अनो रुधकामे' इति दैवादिकस्य धातोः कर्तरि लट् । काङ्क्षतीत्यर्थः । तत इति शेषः । वयं शृणुमः 'श्रु श्रवणे' लट् । श्रुवः श्रु च' इति श्नुप्रत्ययः । शृभावश्च ।। २९ ।।

**इच्छाविलसितं यस्य शत्रुमित्रादिभेदधीः ।**
**तस्य ते विजयस्तात ऐश्वर्यं वितरिष्यति ।। ३० ।।**

**इच्छेति** ।। यस्य शत्रुमित्रादिभेदधीः असौ शत्रुरयं मित्रमेष उदासीन इत्यादिभेदबुद्धिरिच्छाविलसितं भावे निष्ठा इच्छाविलासः तस्य ते विजयः प्रतिपक्षपराभवे प्राप्तोत्कर्षलाभः तातः अनुग्राह्यः सन् ऐश्वर्यं वितरिष्यति विस्तरिष्यति । 'तातः पितर्यनुग्राह्य' इति दर्पणः । च्छापरिकल्पितमित्रा-मित्रादिभेदधियस्तव अमित्रविजयस्त्वया अनुलालित एव चेत् ऐश्वर्यं लोक-दृष्ट्यापि सम्पादयिष्यतीति भावः । केचित्तु हे तातेति सम्बुद्ध्यन्तं नैश्वर्यं वितरिष्यतीति पठित्वा सर्वदा सर्वजयिनस्तवेदानीं शत्रुविजय ऐश्वर्यं न

वितरिष्यति अतिफल्गुतया तस्य त्वदैश्वर्यप्रकाशकत्वायोगादिति भावः । इति व्याचक्षते ।। ३० ।।

**भावं करोषि वाभावं यया विश्वस्य मायया ।**
**शात्रवाणामनीशात्र भवेत्सा किं पराभवे ।। ३१ ।।**

**भावमिति** ।। हे देव त्वं यया मायया इच्छया । विश्वस्य भावं सत्तामभावमसत्तां च विनाशमिति यावत् । करोषि । सा माया अत्र समरे शात्रवाणां शत्रूणां 'दस्युशात्रवशात्रव' इत्यमरः । पराभवे पराजयापादने अनीशा असमर्था भवेत्किमित्याक्षेपः । समर्थैव । मायया जगत्सत्तासंहारौ कुर्वतस्तव शत्रुपराभवविषये असामर्थ्येन स्वपिति किं जागर्त्येवेति भावः । अत्र कविरलङ्कारमाह– पादाद्यन्तयमकमिति । पादादौ पादान्ते च भावं भावमिति यया ययेति शात्रशात्रेति भवे भव इति च वर्णद्वयं यम्यत इति भवति पादाद्यन्तयमकं शब्दालङ्कारः । यद्यपि 'अनर्थका वा भिन्नार्थाः सार्थकानर्थकाश्च वा । आवर्त्यन्ते क्रमाद्वर्णा यदा स्याद्यमकं तदे'ति यमकलक्षणे वर्णा इति बहुवचनात् साच्कबहुवर्णानामावृत्तिर्यमकमित्यभिप्रेतम् । तथाचोक्तमलङ्कारमञ्जर्याम्– 'यमकं बहुवर्णानां साच्कानां द्विः समीरणम्' इति । उदाहृतं च– 'मनोभवाधीनमनो नमनागपि यद्भुवी'ति अत्र च बहुवर्णावृत्तिर्दृश्यते । तथापि काव्यदर्पणे वर्णा इति बहुवचनमविवक्षितम् । तेन 'स्मर स्मरहरं हरम्' इत्यत्र न यमकत्वक्षतिः । न चैवमनर्थकावेत्यादिलक्षणाननुगम इति वाच्यम् । उक्तविधान्यतमविधावद्वर्णावृत्तिर्यमकमिति लक्षणानुगमसम्भवात् इत्येके । एकार्थकत्वभिन्नशब्दावृत्तिर्यमकम् । एकार्थत्वभेदश्च निरर्थकेषु भिन्नार्थकेषु सार्थकानर्थकेषु च वर्णेष्वविशिष्टमिति नानुगम इत्यन्य इत्यादिकं

प्रपञ्चेनोक्तमिति सर्वं तत्रानुसन्धेयमिति भवतीदं यमकम् । न चैवं 'चापं चापन्नसन्त्राता' इत्यत्रापि तृतीयश्लोके यमकवत्वं स्यादिति वाच्यम् । 'छेकानुप्रासनामासौ द्विर्व्यञ्जनयुगोक्तितः' इति विद्यानाथसमयानुसारेण छेकानुप्रासस्यैव समाश्रयणात् । अत एव साहित्यरत्नाकरे 'राजराजसमैश्वर्यः शास्त्रभासुरधीरधीः । राजराजद्दिशा रेजे रामो दाशरथी रथी'ति श्लोके छेकानुप्रासत्वमेवाङ्गीकृतमिति दिक् ॥ ३१ ॥

प्रद्युम्न इयता श्रीकृष्णमहिमानमभिधाय प्रलम्बघ्नप्रभावमभिधत्ते–

**यस्योच्छ्वासास्रवात्सर्वमुज्ज्वलिष्यति रुष्यतः ।**
**सहस्रशिरसः सोऽयमनन्तस्त्वदनन्तरः ॥ ३२ ॥**

**यस्येति** ॥ सहस्रं शिरांसि यस्य सहस्रशिरास्तस्य रुष्यतः क्रुध्यतः यस्यानन्तस्य उच्छ्वासास्रवात् उच्छ्वासानामास्रवात् प्रसरणात् सर्वं विश्वमुज्ज्वलिष्यति उज्ज्वलनं दहनं प्राप्स्यति 'ज्वल दीप्तौ' लृट् । सोऽयमनन्तस्त्वदनन्तरः त्वदव्यवहितः । 'हलोऽनन्तराः संयोग' इत्यत्रानन्तरशब्दस्याव्यवहितार्थत्वेन व्याकरणात् । गरुडे त्वदव्यवहितदेशे वर्तत इत्यर्थः । यद्वा त्वमन्तरोऽव्यवहितोऽनुजो यस्य सः त्वदग्रज इत्यर्थः । विद्यत इति शेषः ॥ ३२ ॥

तमेव विशिनष्टि–

**मत्तो गज इव क्षुब्धः क्रुद्धः सिंह इवौजसा ।**
**वेलाब्धिरिव गम्भीरो ग्रीष्माग्निरिव तापनः ॥ ३३ ॥**

**मत्त इति** ॥ मत्तो मदं प्राप्तो गज इव क्षुब्धः क्षोभं सञ्चलनं प्राप्तः शत्रुविषयसम्मर्दे संविग्न इत्यर्थः । यद्यपि– 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्ट-

विरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु' इति सूत्रे मन्थेऽर्थ एव क्षुभधातोः क्तप्रत्यये अनिट्त्वं निपातितम् । तथापि 'क्षुब्धो राजे'त्यादि प्रयोगात् आगमशासनस्यानित्यत्वाच्च अर्थान्तरेऽपि नेट् । 'क्षुब्ध इत्युपमानात्' इति वृत्तिकार इति षष्ठे प्रागुक्तमेव । ओजसा वलेन 'ओजो गर्वप्रकाशयोः । अवष्टम्भे बले' इति दर्पणः । सिंह इव क्रुद्धः । वेलाब्धिरिव कालसमुद्र इव 'वेलाम्बुधेस्तीरवृद्ध्योः कालमर्यादयोरपी'ति दर्पणः । गम्भीरो निम्नः अगाधहृदय इत्यर्थः । वेलया वृद्ध्या युक्तः । समुद्रो वेलाब्धिः समुद्रोऽपि संक्षोभादिविकारहीन इत्यर्थः । ग्रीष्माग्नि-र्ग्रीष्मकाले भवोऽग्निरिव तापयति सन्तापयतीति तापनः । नन्द्यादि-त्वात्कर्तरि ल्युः । प्रतिपक्षप्रतिक्षेप्तेत्यर्थः । सोऽयमनन्तोऽस्तीति ।।३३।।

**तदनारभ्य संरम्भं शोषयेदेष विद्विषः ।**
**दुर्दहो न हि दावाग्नेरुच्छुष्कतृणसञ्चयः ।। ३४ ।।**

**तदिति** ।। एष बलभद्रः । संरम्भं क्रोधमनारभ्य अनालम्ब्य आग्रह-मकृत्वापि 'संरम्भ कोप आग्रह' इति दर्पणः । विद्विषः शत्रून् शोषयेत् । 'शुष शोषणे' लिङ् नाशयेत् । तथाहि दावाग्नेररण्यानलस्य उच्छुष्कोऽति-शुष्कश्चासौ तृणानां सञ्चयः समूहः दुर्दहो न । 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल्प्रत्ययः । दावाग्नेरिति तु शेषषष्ठी । तेन 'न लोकाव्यये'ति षष्ठीप्रतिषिद्धेति चोद्यमनवकाशम् । अत्र शोषणदहनयोर्बिम्बप्रतिबिम्ब-भावेनोपादानात् । 'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः' । इति लक्षितो दृष्टान्तालङ्कारः । अर्थान्तरन्यासो वा ।। ३४ ।।

**पुंसामल्पविवेकानां देव त्वत्सेविसङ्गिनाम् ।**
**सत्वादयः प्रकाशन्ते प्रशाम्यन्ति भवादयः ।। ३५ ।।**

**पुंसामिति** ।। हे देव अल्पविवेकानां स्वल्पो विवेको विचारः येषां ते तथोक्ताः तेषाम् । 'विवेकवाक् पृथक्कारे(गृभावे)जलद्रोण्यां विचारण' इति केशवः । अपरामर्शकारिणामपीत्यर्थः । त्वां ताच्छील्येन सेवन्त इति त्वत्सेविनस्तेषां सङ्गिनः त्वद्भक्तसङ्गवन्तस्तेषाम् । पुंसां सत्त्वादयः सत्त्वं गुणः तदादिः कारणं येषां ते ज्ञानभक्तिवैराग्यादिभागवतधर्माः प्रकाशन्ते दीप्यन्ते 'काशृ दीप्तौ' लट् । भवो जन्म आदिकारणं येषां चिन्तासन्तापपुण्यपापसम्बन्धादीनां संसारधर्माणां ते भवादयः प्रशाम्यन्ति क्षीयन्ते इत्यर्थः ।। ३५ ।।

**गरुडात्मानमात्मासौ किङ्करोऽतिबलेरितः ।**
**सूने सेनान्नतेऽसाध्यं किं करोति बलेऽरितः ।। ३६ ।।**

**गरुडेति** ।। हे देवेत्यनुवर्तनीयम् । आनमतीत्यानमो नम्र आत्मा मनो यस्यासौ आनमात्मा गरुडात्मा गरुडरूपः सेनात् इनेन स्वामिना शङ्करेण सहितस्सेनस्तस्मात् अरितः सपत्नात् बाणात् अतिबलेरितः अतिशयित-बलेन प्रसिद्धः ते किङ्करः सूने प्राणिवधरूपयुद्धे बलेऽरित इत्येतत्सन्नि-धानात् शत्रोः सैन्ये । असाध्यं दुष्करं किं न करोति सर्वमपि इतरासाध्यं कुर्यादेव । गरुडोऽप्येतादृशमहिमा । अतस्ते विजयः सिद्ध एवेति भावः । केचित्तु बलेरितः बलभद्रेण प्रेरितः । आत्मा परमात्मा श्रीकृष्णः हे सेनान्न शत्रुसेनैवान्नं भक्ष्यमस्य तथाविधशत्रुसंहारिन् गरुड । ते तव आत्मानं देहं धृतिं वा । सूने शून्यप्रायेऽतितुच्छे । अरितः अरेर्बले शत्रोः सैन्ये साध्यं शत्रुकृतविमर्दपात्रं करोति किम् । न करोत्येव । यतस्त्वं किङ्करोऽसि अतिबलेरितश्चासि इति गरुडं प्रति प्रद्युम्नस्योत्साहोपोद्बलकरूपं वचनमिति व्याचक्षते । अत्र न करोतीति समर्थनीयार्थस्यऽतिबलेरितः किङ्कर इति

समर्थनात् काव्यलिङ्गमलङ्कारः । पादयमकं नाम शब्दालङ्कारश्च । तथाच वीरनारायणः– 'एतत्सार्थकसमुदायद्वयं पादयमकम्' इत्युक्त्वा 'इतस्ततोऽस्मिन्विलसन्ति मेरोः समानवप्रे मणिसानुरागाः । स्त्रियश्च पत्यौ सुरसुन्दरीभिः समा नवप्रेमणि सानुरागाः ।।' इति माघश्लोकमुदाजहारः ।।३६।।

**अविच्छिन्नोरुसङ्ग्रामे बहुशो बहुवैरिणि ।**
**एधितं माधुरे धाम्नि भयं न स्पृशतीह माम् ।। ३७ ।।**

**अविच्छिन्नेति** ।। बहुशो बहुप्रकारेण 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति शस् । अविच्छिन्ना विच्छेदरहिता उरवो महान्तः सङ्ग्रामा युद्धानि यस्मिन् तत् । अविच्छिन्नोरुसङ्ग्रामं तस्मिन् । बहवो वैरिणो यस्य तत् बहुवैरि तस्मिन् माधुरे मधुरायां भवे धाम्नि तेजसि त्वयि कृष्णे एधितमभिवृद्धं कृष्णोदरसमुद्भवमित्यर्थः । मामिह समराङ्गणे भयं न स्पृशति । अविच्छिन्नेत्यादिविशेषणस्य साभिप्रायत्वात् परिकरालङ्कारः । माधुरे धाम्नि मन्दिर इति व्याख्यानं प्रद्युम्नस्य द्वारकायामुद्भूतस्य मधुरायामत्रोक्तवृद्ध्ययोगात् अभव्यम् ।। ३७ ।।

**अयमद्य प्रसादाद्वामेकः सम्पादयाम्यहम् ।**
**निरसूनसुरान् सर्वांस्त्वरया निशितैः शरैः।। ३८ ।।**

**अयमिति** ।। अद्यास्मिन्नहनि वां युवयो रामकृष्णयोः कृष्णगरुडयोर्वा प्रसादादनुग्रहात् । 'प्रसादोऽनुग्रहे काव्यप्राणनिर्मलभावयोः ।' इति दर्पणः । अयमहमेकोऽपि सर्वानसुरान् बाणभृत्यान् निशितैः शरैर्बाणैस्त्वरया निरसुन् निर्गतप्राणान् सम्पादयामि करोमि ।। ३८ ।।

**प्रत्यर्थित्वेन कः शूरस्त्रिषु लोकेषु मे पुरः ।**
**वैधुर्यमवशो विद्वन् प्रत्यपादि धनुर्भृतः ।। ३९ ।।**

**प्रतीति** ।। हे विद्वन् कृष्ण त्रिषु लोकेषु धनुर्भृतो मे पुरोऽग्रतः प्रत्यर्थित्वे प्रतिभटभावे प्रसक्ते को वा शूरोऽवशः सन् वैधुर्यं वैकल्यं 'विज्ञेयं विधुरं सद्भिः कष्टविश्लिष्टयोरपि । विकल' इति केशवः । वैक्लव्यं वा 'विकलेऽपि च विश्लेषे विधुरं विक्लवं त्रिषु' इति रभस इति भट्टः । न प्रत्यपादि । प्राप्तः सर्वोऽपि पुरोवर्ती कष्टतां यायादेवेति भावः । त्रिषु लोकेषु कः शूरः मे पुरः प्रत्यर्थित्वेन स्यान्न कोऽपि । यदि कोऽप्यवशो विवशः धनुर्भृतो मे पुरः । तर्हि वैधुर्यं प्रत्यपाद्येवेत्यपि योजयन्ति ।। ३९ ।।

**रुद्धद्वारान् पुरात्साम्ना[1] प्रत्युद्गम्यासुरेश्वरः ।**
**यदि दास्यति नः पुत्रमपि सन्धिर्न सम्पदे ।। ४० ।।**

**रुद्धेति** ।। असुरेश्वरो बाणः । रुद्धानि द्वाराणि यैस्ते तथोक्तास्तान् । नोऽस्मान् । पुराच्छोणितनगरात् प्रत्युद्गम्य आभिमुख्येनागत्य यदि पुत्रमनिरुद्धं साम्ना दास्यति । तर्ह्यपि सन्धिः । तेन सहेति शेषः । सम्पदे भूत्यै गुणोत्कर्षाय वा न भवति 'सम्पद् भूतौ गुणोत्कर्षे' इति केशवः । रुद्धद्वारात्पुरादिति पाठे सामानाधिकरण्यम् ।। ४० ।।

उक्तमेव हेतूक्त्या समर्थयते–

**सुप्तस्यान्तः पुराच्चौर्यं युद्धे विजयिनः पुनः ।**
**बालस्याशीविषैर्बन्धो माययेति क्षमात्र का ।। ४१ ।।**

---

१. 'रुद्धद्वारात्पुरात्' इति पाठान्तरम् ।

**सुप्तस्येति** ।। सुप्तस्यानिरुद्धस्यान्तःपुराच्चौर्यं स्वाम्यविज्ञातादानम् । युद्धे स्वेन सहेति शेषः । विजयिनः पुनः । पुनश्शब्दोऽप्रथमार्थः । बालस्यानिरुद्धस्य आशीविषै सर्पैः । 'आशीविषो विषधरश्चक्री व्यालः सरीसृपः' इत्यमरः । मायया छद्मना बन्धश्च कृतः । इति हेतोरत्र बाणे का क्षमा । बाणविषये क्षान्तिर्न सर्वथा गुणोत्कर्षायेत्यर्थः ।। ४१ ।।

बाणे स्वभृत्ये क्षमाया अकरणे शङ्करोऽस्मान् प्रत्यवतिष्ठेतेत्यत्राह–

**अपि विश्वेशमीशानमन्वीतममरासुरैः ।**
**प्रत्ययात्प्रत्यवस्थाने युद्धाय विजयोत्सुकम् ।। ४२ ।।**

**अपीति** ।। विश्वस्येशं पतिमीशानं शङ्करं सुरासुरैरन्वीतमनुपूर्वादिण्गता-वित्यतो निष्ठा । युक्तम् । विजये उत्सुकमुद्युक्तमपि । प्रत्ययात् शपथात् । यद्वा प्रत्ययो रन्ध्रं तमालक्ष्येति ल्यब्लोपनिमित्ता पञ्चमी । परस्यापराध-स्थानं रन्ध्रं तस्मात् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु । रन्ध्रे शब्द' इत्यमरः । प्रत्यवस्थास्ये अभुमुखः स्थास्यामि ।। ४२ ।।

**शैवं बीजमभीक्ष्णं च वह्निवीर्योपबृंहितम् ।**
**अजेयो विजयी चास्तु प्रचण्डश्चण्डिकासुतः ।। ४३ ।।**

**शैवमिति** ।। वह्निवीर्येणोपबृंहितं वर्धितमुपोद्बलितं शैवं शिवसम्बन्धि बीजं शिववीर्यजनित इति यावत् । अजेयो जेतुमयोग्यः विजयी विजय-शीलः चण्डिकासुतः चण्डिकाया उमायाः सुतः स्कन्दश्च 'मृडानी चण्डिकाम्बिका' इत्यमरः । अभीक्ष्णमसकृच्च प्रचण्डोऽस्तु पुनःपुनर्योद्धुं महाकोपेनाभिमुखोऽस्तु ।। ४३ ।।

**तेन वीर्यानलारण्यसेनान्या परिपालिताम् ।**
**अपि बाहुसहस्रेण बाणस्योल्बणतेजसा ॥ ४४ ॥**

**तेनेति** ॥ वीर्यं पराक्रम एवानलो ज्वलनस्तस्यारणिर्मन्थनादारु 'त्वरणिर्द्वयो'रित्यमरः । 'अशनितरण्यरणयः पुंसि च' इति लिङ्गानुशासनं च । सेनान्या गुहेन 'सेनानीरग्निभूर्गुह' इत्यमरः । बाणास्योल्बणं प्रव्यक्तं तेजो वीर्यं यस्य तदुल्बणतेजः तेन बाहूनां सहस्रं बाहुसहस्रं तेनापि परिपालितां पुरं वितनिष्य इत्याकर्षः ॥ ४४ ॥

**पुरमस्त्रेण कृत्वेमां निष्पत्त्यश्वविषादिनीम् ।**
**वितनिष्ये रणादस्मान्निष्पत्य श्वविषादिनीम् ॥ ४५ ॥**

**पुरमिति** ॥ इमामुपस्थितां पुरम् । पूः शोणितपुरी ताम् । अस्माद्रणान्निष्पत्य निर्गत्य । अस्त्रेण । निष्पत्त्यश्वविषादिनीं पत्तयः पदातयः अश्वाश्च सेनाङ्गत्वादेकवद्भावः । पत्त्यश्वं तस्याभावो निष्पत्त्यश्वम् अर्थाभावेऽव्ययीभावः । तेन विषादश्चित्तावसादोऽस्यास्तीति निष्पत्त्यश्वविषादिनी ताम् । श्वभिः शुनकैः विशेषेण सत्तुं शीलमस्या इति णिनिः । श्वविषादिनी ताम् वितनिष्ये 'तनु विस्तारे' लृट् । करिष्ये । इति श्लोकद्वयमेकक्रियान्वयीति सन्दानितकं नाम काव्यम् । पूर्वश्लोके वीर्यानलेति रूपकमर्थालङ्कारः । अत्र तु पादयमकं नाम शब्दालङ्कारः ॥ ४५ ॥

**इत्युत्पतिष्णुमुद्धूतकृपाणमुपसान्त्वयन् ।**
**क्षेपयामास[१] तं कालः क्रियाफलमिवाच्युतः ॥ ४६ ॥**

**इतीति** ॥ अच्युतः श्रीकृष्णः इत्युक्तप्रकारेण उत्पतिष्णुमुत्पूर्वात्पते-

१. 'क्षपयामास' इति पाठान्तरम् ।

रिष्णुचाख्यातः । उत्पतितारम् । उद्धूतः कम्पितः कृपाणः खड्गः येन स तथा तम् । प्रद्युम्नमुपसन्त्वयन् साम्ना लालयन् । कालः क्रियाफलं क्रियायाः कर्षणयजनादिरूपायाः फलं धान्यलाभस्वर्गप्राप्त्यादिरूपमिव । क्षेपयामास 'क्षिप प्रेरणे' णिजन्ताल्लिट् । प्रेरितवान् । क्षपयामासेति पाठे क्षपप्रेरण इति धातुव्याख्यानम् । उपमालङ्कारः ।। ४६ ।।

**यक्षदानवदैतेयरक्षोभूतगणेश्वराः ।**
**स्वं स्वमस्त्रं प्रयुञ्जानास्त्रिभिर्युयधिरे समम् ।। ४७ ।।**

**यक्षेति** ।। यक्षा गुह्यकाः दानवाः दनोः पुत्राः दैतेया दितिसुताः । रक्षांसि राक्षसाः भूताः देवयोनिविशेषाश्च गणाः प्रमथाश्च तेषामीश्वरा अधिपतयः । स्वं स्वं स्वकीयं स्वकीयमस्त्रं खड्गबाणदिरूपायुधं विप्राणां भोजनमितिवदेकवचनम् । प्रयुञ्जानाः स्वस्वास्त्राणां प्रयोक्तारः सन्त इत्यर्थः । त्रिभिर्बलकृष्णप्रद्युम्नैः समं सह युयुधिरे 'युध सम्प्रहारे' लिट् । युद्धं चक्रिरे । 'यक्षो गुह्यकमात्रे स्याद्गुह्यकाधीश्वरेऽपि च' इति अमरव्याख्यायाम् । ननु कथं दैतेय इति प्रयोगः । यावता 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्य' इति दितिशब्दाद् ण्यप्रत्ययोऽनुशिष्टः । न चापत्येऽर्थे । 'इतश्चानिञः' इति ढक् भविष्यतीति वाच्यम् । 'ण्यादयोऽर्थविशेषलक्षणादञपवादात्पूर्व-विप्रतिषेधेन' इति वक्तव्याण्ण्यप्रत्ययस्येव प्राप्तव्यत्वात् इति चेदुच्यते । दितिशब्दात् 'कृदिकारादक्तिन' इति ङीषि स्त्रीभ्यो ढगिति ढक्प्रत्ययो निष्प्रत्यूहः । न च 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया पुनरपि ण्यप्रत्यय एव स्यादिति वाच्यम् । 'शक्तिलाङ्ग-लाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसङ्ख्यानम्' इति वार्तिके घटघटीग्रहणेन उक्तपरिभाषाया अनित्यत्वं विज्ञायत इति वैय्याकरणैरुक्तत्वात् । अत

एव 'असुरा दैत्यदैतेयदनुजेन्द्रारिदानवा' इत्यमरः । एतेन दैतेय इत्यसाधुरित्यन्ये इति हरदत्तवचनमनादरणीयमेव । तत्रैवान्य इत्यस्वारस्यसूचनात् । सर्वमेतद्वृत्त्यादौ स्फुटमुक्तम् ।। ४७ ।।

**शङ्खदुन्दुभिनिर्घोषहेषाविष्फारबृंहितैः ।**
**क्ष्वेलैश्चासुरसेनायाः क्षोभ आरात्समानशे ।। ४८ ।।**

**शङ्खेति** ।। असुरसेनायाः शङ्खाश्च दुन्दुभयो भेर्यश्च तेषां निर्घोषा ध्वनयः हेषा अश्वनिस्वनाः विष्फारा धनुषां स्वनाः बृंहितानि करिगर्जितानि च तैः क्ष्वेलैः सिंहनादैश्च । 'हेषा ह्रेषा वाजिनां वारणानां शब्दो गर्जो गर्जनं बृंहितश्च । विष्फारः स्यात्कार्मुकाणाम्' इति । 'क्ष्वेलोऽस्त्री सिंहनादः स्याद्' इति शब्दरत्नाकरः । क्षोभः सञ्चलनं खेद इत्यर्थः । 'क्षोभः कालुष्यखेदयोः' इति दर्पणः । आराद्दूरे । 'आराद्दूरसमीपयोः' इत्यमरः । समानशे 'अशू व्याप्तौ' लिट् । 'अश्नाते' चेति नुट् । व्याप्तवान् ।। ४८ ।।

**यौधमुख्या बलात्तस्मान्निरीयुस्तरसा खगाः ।**
**वनादाकुलितोद्विग्ना गगनादिव पक्षिणः ।। ४९ ।।**

**यौधेति** ।। वनात् काननप्रदेशात् आकुलितोद्विग्नाः पूर्वमाकुलिताः पश्चादुद्विग्ना आकुलितोद्विग्नाः 'पूर्वकालैके–'ति समासः । इति कर्तव्यताधीशून्याश्चलिताश्चेत्यर्थः । गगनाद् ल्यब्लोपनिमित्ता पञ्चमी । गगनदेशमवष्टभ्य पक्षिण इव । यौधैर्भटैः मुक्ता यौधमुक्ताः खगा बाणाः । 'पृषत्कबाणविशिखा अजिह्मगखगाशुगाः' इत्यमरः । तस्माद् बाणस्वामिकाद् बलात् सैन्यात् । गगनाद्गगनमालम्ब्य तरसा वेगेन निरीयुः ।

निष्पूर्वादिण्गतावित्यतो लिट् । निर्गतवन्तः । उपमालङ्कारः । खगाः पक्षिण इति पौनरुक्त्यात्पुनरुक्तवदाभासः शब्दालङ्कारश्च । 'पुनरुक्तवदाभासः पुनरुक्तेस्तथात्वतः । तेजो धामबुधामिन्द्रो(भ्रा)जिष्णुर्धिषणो गुरुः' इति सोदाहरणं तल्लक्षणमभिहितं सुधीन्दश्रीमच्चरणैरलङ्कारमञ्जर्याम् ।।४९।।

**आपत्य सर्वतो नैको विपक्षेषु रयं यतः ।**
**जहौ तद्वायुनाकृष्टो विपक्षेषुरयं यतः ।। ५० ।।**

**आपत्येति** ।। अयं पूर्वमुपात्तः । नैको बहुः इति विशिंषन् बहुवचने प्रस्तुतशरस्य कथमेकवचनेनोपादानमिति चोद्यं परिहरति । वायुनाकृष्टः विपक्षेषु परसैन्येषु सर्वत आपत्य विपक्षेषुः विगतौ पक्षौ यस्य स तथोक्तः इषुर्बाणः । यतो यस्मात् । यतः उपरतः । तत्तस्मात् । रयं वेगं जहौ 'ओहाक् त्यागे' लिट् त्यक्तवान् । प्रतिभटचापच्युता बाणाः स्वपक्षवाताकृष्टा वेगेन परसैन्ये सर्वतोऽभिघातात् पक्षहीनतयोपरता अपगतवेगा अभवन्निति तात्पर्यम् । पादावृत्तियमकं नाम शब्दालङ्कारः ।। ५० ।।

**ततः शार्ङ्गधरस्तूर्णं सायकान्व्यसृजच्छरान् ।**
**विषयेष्विन्द्रियाणीव महायोगेश्वरोऽरिषु ।। ५१ ।।**

**तत इति** ।। ततः परसैन्यो बाणपातनान्तरं शार्ङ्गधरः शार्ङ्गनामकचापस्य धरः भर्ता महतां योगानां महान् योगो तेषां वा ईश्वरोऽधिपतिः श्रीकृष्णः । विषयेषु शब्दादुषु इन्द्रियाणि श्रोत्रादीनीव योग्यतया कामुक इति संयोज्यम् । अरिषु शत्रुषु सायकान् । षो अन्तकर्मणीत्यस्यैदं रूपं परप्राणापहारिण इत्यर्थः । शरान् बाणान् । तूर्णं शीघ्रं यथा तथा व्यसृजत् सृज विसर्गे लङ् अमुञ्चत् । उपमालङ्कारः । सायकान् शरानिति पूर्वत्रेवा-

त्रापि पुनरुक्तवदाभासः शब्दालङ्कारश्च । अन्तकारिण इत्याभासीकरणात्
॥ ५१ ॥

**त्रयाणामप्यमोघानां शस्त्राणामतुलौजसाम् ।**
**जनैरशङ्कि शीघ्राणां मुक्तामुक्तविपर्ययः ॥ ५२ ॥**

**त्रयाणामिति** ॥ त्रयाणां रामकृष्णप्रद्युम्नानाम् । अतुलानि ओजांसि अवष्टम्भशक्तयः येषां तानि तेषाम् । शीघ्राणां त्वरावताममोघानां शस्त्राणामायुधानां त्रयाणां शस्त्राणामिति व्यधिकरणे षष्ठी । मुक्तामुक्तविपर्ययः मुक्तानां चापाच्च्युतानाम् अमुक्तानां चापसंलग्नानां च विपर्ययो विपर्यासः मुक्तामुक्तविपर्ययः जनैरशङ्कि 'शकि शङ्कायां' कर्मणि लुङ् । अनेन रामादीनां करकौशलं विभावितं भवति ॥ ५२ ॥

**यस्य यत्र प्रहारेच्छा यैश्च शस्त्रैरवर्तत ।**
**तस्य तत्र तथा तेषामनुसन्धि विहङ्गराट् ॥ ५३ ॥**

**यस्येति** ॥ विहङ्गराड् विहङ्गानां पक्षिणां राजा गरुडः । त्रयाणां मध्ये यस्य रामाद्यन्यतमस्य यत्र यस्मिन् लक्ष्ये यैः शस्त्रैश्च प्रहारेच्छा अवर्तत । 'वृतु वर्तने' लङ् । तस्य तत्र तथा इच्छाप्रकारेण तेषां शस्त्राणामनुसन्धि सर्वेष्वपि सन्धिषु रन्ध्रेषु 'सन्धिस्तु श्लेषयोनिसुराङ्गयोः । नाट्याङ्गरन्ध्रयोश्च स्याद्वस्तुनोरन्तरेऽपि च' इति कविदर्पणः । सर्वमर्मस्थानेष्वित्यर्थः । अवर्तत अनुकूल इति शेषः । वाहनस्यातिकौशलमनेन विभावितम् ॥ ५३ ॥

**विभोः प्रहरतो नेमिज्वालादग्धा[1] द्विषः पुरः ।**
**चक्रेण छिन्दता पश्चात् प्रपेदे पुनरुक्तता ॥ ५४ ॥**

१. 'ज्वालादग्धान्' इति पाठान्तरम् ।

**विभोरिति** ।। प्रहरतः संहरतो विभोः पुरोऽग्रतो द्विषो द्वेषिणः शत्रवः । नेमेश्चक्रप्रान्तस्य ज्वालया दग्धा दाहं प्राप्ताः 'नेमिस्तुतिनिशद्रुमे । चक्रप्रान्ते भित्तिमूल' इति केशवः । पश्चाच्छिन्दता द्विष इति द्वितीयान्ततयावर्तनीयम् । ज्वालादग्धानिति पाठे नावृत्तिश्चक्रेण पुनरुक्तता पुनरिदं चक्रं छिनत्ति इति प्रथाविषयता व्यर्थतेति यावत् प्रपेदे 'पद गतौ' कर्मणि लिट् प्राप्ता ।। ५४ ।।

**उद्गाढमपतद्वक्षस्स्वसुराणामसुप्रिया ।**
**गदा कौमोदकी नाम रूपाजीवेव वाणिनी ।। ५५ ।।**

**उद्गाढमिति** ।। कौमोदकी कौमोदकीनाम्नी गदा । वाणिनी मत्ता 'वाणिनी नर्तकी मत्ता विदग्धवनितासु च' इति विश्वः । रूपाजीवा रूपमाजीवो जीविका यस्याः सा तथोक्ता वारस्त्रीव । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः । असुराणामसुप्रिया सुप्रियानेत्यसुप्रिया । अन्यत्र प्राणवल्लभा । वक्षस्सु उरस्थलेषु उद्गाढमतिदृढमपतत् । 'पत्लृ गतौ' लङ् श्लिष्टोपमालङ्कारः ।। ५५ ।।

**क्षुब्देन्द्रियतयामीषां तया रक्तानुरक्तया ।**
**अवकाशरसोद्रेकादाददे क्रममूर्छनम् ।। ५६ ।।**

**क्षुब्देति** ।। अमीषामसुराणां रक्तेन शोणितेन अनुरक्ता तया अनुरागयुक्तया । तथा च भागवते– 'कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्दमेन' इति तया गदया क्षुब्धानि क्षोभं सञ्चलनं प्राप्तानीन्द्रियाणि येषां ते क्षुब्धेन्द्रियास्तेषां भावस्तत्ता तया । अवकाशोऽवसरस्तस्य यो रसो वीर्यं तस्योद्रेकादाधिक्यात् क्रममूर्छनं क्रमेण

मोहावस्था । आदधे आहितम् । कौमोदकी स्वाभिघातशिथिलितेन्द्रियवद्-सुराणां युद्धकाले वीर्यातिरेकेण मूर्च्छामाहितवतीत्यनेन कामुकजनानुरागि-रूपाजीवावृत्तान्तो व्यज्यत इति समासोक्तिरलङ्कारः । उपमा वा । तत्र रसः शृङ्गारः । मूर्छनं समुच्छ्रायः । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इति दर्पणः । मूर्छा मोहसमुच्छ्राययोरिति धातुव्याख्यानम् ।।५६।।

**गदाऽऽरस्वतिमाहात्म्या दारुणेयं क्षयावहा ।**
**रणेऽत्र सा महायामा स्वयं साफल्यमक्षति ।। ५७ ।।**

**गदेति** ।। अरीणां समूह आरम् अरिशब्दात् 'तस्य समूह' इत्यण् तस्मिन् । सुशोभनम् अतिपूजितं माहात्म्यं प्रभावो यस्याः सा आरस्वति-माहात्म्या । दारुणा भीषणा । क्षयावहा शत्रूणां क्षयस्य सम्पादिका आवहतीत्यावहा पचाद्यच् । अत्र एतस्मिन्नुपस्थिते रणे युद्धे महानायामो दैर्घ्यं यस्याः सा महायामा । 'दैर्घ्यमायाम आनाह' इत्यमरः । अतिदीर्घा । सेयं गदा कौमोदकी । स्वयमात्मना साफल्यं सफलत्वम् । अक्षति 'अक्षू व्याप्तौ' लट् प्राप्नोति । कविर्दुष्करचित्रविशेषे दुरवबोधत्वान्नामाह 'अर्ध-भ्रमकम्' इति । श्लोकपादार्धस्य भ्रमणं यत्र बन्धे सोऽयमर्धभ्रमकं नाम चित्रकाव्यविशेष इत्यर्थः । तदुद्धारस्तु 'तिर्यक् पञ्चरेखा लिखित्वा तासूर्ध्वा नवरेखा लिखेत् । एवं सति चतस्रः पङ्क्तयः द्वात्रिंशत्कोष्ठानि च निष्पद्यन्ते । तत्राद्यपङ्क्तौ तुरीयपादं च लिखेत् । समग्रश्लोको दृश्यते । तत्राद्यपङ्क्तिलिखितान् चतुरो वर्णान् क्रमेण पठित्वा तुरीयपङ्क्त्यन्त्यकोष्ठ-गतवर्णं सप्तमं कृत्वा आद्यपङ्क्त्यन्त्यकोष्ठगतवर्णमष्टमं विधाय पठने आद्यः पादः समग्रो निष्पद्यते । एवं द्वितीयपङ्क्तौ द्वितीयपादगतानाद्यांश्चतुरो वर्णान् पठित्वा तुरीयपङ्क्त्युपान्त्यकोष्ठगतं वर्णं तृतीयपङ्क्तिसप्तमवर्णं द्वितीयपङ्क्ति-

सप्तमवर्णं प्रथमपङ्क्तिसप्तमवर्णं च पठेत् द्वितीयः पादो भवति । तथा तृतीयपङ्क्तौ चतुरो वर्णान् पठित्वा अन्त्यपङ्क्तिषष्ठं तृतीयपङ्क्तिगतषष्ठं द्वितीयपङ्क्तिगतषष्ठं प्रथमपङ्क्तिगतषष्ठं च वर्णं च पठेत् एवं सति तृतीयः पादो लक्ष्यते । एवमेव तुरीयपङ्क्तिगतानाद्यांश्चतुरो वर्णान् तत्पङ्क्तिगतपञ्चमं तृतीयपङ्क्तिगतं पञ्चमं द्वितीयपङ्क्तिगतं पञ्चमं प्रथमपङ्क्तिगतं पञ्चमं च पठेत् तुरीयः पादो भासते । तथान्योऽपि पठनप्रकारः । तथाहि– आद्यपङ्क्तिगतमाद्यं द्वितीयपङ्क्तिगतमाद्यं तृतीयपङ्क्तिगतमाद्यं तुरीयपङ्क्तिगतमाद्यं षष्ठं तत्पङ्क्तिगतसप्तमकोष्ठस्थवर्णं सप्तमं तत्पङ्क्तिगतान्त्यकोष्ठलिखितवर्णमषटमं निधाय पठेत् । आद्यः पादो भवति । एवमाद्यपङ्क्तिगतद्वितीयकोष्ठवर्णमादिं कृत्वा द्वितीयपङ्क्तिगतं द्वितीयं तृतीयपङ्क्तिगतं द्वितीयं चतुर्थपङ्क्तिगतं द्वितीयं च पठित्वा द्वितीयपङ्क्तिगतसप्तमकोष्ठस्थवर्णं सप्तमं तत्पङ्क्तिगतान्त्यकोष्ठगतवर्णमष्टमं च कृत्वा पठेत् । द्वितीयः पादो निष्पद्यते ।

एवं प्रथमपङ्क्तिगततृतीयकोष्ठस्थवर्णमादिं कृत्वा द्वितीयपङ्क्तिगततृतीयं वर्णं द्वितीयं कृत्वा तृतीयपङ्क्तिगततृतीयं वर्णं तृतीयं कृत्वा तुरीयपङ्क्तिगततृतीयकोष्ठस्थवर्णं चतुर्थं कृत्वा तृतीयपङ्क्तिगतपञ्चमकोष्ठगतवर्णं पञ्चमं तत्पङ्क्तिगतषष्ठकोष्ठगतवर्णं षष्ठं तत्पङ्क्तिगतसप्तमकोष्ठगतवर्णं सप्तमं तत्पङ्क्तिगतान्त्यकोष्ठगतवर्णमष्टमं विधाय पठेत् । तृतीयः पादो लक्ष्यते । एवं प्रथमपङ्क्तिगतचतुर्थकोष्ठगतवर्णमादिं कृत्वा द्वितीयतृतीयचतुर्थपङ्क्तिगतान् चतुर्थकोष्ठलिखितवर्णान् क्रमात् पठित्वा तुरीयपङ्क्तौ पञ्चमषष्ठसप्तमाष्टमानपि क्रमात्पठेत् । चतुर्थः पादो निष्पद्यते । प्रकारान्तरेणापि वाचनमस्ति । चतसृषु पङ्क्तिषु आद्यकोष्ठगान्वर्णान् चतुरोऽनुक्रमेण पठित्वा तुरीयपङ्क्त्यन्त्यवर्णं पञ्चमं तृतीयपङ्क्त्यन्त्यवर्णं षष्ठं द्वितीयपङ्क्त्यन्त्यवर्णं सप्तममाद्यपङ्क्त्यन्त्यवर्णमष्टमं कृत्वा पठेत् प्रथमः पादः ।

एवं प्रथमद्वितीयादारभ्यानुलोम्येन पठेत् । तुरीयपङ्क्त्युपान्त्यादारभ्य प्रातिलोम्येन पठेत् द्वितीयः पादः । एवमाद्यतृतीयादारभ्यानुलोम्येन चतुरो वर्णान् अन्त्यपङ्क्तिषष्ठादारभ्य प्रातिलोम्येन पठेत् तृतीयः पादः । एवं प्रथमपङ्क्तिगतचतुर्थकोष्ठलिखितवर्णादारभ्यानुलोम्येन चतुरो वर्णान् पठेत् । तुरीयपङ्क्तिगतपञ्चमकोष्ठस्थवर्णादारभ्य प्रातिलोम्येन पाठे चतुर्थश्चरणो निष्पद्यत इति सहृदयैराकलनीयम् ।। ५७ ।।

**संसाररससुत्सूरेररेरसुसरस्सरुत् ।**
**रससारस्ससारासिरसुसारासुरासुरुत् ।। ५८ ।।**

**संसारेति** ।। सूरेर्ज्ञानिनः संसार एव रसो विषं तं सुनोतीति संसाररससुत् । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस' इत्यमरः । षुञ् अभिषवे इति धातोः 'क्विप् च' इति क्विप् । 'ह्रस्वस्य पिति कृति तुक्' इति तुक् । अरेः शत्रोः असुसरः सुखेन सर्तुं शक्यो न भवतीति तथा 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खलु' इति खल्प्रत्ययान्तत्वेऽपि शेषषष्ठ्यभ्युपगमात् 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति न निषेधः । रुशब्द इत्यतः सम्पदादिलक्षणे क्विपि तु रुदाशब्देन सहितः सरुत् । रसेन वीर्येण सारो वीरः रससारः । 'सारो बले स्थिरांशे च न्याये क्लीबं वरे त्रिषु' इत्यमरः । सुसाराः शोभनबला न भवन्तीत्यसुसाराः ते च ते असुराश्च तेषामसून् प्राणान् रुणद्धीति रुधेः कर्तरि क्विपि असुसारासुरासुरुत् । 'वावसान' इति चर्त्वम् । प्रहरतः प्रभोः श्रीकृष्णस्येत्यनुवर्तते । असिः खड्गो नन्दकनामा । ससार 'सृ गतौ' इत्यतो लिट् । चचार । भगवतो नन्दकोऽपि शत्रूणां प्राणान् हर्तुं तेन विसृष्ट इति भावः । अत्र वर्णनियमेषु द्व्यक्षरीनियमो नाम चित्रकाव्यप्रभेदः । पदच्छेदस्तु–

'संसाररससुत् । सुरेः । अरेः । असुसरः । सरुत् । रससारः । ससार । असिः असुसारासुरासुरुत् । इति ॥ ५८ ॥

**गण्डशैलघनोन्मूर्ध्नो निष्पिंषन् मुसली हलम् ।**
**प्राहिणोदहिताङ्गेषु पृथुष्वसुविकर्षणम् ॥ ५९ ॥**

**गण्डेति** ॥ मुसली मुसलवान् बलभद्रः । गण्डशैलघनोन्मूर्ध्नः । गण्डशैला गिरिच्युतस्थूलोपलास्त इव घना दृढा उन्नता मूर्धानो येषां ते गण्डशैलघनो न्मूर्धानस्तान् । 'घनः सान्द्रे दृढे दार्ढ्ये विस्तारे लोहमुद्गरे' इति विश्वः । प्रतिभटान्निष्पिंषन् सञ्चूर्णयन् । असुनां प्राणानां विकर्षणं प्राणाकर्षकरणमसुविकर्षणं हलम् । पृथुषु अहिताङ्गेषु शत्रूणामवयवेषु प्राहिणोत् । 'हि गतौ वृद्धौ च' इत्यतो लङ् अगमयत् ॥ ५९ ॥

**सास्रासार[१]सिरास्रंसैररसेऽरेरुरूरसि ।**
**सुरसारससूरोस्रसीरिसीरो ररास सः ॥ ६० ॥**

**सास्रेति** ॥ आस्राणां रक्तानामासारा धारास्तैः सहिताः सास्रासारास्ताश्च ताः सिरा नाड्यश्च तासामास्रंसैर्गलनैः अरसे अश्रेष्ठे । अरेः शत्रोरुरुणि महति उरसि वक्षसि । सुरा देवा एव सारसानि पद्मानि तेषां सूरोस्रः सूर्यकिरणस्थानीयः स प्रसिद्धः सीरिणो बलभद्रस्य सीरो हलः ररास 'रस शब्दे' लिट् शब्दितवान् । उरसोऽतिकठिनत्वात्तत्र हलप्रतिघातेन शब्दः समजनीति भावः । 'अस्रमास्रं रक्त'मिति द्विरूपकोशः । 'धारा सम्पात आसार' इति । 'नाडीति धमनिः सिरे'ति चामरः । 'शृङ्गारमुख्यमधुरादिसुवर्णरेतोनिर्यासरागगरलद्रवपारदेषु । आस्वादनध्वनि-

---

१. 'सास्रासारि' इति पाठान्तरम् ।

सुधाम्बरसीर्यधामश्रेष्ठोरगेषु रस' इति नानार्थरत्नमाला । 'सारसं सरसीरुहम्' इति । 'सूरसूर्यार्यमे'ति 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मय' इति चामरः । 'सीरगोदाहरणहललाङ्गलेष्वादिमद्वयो'रिति शब्दरत्नाकरे पुन्नपुंसकत्वोक्तेरिह सीरशब्दः पुल्लिङ्गः । सास्रासारीति पाठे सास्राः सरुधिराः आसारिण्यो-(भ्ये?)व्याप्ताः । सुरसारससूरोस्रसीरिसीरं ररास स इति पाठो दृश्यते । तत्र देवपद्मसूर्यकिरणायितसीरिणः सीरमुरसि सद्विद्यमानं ररासेत्यर्थ इत्याहुः । इयमपि द्व्यक्षरीवर्णनियमरूपचित्रप्रभेदः । पदच्छेदस्तु– सास्रासारसिरा-स्रंसैः । अरसे । अरेः । उरूरसि । सुरसारससूरोस्रसीरिसीरः । ररास । सः । इति यद्यपीयं द्व्यक्षरी संसाररसेति श्लोकस्य समनन्तरमेव पठितव्या द्व्यक्षरीत्वेन प्रत्यासत्तेः । तथापि इयमपि कृष्णविषयिण्येवेति भ्रमापनोदाय बलभद्रविषयतया क्रमेण चित्रद्वयप्रदर्शनाय च गण्डशैलेति श्लोकेन व्यवधानं नानुचितम् ।। ६० ।।

**अदीनवदनाम्भोजमदनोपासिताम्बरः ।**
**अनूनगदसम्भोगमतनोदसिताम्बरः ।। ६१ ।।**

**अदीनेति** ।। अदीनमक्षीणमम्लानं वदनमेवाम्भोजं यस्य स तथा स चासौ मदनः प्रद्युम्नश्च स उपासिता समीपे आसीनो यस्य सः अदीन-वदनाम्भोजमदनोपासिता । अम्बरोऽम्बरसम्बन्धी आकाशे दृश्यमानः । असितं नीलम्बरं वासो यस्य सोऽसिताम्बरो बलभद्रः । अनूना उत्तमा गदा यस्य सोऽनूनगदः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । गदाधरः श्रीकृष्णः तस्य सम्भोगं समीचीनं सुखं 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । सन्तोषमिति यावत् अतनोत् । 'तनु विस्तारे' लङ् अकरोत् । बलभद्रो हलरूपायुधेन आकाशमार्गे युध्यमानः

श्रीकृष्णप्रद्युम्नयोः परितोषमुत्पादितवानिति भावः । अत्र चित्रकाव्यं नामाह– गोमूत्रिकेति । एतल्लक्षणं तु 'एकान्तरितसारूप्यं वर्णानामर्धयोर्द्वयोः । गोमूत्रिकेति तां प्राहुरन्वर्थां चित्रवेदिनः ॥' इति । गोमूत्रशब्दात् 'इवे प्रतिकृतौ' इति कन्प्रत्यये स्त्रीत्वविवक्षायां टापि 'प्रत्ययस्थात्' इतीत्त्वे च गोमूत्रिकेति रूपमित्यन्वर्थनामेत्युक्तम् । लेखनप्रकारस्तु– 'तिर्यग्रेखात्रयं कृत्वा वीथियुग्मे लिखेत् क्रमात् । अर्धद्वयं भवेत्तत्र गोमूत्रप्रतियातना ॥' इति । मदीयमधुधारायामस्य वाचनप्रकारः– द्वितीयार्धप्रथमाक्षरं द्वितीयार्धतृतीयाक्षरं प्रथमार्धचतुर्थाक्षरं द्वितीयार्धपञ्चमाक्षरं प्रथमार्धषष्ठाक्षरं द्वितीयार्धसप्तमाक्षरं प्रथमार्धाष्टमाक्षरं द्वितीयार्धपञ्चमाक्षरं प्रथमार्धषष्ठाक्षरं द्वितीयार्धसप्तमाक्षरं प्रथमार्धाष्टमाक्षरं द्वितीयार्धनवमाक्षरं प्रथमार्धदशमाक्षरं द्वितीयार्धैकादशाक्षरं प्रथमार्धद्वादशाक्षरं द्वितीयार्धत्रयोदशाक्षरं प्रथमार्धचतुर्दशाक्षरं द्वितीयार्धपञ्चदशाक्षरं प्रथमार्धषोडशाक्षरं च एकान्तरितं गोमूत्रविन्यासन्यायेन पठेत् प्रथमार्धं निष्पद्यते । एवमेव प्रथमार्धाद्यवर्णद्वितीयार्धद्वितीयवर्णमित्यादिरूपेणैकैकव्यवधानेन पठने द्वितीयार्धं च लक्ष्यते । क्वचित्तु प्रथमार्धाद्यवर्णादारभ्य द्वितीयार्धद्वितीयवर्णादिग्रहणेन पाठेऽपि प्रथमार्धं दृश्यत इति वदन्ति । यथा– 'विजयीन्द्रवर्य धुतगर्व धीनिधे सततादृतास्तव गुणा लसत्तमाः । निजसान्द्रधैर्य जितपर्वतानिशं समता श्रिता नवमृणालसत्क्रमा ॥' इत्यलङ्कारमञ्जर्यामेतदर्थस्तु मदीयमधुधारायां द्रष्टव्यः । तथा 'सुरासुरार्चिता धन्या तुङ्गमङ्गलपालिका । चराचराश्रिता मान्या रङ्गपुङ्गवपादुका ॥' इति पादुकासहस्रचित्रपद्धतौ । अत्र श्लोकद्वयेऽपि प्रथमार्धप्रथमाक्षरं द्वितीयार्धद्वितीयाक्षरमित्यादिक्रमेण पठित्वा पूर्वोत्तरार्धे सम्पादनीये । आकरे तु द्वितीयवर्णमित्याद्युक्तप्रकारेण वाचनमित्युक्तम् । अयमपरश्चात्र विशेषः । यत्पादद्वयान्तेऽपि वर्णचतुष्टयावृत्तेर्यमकमिति ॥ ६१ ॥

**यत्र यत्र पुरो दृष्टः प्रद्युम्नो निघ्नतासिना ।**
**वीराणां म्रियमाणानामभूदाश्चर्यगोचरः ॥ ६२ ॥**

**यत्रेति** ॥ निघ्नता हिंसता असिना खड्गेन सह । यत्र यत्र प्रदेशे पुरोऽग्रतो दृष्टः प्रद्युम्नो म्रियमाणानां वीराणामाश्चर्यस्य गोचरो विषय आश्चर्यगोचरोऽभूत् । भवतेर्लुङ् ॥ ६२ ॥

**तत्र तत्र प्रहर्तॄणां प्रहारोऽपि न्यरुध्यत ।**
**तेनैव चर्मणा तस्य समरग्रहरंहसः ॥ ६३ ॥**

**तत्रेति** ॥ समरे युद्धे ग्रह आग्रहस्तस्य रंहो जवो यस्य सः समरग्रहरंहास्तस्य प्रद्युम्नस्य । कर्मणि षष्ठी । प्रहर्तॄणां प्रतिवीराणाम् शेषषष्ठीयम् । तेन उभयप्राप्तौ कर्मणीति नियमात् कथं प्रहर्तॄणामिति षष्ठीति निरस्तम् । यद्वा कर्तर्येव षष्ठीयमस्तु 'शेषे विभाषा' इति वचनात् शब्दानामनुशासनमाचार्यस्य आचार्येणेति यथेति समानम् । प्रहारोऽपि खड्गपरिघादिपातनमपि तत्र तत्र युद्धरङ्गे तेनैव प्रद्युम्नेन असहायेनेत्यभिप्रायक एवशब्दः । चर्मणा अस्त्रवारणेन खेटेन न्यरुध्यत 'रुधिर् आवरण' इत्यतः कर्मणि लङ् निरुद्धो वञ्चित इत्यर्थः ॥ ६३ ॥

**दिदेव नन्दीनविनोददोऽदन्नानन्ददावं नववेदनादः ।**
**नदन्नदीनन्दननन्दनानां विनिन्दिनां दाववदादिदेवः ॥६४॥**

**दिदेवेति** ॥ नन्दिनो नन्दिकेश्वरस्य इनः स्वामी शिवः तस्य विनोदं क्रीडां द्यतीति नन्दीनविनोददः । नवः स्तोत्ररूपः वेदनादो वेदघोषो यस्य स नववेदनादः । नदंश्चासौ नदीनन्दनः षण्मुखो गाङ्गेयो हि सः तस्य नन्दनाः सन्तोषकरास्तेषां नदन्नदीनन्दनन्दनानाम् । विनिन्दिनां स्वात्मनो

विशेषेण निन्दकानाम् । आनन्दो दावो वनमिवानन्ददावस्तम् । दाववद्वनवह्निना तुल्यं यथा तथा अदन् भक्षयन् आदिदेवः श्रीकृष्णः दिदेव 'दिवु क्रीडादौ' लिट् चिक्रीड । अत्र वर्णनियमेषु त्र्यक्षरीनियमरूपं चित्रम् । दकारवकारनकाराणामेव नियमेन विन्यासात् । वर्णशब्देन व्यञ्जनमत्र विवक्षितमिति न कोऽपि क्षुद्रोपद्रवः । छेदस्तु– दिदेव । नन्दीनविनोददः । अदन् । आनन्ददावम् । नववेदनादः । नदन्नदीनन्दननन्दनानाम् । विनिन्दिनाम् । दाववत् । आदिदेवः । इति ।। वृत्तं तूपजातिः ।।६४।।

**विनिर्मथन् मर्मणि गोगणैः स्वैर्विकीर्यमाणैः ककुभां मुखेषु ।**
**निरन्तरं तामसजातमेतदसंशयं गोपतितामशात्सः ।। ६५ ।।**

**विनिर्मथन्निति** ।। स श्रीकृष्णः ककुभां दिशां मुखेषु प्रदेशेषु विकीर्यमाणैर्विक्षिप्यमाणैः स्वैरात्मीयैः गोगणैः वाणसमूहैः । अन्यत्र किरणनिकरैः । निरन्तरं निबिडम् । तामसानां तमोगुणप्रचुराणामसुरसैन्यानां जातं समूहम् । अन्यत्र प्रज्ञादिलक्षणेऽणि तमांस्येव तामसानि तेषां जातं मर्मणि जीवस्थाने 'जीवस्थानं भवेन्मर्मे'ति हलायुधः । विनिर्मथन् 'मथे विलोडने' इति भौवादिकस्येदं शत्रन्तं रूपमिति 'विनिर्मथन्नुच्छरस' इति द्वितीये व्याख्यातम् । विलोडयन् सन् । असंशयं न विद्यते संशयो यस्मिन् कर्मणि तद्यथा भवति तथा । गोपतितां गोपतिशब्दवाच्यत्वं गोपालत्वं सूर्ये तु त्विट्पतित्वम् । 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ'रित्यमरः । अत्र 'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् । ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ।।' इति लक्षणोदाहरणाभ्यां निरूपितो निरुक्तिर्नामालङ्कारः । श्रीकृष्णे वर्णनीयत्वेन प्रस्तुतेऽप्रस्तुतः सूर्योऽपि परिस्फुरतीति समासोक्त्यलङ्कारश्चोक्तेन सङ्कीर्यते । उपेन्द्रवज्रानामकं वृत्तम् ।। ६५ ।।

**अमोघवेधी विविधास्त्रवृष्टिस्समूहमेनं मुसली जघान ।**
**जानार्दनेरर्दयतः सुरारीन् स्वदुर्गमो मार्गणमार्ग आसीत्**
**॥ ६६ ॥**

**अमोघेति** ॥ अमोघं वेधितुं शीलमस्येति ताच्छील्ये णिनिप्रत्ययेऽमोघवेधी । विविधा नानाप्रकारा अस्त्राणामायुधानां वृष्टिर्यस्य विविधास्त्रवृष्टिः । मुसलमयोग्रमस्यास्तीति मुसली बलभद्रः । एनं समूहं परसैन्यानामिति शेषः । जघान 'हन हिंसागत्योः' लिट् हिंसितवान् । एवं च सति सुरारीनसुरानर्दयतः । 'अर्द हिंसने' । हिंसतो जानार्दनेः जनार्दनस्य श्रीकृष्णस्यापत्यं जानार्दनिः 'अत इञ्' जनार्दनशब्दस्य अवृष्ण्याद्यर्थत्वात् 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति नाणप्रत्ययः । तस्य प्रद्युम्नस्य मार्गणानां बाणानां मार्गः । स्वदुर्गमः सु सुष्ठु अदुर्गमः अत्यन्तसुगम आसीत् । 'अस भुवि' लङ् । बलरामेण प्रतिबन्धकीभूतप्रतिभटसैन्ये हते प्रद्युम्नबाणा अप्रतिबन्धप्रसरा अभवन्नित्यर्थः । उपजातिर्वृत्तम् । पूर्वार्धे हेतोरुत्तरार्धे हेतुमतश्च वर्णनाद्धेतुरलङ्कारः ॥ ६६ ॥

**पृथ्व्यां च कुञ्चितकचानि सुरुञ्चि कुञ्चि-**
**चञ्चन्ति काञ्चनमहामकुटाञ्चितानि ।**
**आतञ्चितार्करुचिकुण्डलदीप्तिमुञ्चि**
**सञ्चिच्यिरे शरहतामरभिच्छिरांसि ॥ ६७ ॥**

**पृथ्व्यामिति** ॥ कुञ्चिता अरालाः कचाः केशा येषां तानि कुञ्चितकचानि । 'अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम्' इति । 'कच केशः शिरोरुहम्' इति चामरः । शोभना रुग् दीप्तिर्येषां तानि सुरुञ्चि । कुञ्चीभिः

कुञ्चिकाभिः । भीरुभीषणरचनाभिः चञ्चन्ति गतिमन्ति चलन्ति मनोज्ञानीति यावत् । कुञ्चीश्चञ्चन्ति गच्छन्तीति वा गम्यादित्वात्समासः । काञ्चनमयानि महामुकुटानि किरीटानि तैरञ्चितानि पूजितानि आतञ्चिता आप्यायिता अर्कस्य रुचित्स्विट् ययोस्ते तथा ते च ते कुण्डले च तयोर्दीप्तिं मुञ्चन्तीति तथा । शरहतानि यानि अमरभिदां देवविरोधिनामसुराणां शिरांसि । पृथ्व्यां भूतले सञ्चिच्यिरे 'सम्पूर्वाच्चिञ् चयन' इत्यतो लिट् । आस्तीर्णानि च पूर्वक्रियासमुच्चयार्थश्चशब्दः । वसन्ततिलकनामकं वृत्तम् । 'वसन्ततिलका त्भौ जौ गा'विति सूत्रात् ।। ६७ ।।

**शोणितपूरणरागितरोर्वी वैरिविदारणकारणभूतैः ।**
**शोणितपूरणरागितरोर्वीभर्तृपतत्रिभिरत्र बभूव ।। ६८ ।।**

**शोणितेति** ।। वैरिणां शत्रूणां विदारणे भेदने कारणभूतैः कारणत्वं प्राप्तैः प्रमाणभूत आचार्य इत्यत्र प्रमाणत्वं प्राप्त इति कैयटे व्याख्यातमित्युक्तमधस्तात्कारणैरित्यर्थः । रणे युद्धे रागितरा मात्सर्यवत्तरा ये उर्वीभर्तारो भूपतयस्तेषां पतत्रिभिर्बाणैः । रणरागितरोर्वीभर्तृपतत्रिभिः । अत्र युद्धरङ्गे शोणितपूः शोणितपुरी शोणितस्य रक्तस्य पूरणेन पूर्त्या रागितरा 'अल्पाच्तरम्' इत्यत्रेव स्वार्थे तरप् । रागिणी तसिलादिष्वाकृत्वसुच इति पुंवद्भावः । तादृशी उर्वीभूमिर्यस्याः सा समासान्तविधेरनित्यत्वात् 'न द्युतश्च' इति न कप् । यद्वा शोणितपूः रणरागितरा रणेन लोहिततरा बभूव । अस्मिन् पक्षे उर्वी वैरिविदारणकारणभूतैरिति छेदः । उर्वीति शोणितपुरो विशेषणं वा । उरुशब्दाद् 'वोतो गुणवचनात्' इति ङीष् । उत्तरार्धे शोणितस्य पूरणाः पतत्रिण इति योजना । 'पूरी आप्यायन' इत्यतः करणे ल्युट् । बभूव । अत्रार्धादियमकं शब्दालङ्कारः । दुष्करय-

मकेऽपि वृत्त्यनुप्रासः कविनैपुणीविलासः । दोधकनामकं वृत्तम् । 'दोधकवृत्तमिदं भभभागौ' इति तल्लक्षणम् । पदच्छेदस्तु– शोणितपूरणरागितरा । उर्वी । वैरिविदारणकारणभूतैः । शोणितपूरणरागितरोर्वीभर्तृपतत्रिभिः । अत्र । बभूव । इति ।। ६८ ।।

**नेत्रैर्दीर्घैर्विजितशफरीविभ्रमैः सम्भ्रमद्भिः**
**बाहुग्राहे वदनकमले केशशैवालमाले ।**
**रक्तौघेऽस्मिन् सरिदुपमिते सान्द्रमस्तिष्कपङ्के**
**मन्दं मन्दं दधुरुडुपतां स्यन्दनाः स्यन्दमानाः ।। ६९ ।।**

**नेत्रैरिति** ।। विजिताः पराजिताः शफरीणां मीनजातिविशेषणां विभ्रमा विलासा यैस्तानि । विजितशफरीविभ्रमाणि तैः । मीनसदृशैरिति यावत् । सम्भ्रमद्भिः अतिचञ्चलैः । दीर्घनेत्रैः । शरखड्गादिप्रतिहतिपातितप्रतिभटनयनैः मीनायितैः । सरिदुपमिते सरित्तुलिते । बाहव एव ग्राहा नक्रा यस्मिन् सः बाहुग्राहः तस्मिन् विभाषा ग्रह इति णः । 'अवहारः स्मृतो ग्राहः कुम्भीरो नक्र उच्यते' इति हलायुधः । वदनानि कमलानि यस्मिन् सः वदनकमलस्तस्मिन् । केशाः शैवालमाला यस्मिन् । उपसर्जनह्रस्वत्वम् । केशशैवालमालस्तस्मिन् । 'जलनीवी तु शैवालः शैवल' इत्यमरः । सान्द्रा घना मस्तिष्कामास्तीकस्नेहाः पङ्का यस्मिन् सः सान्द्रमस्तिष्कपङ्कस्तस्मिन् । 'घनं सान्द्रं निरन्तरम्' इत्यमरः । 'मस्तिष्को मास्तिकस्नेह' इति हलायुधः । अस्मिन् उक्तविशेषणे रक्तौघे रक्तानां वृन्दे प्रवाहे वा । 'ओघो वृन्देऽम्भसां रय' इत्यमरः । मन्दं मन्दं स्यन्दमाना गच्छन्तः स्यन्दना रथाः 'शताङ्गः स्यन्दनो रथ' इत्यमरः । उडुपतां प्लवत्वम् । 'उडुपं तु प्लवः कोल' इत्यमरः । दधुः

'डुधाञ् धारणे' लिट् । सरिदुपमित इत्युपमा । बाहुग्राह इत्यादौ रूपकमपि सादृश्यपर्यवसाय्येवेति नोपमात्वक्षतिः । मन्दं मन्दमिति वीप्सायां द्विर्वचनम् । नित्यवीप्सयोरिति शास्त्रात् । अनेकभावात्मकस्य स्यन्दतेर्यदा भावाः सर्वेऽपि मन्दत्वेन व्याप्तुमिष्टा भवन्ति । तदा वीप्सास्तीति द्विर्वचनम् । प्रतिस्यन्दनस्यन्दनक्रियं मान्द्यस्य कविना प्रतिपिपादयिषितत्वात् 'प्रकारे गुणवचनस्य' इति द्विर्वचने कृते कर्मधारयवद्भावात् सुब्लुकि मन्दं मन्दमिति स्यात् । अत एव चतुर्थसर्गे– 'मन्दमन्दममनिष्ट तं रतिः' इति कविः प्रायुङ्क्त । सर्वमेतन्मन्दं मन्दमित्यप्रकारार्थत्वे इति वामनसूत्रे प्रपञ्चितम् । अत एव कालिदासः– 'मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्' इति मेघसन्देशे प्रायुङ्क्त । मनोरमायां तु– 'मन्दं स्वतो मन्दं मन्दगामिनं त्वां पवनो मन्दं नुदतीति कथञ्चिदुन्नेयम्' इत्युक्तम् । नातीव स्वरसोऽसौ पक्षः । उक्तरीत्या द्विर्वचननिर्वाहसम्भवात् । अत्र मन्दाक्रान्तानामकं वृत्तम् । तथाच वृत्तरत्नाकरे– 'मन्दाक्रान्ताजलधिषड्गैर्मो भनौ तौ गुरू चेत्' इति तल्लक्षणमुक्तम् । मगणो भगणनगणौ तगणतगणौ गुरुद्वयं चतुर्भिः षड्भिः सप्तभिश्च विरम्य पठ्यन्ते चेत् मन्दाक्रान्तानामकं वृत्तमिति तदर्थः ।। ६९ ।।

**रसदन्तराश्रितमुदस्तदाहरे रसदन्तरासिसहनस्य तद्धनुः ।**
**रसदन्तराजदिषुसर्पसर्पणैरसदन्तरानिति रिपूनरोदयत् ।।७०।।**

**रसदिति** ।। तदा सर्वप्रतिभटप्रतिहतिकाले । अन्तराश्रिता मुन्मोदो यस्य तस्यान्तराश्रितमुदः । रसो विषमिवाचरन् रसन् अन्तरः अन्तरात्मा मनो येषां ते रसदन्तराः । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस' इत्यभिधानाद्विषायमाणमानसास्तेषामसयः खड्गास्तेषां तत्प्रहाराणां सहनस्य

सहिष्णोः । सहेर्नन्द्यादित्वात्कर्तरि ल्युः । अनुदात्तेतश्च हलादे'रित्यज्वा । हरेः श्रीकृष्णस्य तच्छार्ङ्गत्वेन प्रसिद्धं रसच्छब्दायमानं धनुश्चापः रसो वीर्यमेव दन्तः तेन राजन्त इषवो बाणा एव सर्पास्तेषां सर्पणैः प्रचारैः । असत् अविद्यमानमन्तरं परिधानं वर्म येषां ते असदन्तराः 'अन्तर-मवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । तान् रिपून् । इति उक्तप्रकारेण अरोदयत् । 'रुदिर् अश्रुविमोचन' इत्यतो ण्यन्ताल्लङ् शत्रूनश्रुविमोचनवतोऽकरोत् । अत्र पादचतुष्टयादियमकं शब्दालङ्कारः । रसदन्तराजदिषुसर्पेति रूपकमर्थालङ्कारश्च संसृज्येते । मञ्जुभाषिणी नामकं वृत्तमुक्तलक्षणम् । छेदस्तु– रसत् । अन्तराश्रितमुदः । तदा । हरेः । रसदन्तरासिसहनस्य । तत् । धनुः । रसदन्तराजदिषुसर्पसर्पणैः । असदन्तरान् । इति । रिपून् । अरोदयत् ।। इति ।। ७० ।।

**आयोधनायोदितमानमस्मिन्नायाति पीताम्बरमग्रियोनौ ।**
**चचार[१] चण्डौजसमण्डजेशं तुण्डप्रहाराय शिखण्डिराजः**
**।। ७१ ।।**

**आयोधनायेति** ।। अस्मिन् अग्निर्योनिर्हेतुर्यस्यासावग्नियोनिरग्निभूस्तस्मिन् गुहे । सेनानीरग्निभूर्गुह' इत्यमरः । आयोधनाय युद्धाय 'युद्धमायोधनं जन्य'मित्यमरः । उदित उद्भूतो मानश्चित्तसमुन्नतिर्यस्य तम् । उदितमानं पीताम्बरं श्रीकृष्णम् । आयाति आभिमुख्येन याति सति । शिखण्डिराजः मयूराधिपतिः शिखण्डिनां राजा 'राजाहस्सखिभ्यष्टच्' इति व्युत्पत्तिः । षण्मुखवाहनभूतः । चण्डं क्रूरमोजो बलं यस्य स चण्डौजास्तम् । 'स्यादोजो बलतोययोः' इति केशवः । अण्डजाः पक्षिणस्तेषामीशः ईश्वरो

१. 'ससार' इति पाठान्तरम् ।

गरुडस्तम् । तुण्डप्रहाराय तादर्थ्ये चतुर्थी । चञ्चुपुटेन प्रहर्तुं चचार चरगतिभक्षणयोर्लिट् अभिससार । ससारेति क्वचित्पाठः । इन्द्रवज्रोपेन्द्रवज्रयोर्मिश्रणादुपजातिवृत्तम् ।। ७१ ।।

**कुमारयुग्यमापतत्ततोवितोदरोदितैः ।**
**कुमारयुग्यमापतत्ततोवितो दरोदितैः ।। ७२ ।।**

**कुमारेति** ।। छेदस्तु– कुमारयुक् । यं । आप । तत् । ततः वितः । अदरोदितैः । कुं । आर । युग्यम् । आपतत् । ततः । वितोदरोदितैः । इति । ततः शिखण्डिनः आगमनानन्तरम् । कुमारयुक् कुमारेण षण्मुखेन युक् युक्तः । 'ऋत्विगि–'त्यादिना युजेः क्विन् । 'युजेरसमास' इति समासे नुमः प्रतिषेधः । आपतत् आगच्छत् तत् प्रसिद्धं युग्यं वाहनं मयूरः । 'युग्यं शर्वस्य धनुषि वाहने त्रिषु बोद्धरि' इति केशवः । यं गरुडमान ततस्तस्मात् । वितो गरुडात् । अदरोदितैः अदरमदभ्रं यथा तथा उदितैरुत्पन्नैः । वितो दरोदितैः विशिष्टैस्तोदैर्व्यथाभिः रोदनैश्च सहेति शेषः । कुं । भूमिम् । आर 'ऋ गतौ' लिट् प्राप भूमौ पपातेत्यर्थः । अर्धावृत्तिर्यमकं शब्दालङ्कारः । प्रमाणिकानामकं वृत्तम् । तथाचोक्तं वृत्तरत्नाकरे– 'प्रमाणिका जरौ लगौ' इति जगणरगणौ लघुगुरू च यत्र क्रमान्निबध्यन्ते तत्प्रमाणिकावृत्तमिति तदर्थः ।। ७२ ।।

**शरेण शातेन च शार्ङ्गपाणे रणाजिरे स्वामिनि सन्नवेगे ।**
**ससाद सद्यः समितिर्गणानां भीता भुजङ्गाशनहुङ्कृतिभ्यः ।। ७३ ।।**

**शरेणेति** ।। शार्ङ्गपाणेः शार्ङ्गं पाणौ यस्य स शार्ङ्गपाणिस्तस्य ।

रणाजिरे युद्धाङ्गणे । स्वामी विशाखस्तस्मिन् 'स्वामी प्रभौ विशाखे च' इति विश्वः । 'विशाखः शिखिवाहनः' सन्नोऽवसन्नः क्षीणो वेगो यस्य स तथा तस्मिन् सति । गणानां प्रमथानां समितिः सङ्घः 'सङ्घे सभायां समितिः' इत्यमरः । 'अथ गणश्चये सैन्यभेदप्रमथयो'रिति दर्पणः । भुजङ्गाशनस्य गरुडस्य हुङ्कृतिभ्यः हुङ्कारेभ्यः 'भीत्रार्थानां भयहेतु'रिति पञ्चमी । भीता सती सद्यस्तत्क्षणे ससाद 'षद्लृ विशरण गत्यवसादनेषु' इत्यतो लिट् विशीर्णाभूत् । अन्त्यपादेन्द्रवज्रावृत्तम् ।। ७३ ।।

**गमिता भुवं गरुडपक्षमारुतैरविपां च जन्यमहितं विहायसा ।**
**रविपाञ्चजन्यमहितं विहायसा मुमुदेऽतिमत्तबलसीरिदुस्सरा**
**।। ७४ ।।**

**गमितेति** ।। गरुडपक्षयोर्मारुतैर्वायुभिः । अविपाम् अवयः पर्वताः पा रक्षकाः यस्याः सा अविपा ताम् । 'अविर्मेषे गिरौ रवा'विति कविदर्पणः । पातेः कर्तरि विच् । पर्वतरक्षिता हि भूः सुप्रतिष्ठितेति पौराणिकप्रसिद्धिः । विशेषेण पातीति विपाः अः परमात्मापि विपाः पालको यस्याः सा तथा तामिति वा । भुवं गमिता प्रापिता सा षण्मुख-सेना । रविणा ध्वनिमता पाञ्चजन्यनामकशङ्खेन महितं पूजितमाप्यायितं रविपाञ्चजन्यमहितम् । हितं न भवतीत्यहितं जन्यं युद्धं 'युद्धमायोधनं जन्य'मित्यमरः । विहाय त्यक्त्वा । अतिमत्तो यो बलभद्रः तस्य यः सीरो लाङ्गलं तेन दुस्सरा सर्तुमशक्या अतिमत्तबलरामहलायुधविषयीभूता सती । विहायसा आकाशमार्गेण मुमुदे च 'मुद हर्षे' लिट् मुदितवती । गरुडपक्षवातेन भुवं गमितापि कथञ्चिद्युद्धं विहायाकाशमार्गं गतवती बलभद्रप्रहरणाविषयतया सन्तोषमापन्नेवेति भावः । अर्धान्तादियमकं

शब्दालङ्कारः । मञ्जुभाषिणीनामकं वृत्तम् । छेदस्तु– अविषाम् । च जन्यम् । अहितम् । विहाय । सा । रविपाश्वजन्यमहितं विहायसा । इति ॥ ७४ ॥

**वक्त्रत्रिद्वय उद्यदौष्ण्यसलिले तैरग्निजे मन्धरे**
**सत्राविष्टरुषा गणैश्च सभयैर्बाणापदः कारणे ।**
**सच्चक्रं दरहस्तमेत्य स दधत् सख्यं स्वरव्यञ्जितं**
**तं शूलीवपुषा सदोल्लसदसिं रेजे रणे शिक्षितम् ॥ ७५ ॥**

**वक्त्रेति** ॥ बाणस्यापदः बाणासुरस्य विपत्तेः बाणापदः कारणे हेतुभूते रणे सभयैः भयसहितैस्तैर्गणैः प्रमथैः । सत्रा सह । 'साकं सत्रा समं सहे'त्यमरः । अग्निजे अग्नौ जायत इत्यर्थे 'सप्तम्या जनेर्डः' । अग्नौ जाते । उद्यद् गच्छत् औष्ण्यमुष्णत्वं यस्य तदुद्यदौष्ण्यमुक्तविधं सलिलं जलं यस्य स तथा तस्मिन् उत्पन्नश्रमजले । वक्त्ररूपं त्रिद्वयं यस्य स तथा षण्मुखस्तस्मिन् । त्रयाणां द्वयं त्रिद्वयं वक्त्रं त्रिद्वयं यस्येति विग्रहनिष्कर्षः । त्रीणि च तानि द्वयानि वक्त्राणि त्रिद्वयानि यस्येत्यपि विगृह्णन्ति । मन्धरे सति मन्दे अवसन्न इति यावत् । 'अथ मन्धरः मन्दे वक्रे पृथौ च' इति केशवः । स शूली शिवः । आविष्टा रुट् क्रोधो यस्य तदाविष्टरुट् तेनाविष्टरुषा 'कोपक्रोधामर्षरोषप्रतिघारुट् क्रुधौ स्त्रिया'मित्यमरः । वपुषा शरीरेण उल्लसन् प्रकाशमानः असिर्नन्दकाख्यः खड्गो यस्य स उल्लसदसिः तम् । सदा शिक्षितं कृतहस्तं कौशल-शालिनम् । दरः शङ्खो हस्ते यस्य तम् । शङ्खस्य ध्वनिद्वारा ध्वनिद्वारा प्रहरणस्य विवक्षया सप्तम्याः परत्वम् । 'शङ्खभियोर्दर' इति दर्पणः । सद्विद्यमानं चक्रं सुदर्शनाख्यं यस्य तं चक्रपाणिं श्रीकृष्णमेत्य प्राप्य ।

वपुषा तमेत्येत्यनेन दूरेऽवस्थानं व्यावर्तयति । स्वरेण ध्वनिविशेषेण सर्वसूचकेन व्यञ्जितं ज्ञापितं सख्यं 'सख्युर्यत्' इति यत्प्रत्ययः । मैत्रीं दधत् दधानः सन् रेजे 'राजृ दीप्तौ' लिट् दिदीपे । स्वगणे षण्मुखे सन्ने चक्रपाणिं हरिं हरः सख्यं सूचकशब्देन व्यञ्जयन् वपुषा तदैदिति भावः कविर्दुर्बोधत्वात्काव्यनामाह— चक्रबन्ध इति । अस्योद्धारक्रमः— 'लिखित्वा मण्डलाकारा दशरेखास्तदन्तरे । रेखायुग्मेन विलिखेत् तिस्रो वीथीरमूषु च । प्रथमायां पादमाद्यं द्वितीयस्यां द्वितीयकम् । तृतीयस्यां तृतीयं च प्रादक्षिण्यक्रमाल्लिखेत । एकमेव लिखेन्नाभौ त्रिपादीदशमाक्षरम् । चक्रस्य मण्डले बाह्ये तृतीयस्यान्त्यमक्षरम् । चतुर्थस्यादिमं कृत्वा वीथीनामन्तरालगैः । आद्यन्तगैश्च पादानां तुर्यःपादोऽक्षरैर्भवेत् । कविकाव्यादिनामानि वलयेषु यथारुचि । 'विन्यसेच्चक्रबन्धोऽयं चित्रवेदिभिरीरितः । इति । अत्र च षष्ठे वलये उषाहरणाख्यमिति काव्यनाम तृतीये वलये त्रिविक्रमकाव्यमिति कविनाम च निबद्धे । अत्रैव चक्रबन्धपद्यमिति चित्रमपि सूक्ष्मदृष्ट्या पद्यगतवर्णावमर्शेन दृश्यते । सच्चक्रमित्यत्र चक्रशब्दस्य बाणापद इत्यत्र बकारे दीर्घत्यागेन बशब्दस्य मन्धर इत्यत्रंधशब्दस्य बाणापद इत्यत्र पकारस्य उद्यदित्यत्र द्यवर्णस्य तमित्यत्रानुस्वारस्य च सङ्कलनेन पठने चक्रबन्धपद्यमिति स्फुरणात् तेन च सूच्यार्थ सूचनं मुद्रेति मुद्रालङ्कारो निबद्धो भवति । चक्रबन्धे वलयद्वयं वलयत्रयं वलयचतुष्टयं वृत्तान्तरेण चक्रबन्धश्लोकरचनाप्रकारः श्लोकश्लोकान्तरार्धादिवैचित्र्यमपि मदीयायामलङ्कारमञ्जरीव्याख्यायां द्रष्टव्यम् । शार्दूलविक्रीडितं नाम वृत्तम् ॥ ७५ ॥

**भूयो भवो भूतिभुजङ्गभूषः संरम्भतः सञ्जघटे परेण ।**
**स्फुरन्नुरोरत्नमरीचिरक्तमुक्तालतासक्ततनुश्च कृष्णः ॥ ७६ ॥**

**भूय इति** ।। भुजङ्गभूषः भूतिर्भस्म भुजङ्गाः सर्पाः भूषा भूषणानि यस्य स तथा । भवः शिवः भूयः पुनः– 'पुनरर्थेऽव्ययं भूय' इति केशवः । संरम्भतः सार्वविभक्तिकस्तसिः । संरम्भेणाहङ्कारेण 'विस्मयाटोपसंरम्भ-गर्वाहङ्कारदर्पका' इति शब्दरत्नाकरः । 'परोऽरिपरमात्मनोः' इत्यभि-धानात् । परेण परमात्मना श्रीकृष्णेन सञ्जघटे 'घट चेष्टायां' लिट् । स्फुरन् प्रकाशमानः । उरोरत्नं कौस्तुभस्तस्य मरीचिभिर्गभस्तिभिः । रक्ता लोहिता मुक्ता लतेव मुक्तासरः तया आसक्ता समवेता तनुर्देहो यस्य सः अरोरत्नमरीचिरक्तमुक्तालतासक्ततनुः । 'मरीचिः स्याद्गभस्ति-मृगतृष्णयोः' इति केशवः । श्रीकृष्णश्च परेण स्वस्य प्रतिभटभूतेन शिवेन सञ्जघटे । अत्र उरोरत्नमरीचिरक्तमुक्तेति मुक्तामणावतिधवलेऽपि धवलि-मत्यागेन तत्र रक्तिमवर्णनात्तद्गुणालङ्कारः । 'तद्गुणः स्वगुणत्यागादन्यदीय-गुणग्रहः । पद्मरागायते नासामौक्तिकं तेऽधरत्विषा' इति लक्षणोदाहरणे । तृतीयपादोपेन्द्रवज्रावृत्तम् । मरीचिरक्तेत्यत्र 'वा पादान्त' इति विकल्पेन गुरुत्वादुपजातिलक्षणसङ्गतिः । प्रयुक्तं च माघकाव्ये- 'तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः' इति ।। ७६ ।।

**अस्त्रानलत्रासितलोक[1] एकः संवर्तसन्देहमिह व्यधत्त ।**
**प्रत्यस्त्रपातप्रथितात्मवीर्यः परः पुनः सृष्टिमिवाततान**
**।। ७७ ।।**

**अस्त्रेति** ।। अस्त्राणि बाणादिप्रहरणान्येव अनलास्तैस्त्रासिता उद्वेजिताः लोका जना येन सः अस्त्रानलत्रामितलोकः । हरिहरयोरेकः शिवः । इह रणे संवर्तसन्देहं प्रलयकालोऽयमन्यो वा मृत्युविलास इति संशयं

१. 'अस्त्रानलभ्रामितलोकः' इति पाठान्तरम् ।

'संवर्तः प्रलयः कल्प' इत्यमरः । व्यधत्त विपूर्वाद्दधातेर्लङ् अकरोत् । 'प्रत्यस्त्राणां पातेन पातनेन प्रथितं प्रख्यापितमात्मनो वीर्यं पराक्रमो येन सः प्रत्यस्त्रपातप्रथितात्मवीर्यः परोऽन्यः स श्रीकृष्णः । पुनः सृष्टिमाततानेवेत्युत्प्रेक्षा । शिवः संवर्त इव श्रीकृष्णः स्रष्टेव दृष्ट इति भावः । अन्त्यपादोपेन्द्रवज्रावृत्तम् । अस्त्रानलभ्रामितेति पाठो 'वा चित्तविरागे' इत्यतो वा शब्दानुकर्षणाङ्गीकारेण मित्त्वेऽपि ह्रस्वाभावे वृद्धौ रूपमिति कथमपि व्याख्येयः ।। ७७ ।।

**विक्रीडन्तौ लीलया भ्रान्तजन्तू-**
**न्यातन्वन्तौ तौ समन्ताज्जगन्ति ।**
**दृष्ट्वा सिद्धास्तुष्टुवुर्देवदेवौ हृष्टाः**
**सन्तः सादरं नारदाद्याः ।। ७८ ।।**

**विक्रीडन्ताविति** ।। विशेषेण क्रीडां कुर्वन्तौ विक्रीडन्तौ लीलया विलासेन जगन्ति भ्रान्तजन्तूनि भ्रान्ता अनवस्थिता नानाव्यापारेषु नियुक्ता जन्तवः प्राणिनो येषां तानि तथा । समन्तात् सर्वत आतन्वन्तौ कुर्वन्तौ देवानां देवौ राजानौ । 'देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिय' इति विश्वः । तौ हरिहरौ दृष्ट्वा सिद्धाः प्रसिद्धाः । 'सिद्धः स्याद्देवयोनिषु । नित्ये प्रसिद्धे निष्पन्न' इति विश्वः । नारदाद्याः हृष्टास्सन्तः सादरं यथा तथा तुष्टुवुः 'ष्टुञ् स्तुतौ' लिट् । स्तुतवन्तः । शालिनीनामकं वृत्तं तल्लक्षणं तु– 'शालिन्युक्ता मतौ तगौ गोऽब्धिलोकैः' इति वृत्तरत्नाकरेऽभिहितम् ।। ७८ ।।

**चापाग्निनिस्सृतमहास्त्रशिखाप्रहार-**
**पर्याप्तपाटलिमपल्लविताविलाभ्याम् ।**

**आभ्यां नमोऽस्तु भजतां भवदारणाभ्यां**
**नारायणाय च नगेन्द्रनिवासिने च ।। ७९ ।।**

**चापेति** ।। चाप एवाग्निस्तस्मान्निस्सृता निर्गता महास्त्राण्येव शिखा ज्वालास्तासां प्रहारैः पर्याप्तः परिपूर्णो यः पाटलिमा श्वेतरक्तिमा तेन पल्लवितौ विजृम्भितौ आविलौ अनुज्ज्वलौ देहौ ययोस्तौ पर्याप्तपाटलिम-पल्लविताविलौ ताभ्याम् । 'अनुज्ज्वलेप्याविलं स्यात्' इति केशवः । पल्लवितौ अत एवाविलावनच्छौ पल्लवितौ च तावाविलौ ताभ्यामिति विशेषणसमासो वा । भगतां सेवमानानां भवस्य संसारस्य दारणाभ्याम् । 'दृ विदारण' इत्यतो ण्यन्तात् कर्तरि ल्युः । 'भवः संसारजन्मनोः' इति दर्पणः । नारायणाय च नगेन्द्रनिवासिने कैलासगिरिवासिने शिवाय चेत्याभ्यां नमः । अव्ययम् । 'नमः स्वस्तीत्यादिना चतुर्थी । इतरेतरयोगे चशब्दौ । नमस्कारोऽस्तु । वसन्ततिलकावृत्तम् एतदादिषट्श्लोक्या नारदादिस्तुतिः सप्रपञ्चं निरूप्यते । रूपकमलङ्कारः ।। ७९ ।।

**निर्विश्य योगमधितामरसंयुगाभ्यां**
**दोष्णां विधिः प्रमुदितामरसंयुगाभ्याम् ।**
**आस्ते वृषा च वरचामरसंयुगाभ्यां**
**कान्त्यानयोर्दिवि स कामरसं युगाभ्याम् ।। ८० ।।**

**निर्विश्येति** ।। निर्विश्य । योगम् । अधित । आमरसंयुगाभ्यां । दोष्णां । विधिः । प्रमुदितामरसंयुक् । आभ्यां । आस्ते । वृषा । च । वरचामरसंयुगाभ्यां । कान्त्या । अनयोः । दिवि । सः । कामरसं । युगाभ्याम् । इति पदच्छेदः । सम्यग् युञ्जिन्ति सम्बध्नन्तीति कर्तरि युजेः

क्विनि संयुज इति रूपम् । प्रकर्षेण मुदिताः सन्तोषिता अमराः संयुजो यस्य स प्रमुदितामरसंयुक् समोददेवपरिवृत इत्यर्थः । विधिर्ब्रह्मा । आमरसंयुगाभ्याममराणामयमामरस्तस्येदमित्यण् । अमरकार्यप्रयोजकः संयुगो युद्धम् । ययोस्तौ तथोक्तौ ताभ्याम् । 'सम्प्रहाराभिसम्पातकलिसंस्फोट-संयुगा' इत्यमरः । आभ्यां हरिहराभ्यां कर्तरि तृतीया । दोष्णां हरिहरयोर्बाहूनां युगाभ्यां युगलाभ्याम् । बाहूनां बहुत्वेऽपि युध्यमानौ प्रत्येकं द्वावेव बाहू इति तद्विवक्षया युगाभ्यामित्युक्तिः । करणे तृतीया । निर्विश्य । निर्वेशं सौख्यं प्राप्य । योगं ध्यानं मनस्समाधानम् । अधित दधातेर्लुङ् । 'स्थाघ्वोरिच्च' इतीत्त्वम् । 'ह्रस्वादङ्गात्' इति सिज्लोपः । धृतवा-नित्यर्थः । स प्रसिद्धो वृषा देवेन्द्रश्च । दिवि स्वर्गे अनयोः । एनादेशाभावे उपपत्तिः प्रागभिहिता । कान्त्या तेजसा इच्छया वा कामरसं शृङ्गारादि-रूपसर्वेन्द्रियविषयोपभोगं निर्विश्य प्राप्येति यावत् । वराण्युत्तमानि च तानि चामराणि च तेषां संयुगाभ्यां समीचीनयुगलाभ्याम् । 'युग्मं तु युगलं युगम्' इत्यमरः । तृतीयया सहेति लभ्यते । पार्श्वद्वये प्रत्येकं द्वे द्वे चामरे वीजनानुकूले स्तः ताभ्यां सेवितः आस्ते । 'आस उपवेशने' लट् । उपविशति । प्रथमार्धे तामरसंयुगाभ्यां तामरसंयुगाभ्यामिति सप्ताक्षर्योर्यमकम् । उत्तरार्धे तु मरसंयुगाभ्यामिति षडक्षर्योर्यमकमिति पादचतुष्टयान्तयमकं शब्दालङ्कारः । वसन्ततिलकावृत्तम् ।। ८० ।।

**नमो द्विजेन्द्रोक्षवरासनाभ्यां नमः सदाकृष्टशरासनाभ्याम् ।**
**स्वरोचिषा क्रान्तरविग्रहाभ्यां नमो नमः सुन्दरविग्रहाभ्याम्**
**।। ८१ ।।**

**नम इति** ।। द्विजेन्द्रो गरुड उक्षवरो वृषभोत्तमः । तावासने वाहने

ययोस्तौ द्विजेन्द्रोक्षवरासनौ ताभ्याम् आभ्यां हरिहराभ्यां नमः । आकृष्टे शरासने चापे याभ्यां तौ आकृष्टशरासनौ ताभ्यां नमः । स्वरोचिषा स्वयोरात्मनो रोचिषा तेजसा सदा आक्रान्तोऽन्तर्भूतः । पराभूत इति यावत् । रविरूपो ग्रहो ययोस्तौ स्वरोचिषाक्रान्तरविग्रहौ ताभ्यामाभ्यां नमः । इति मुनिनतिः । 'दन्तविप्राण्डजा द्विजा' इति । 'उक्षानड्वान् बलीवर्द ऋषभो वृषभो वृष' इति । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति । 'रोचिश्शोचिरुभे क्लीबे' इति । 'शरीरं वर्ष्म विग्रह' इति चामरः । पूर्वोत्तरार्धयोर्यमकं शब्दालङ्कारः । उपेन्द्रवज्रानामकं वृत्तम् ।। ८१ ।।

**वक्षस्स्थलक्ष्मीप्रिय पक्षिकेतो दाक्षायणीमिश्रशरीर शम्भो ।**
**प्रसीदतं संहरतं विहारं विक्षोभिकाया जगतः स्वशक्तेः**
**।। ८२ ।।**

**वक्ष इति** ।। वक्षसि तिष्ठतीति 'सुपिस्थ' इति कप्रत्यये वक्षस्स्था लक्ष्मीः प्रिया दयिता यस्य वक्षस्स्थलक्ष्मीप्रियः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । तस्य सम्बुद्धिः । पक्षी केतुश्चिह्नं यस्य स पक्षिकेतुस्त-त्सम्बुद्धिः । गरुडध्वज । दाक्षायण्या गौर्या मिश्रं शरीरं यस्य स तथा तत्सम्बुद्धिः । 'चिह्नं लक्ष्म च लक्षणम्' 'पालिः केतुर्ध्वजो लिङ्गम्' इति । 'आर्या दाक्षायणी गौरी' इति चामरः । 'पूर्वसदृशसमोनार्थकलह-निपुणमिश्रश्लक्ष्णैः' इति तृतीयासमासः । शम्भो महेश । युवामिति शेषः । प्रसीदतं प्रपूर्वः सीदतिरनुग्रहे वर्तते । प्रसादमनुग्रहं कुरुतम् । प्रार्थनीयमा-विष्कुर्वन्ति– जगतो विक्षोभिकाया । विक्षोभमनवस्थां कुर्वन्त्याः स्वशक्तेः । विहारं विलासं संहरतं सम्पूर्वो हरतिर्विरामार्थः । समापयतमिति लोट् । तृतीयपादोपेन्द्रवज्रावृत्तम् ।। ८२ ।।

**समावधीशाविति शास्त्रतन्त्रं न च द्वयोरीश्वरताविरोधात् ।**
**एकस्य तस्मात्परमेश्वरत्वं निश्चिन्महेऽनर्गलभूतये च ।।८३।।**

**समाविति** ।। अधीशौ युवामुभावपीति शेषः । समौ जगत्सर्जनादि-व्यापारे तुल्यावित्येतच्छास्त्रणां तन्त्रं सिद्धान्तो न च नैव भवति 'तन्त्रं प्रधाने सिद्धान्त' इत्यमरः । कुतः द्वयोः समप्रधानेश्वरताया निरङ्कुशैश्वर्यस्य विरोधात् । अन्योन्यवैमत्यापत्त्यानियमनादिव्यापार एवानुपपन्न इत्यर्थः । तस्मात्कारणात् एकस्य हरिहरयोरन्यतरस्य परमेश्वरत्वम् । अनर्गला अर्गलाहीना निरङ्कुशा सम्पत्तिरनर्गलभूतिस्तस्यै अनर्गलभूतये । 'भूतिर्भस्मनि सम्पदि' इत्यमरः । निश्चिन्महे 'लोपश्चास्यान्यतस्यां म्वोः' इत्युकारलोपः निश्चिनुमः । इति मुनीन्द्राणां हरिहरौ प्रतिवचनम् । उपजातिर्वृत्तम्
।। ८३ ।।

एवं सति कस्य परमेश्वरत्वं निश्चेतव्यं कस्य नेति लोकशङ्कां पराकुर्वन्त आहुः–

**यद्भ्रूविजृम्भप्रहिता विभूतिर्विश्वं विधत्ते विधिशर्वपूर्वम् ।**
**निहन्ति वाजस्रमनन्तशक्तेः कियान् प्रयासो विजये रिपोस्ते**
**।। ८४ ।।**

**यदिति** ।। यस्य भ्रुवोः विजृम्भो विजृम्भणं विक्षेप इति यावत् । तेन प्रहिता प्रेरिता 'कर्तृकरणे कृताबहुलम्' इति समासः । विभूतिदेवतो-त्पादाभिमान्यधिकरणन्यायेन विभूतिर्महालक्ष्मीः विधिशर्वौ ब्रह्महरौ पूर्वौ पुरोगौ यस्य तद्विधिशर्वपूर्वम् । विरिञ्चवाणीशगिरिजेशेन्द्रादिसमेतं विश्वं जगत् विधत्ते करोति उत्पादयति निहन्ति च संहरति च तस्येति शेषः ।

अजस्रं नित्यम् । अनन्ताः शक्तयो यस्य स तथा तस्य । ते रिपोर्विजये प्रयासः कियान् किम्प्रमाणः । "यं कामये तं तं मुग्रं कृणशेमि तं ब्रह्मणं तमृंषिं तं सुमेधाम् । अहं रुद्राय धनुरातंनोमि ब्रह्मद्विषे शरवे हन्तवाउं ।।" "विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः । यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।।" इत्यादिश्रुतिस्मृतिषु ब्रह्मशङ्कराद्युत्पत्तिसंहृतिप्राप्त्यादिहेतुत्वं महालक्ष्म्या आवेद्यते । एवं विधा विभूतिरपि यन्नियता तस्य प्रलयानलस्य तूलप्रदाह इव शत्रुविजयो नाश्चर्यमावहतीति भावः । काव्यार्थापत्तिरलङ्कारः वृत्त्यनुप्रासः शब्दालङ्कारः । अत्राप्युपजातिर्वृत्तम् ।। ८४ ।।

**इत्थं मुनीन्द्रैर्महितो मुकुन्दो महान्महिम्ना रममाण आजौ ।**
**स जृम्भणास्त्रप्रहितोरुवीर्यं मुमोच बाणं हरमोहनाय ।।८५।।**

**इत्थमिति** ।। इत्थं चापाग्रीत्यादिषट्श्लोक्युक्तप्रकारेण मुनीन्द्रैर्नारदाद्यैर्महितः पूजितः । महिम्ना महान् । आजौ युद्धे रममाणः मुकुन्दः स श्रीकृष्णः । जृम्भणास्त्रेण जृम्भणस्यास्त्रं जृम्भणास्त्रं तेन जृम्भणकारिणास्त्रमन्त्रेण प्रहितं प्रेरितम् उरु अधिकं वीर्यं प्रभावो यस्य स जृम्भणास्त्रप्रहितोरुवीर्यस्तं बाणं शरं हरमोहनाय हरस्य मोहमुत्पादयितुं मुमोच 'मुच्लृ मोक्षणे' मुक्तवान् । आद्यपादेन्द्रवज्रावृत्तम् ।। ८५ ।।

**इषुरयमवतो निरयाद्भक्तिरसं बिभ्रतो यमवतो निरयात् ।**
**अहितानीकान्तकरादशनिर्मेघादिवावनीकान्तकरात् ।।८६।।**

**इषुरिति** ।। इषुः । अयं । अवतः । निरयात् । भक्तिरसं । बिभ्रतः । यमवतः । निरयात् । अहितानीकान्तकरात् । अशनिः । मेघात् । इव ।

अवनीकान्तकरात् । इति पदच्छेदः । यमवतः यमनियमप्राणायाम-प्रत्याहारादिनियमवतः भक्तिः रसो मधुर इव भक्तिरसस्तं बिभ्रतः वहतः । भक्तान् निरयाद् नरकात् अवतो रक्षतः । अहितानां शत्रूणामनीकस्य सैन्यस्य अन्तं नाशं ताच्छील्येन कुर्वतः अहितानीकान्तकरात् । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति करोतेष्टप्रत्ययः । अवन्या भूम्याः कान्तो भूमिपतिः श्रीकृष्णः तस्य कराद्धस्तात् । मेघादशनिरिव निर्घात इव । अयं जृम्भणास्त्राहितवीर्य इषुः शरः निरयात् निरुपपदाद्यातेर्लङ् निर्गतवान् । अत्र पादद्वयान्तयमकं शब्दालङ्कारः । आर्यागीतिवृत्तम् । तथाच वृत्तरत्नाकरे तल्लक्षणमुक्तम् 'आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् । इतरत्तद्वन्निखिलं यदीयमुदितेयमार्यागीतिः ।।' इति ।। ८६ ।।

**ध्वस्तरसपरासुरतः समुदयलीलास तत्र सपरासुरतः ।**
**मोहमयान्मनसिभवद्वेषी तस्मात्प्रभामयान्मनसिभवः ।।८७।।**

**ध्वस्तेति** ।। ध्वस्तरसपरासुरतः । समुदयलीला । आस । तत्र । सपरासुः । अतः । मोहं । अयात् । मनसिभवद्वेषी । तस्मात् प्रभामयात् । मनसिभवः । इति पदच्छेदः । सपरासुः परासुभिः परेतैः सहिता समुदयलीला युद्धविलासः । 'समूहे स्यात्समुदयः समरे च समुद्गमे' इति केशवः । तत्र रणे । आस 'अस गतिदीप्त्यादानेषु' इत्यतो लिट् । दिदीपे । अतो ध्वस्ता रसपरा वीर्यतत्परा असुरा येन तस्मात् ध्वस्तरस-परासुरतः । प्रभामयात् प्रभाप्रचुरात् जाज्वल्यमानात् तस्मादिति शेषः । मनसिभवद्वेषी मन्मथरिपुः भवः शङ्करः । मनसि मोहं तन्द्रां '(तन्द्रामयात् । अथ रसः आस्वादनध्वनिसुधाम्बरवीर्यधामश्रेष्ठरागेषु?)' इति रत्नमाला । 'असुर्ध्वनिस्तु प्रज्ञायामसवो भूम्नि जीविते' इति केशवः । मनसि भवेत्यत्र

'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । द्वेषीत्यत्र सस्पृचानुरुधेत्यादिना द्विषेर्घिनुणप्रत्ययः । ध्वस्तरसपरासुरत इत्यत्र आद्यादित्वात्तसिः । 'मोहः पुनः स्यादज्ञाने मूर्छायां क्रोध एव च । अजयस्त्वाह तन्द्रायाम्' इति केशवः । अत्रापि पादद्वयान्तयमकमत्राप्यार्यागीतिर्वृत्तम् ॥ ८७ ॥

**महितसमिति रुद्रे विद्रुते जृम्भणैर्द्राक्**
**सुररिपुरधिरूढः स्यन्दनं नन्दिनीतम् ।**
**करनिकरविराजद्धेतिदीप्ताखिलाशः**
**त्रिदश इव वपुष्मानेष रोषो दिदीपे ॥ ८८ ॥**

**महितेति** ॥ महिता पूजिता च सा समिद्युद्धं च तस्याम् । 'समित्याजिसमिद्युध' इत्यमरः । जृम्भणैरास्यविदारणादिरूपैर्द्राग् झडिति रुद्रे विद्रुते पलायिते सति । सुररिपुर्वाणासुरः । नन्दिना सारथिभूतेन नीतं नन्दिनीतं स्यन्दनं रथमधिरूढः 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इति रुहेः कर्तरि क्तः । कराणां सहस्रसङ्ख्याकानां निकरः समूहस्तस्मिन्विराजन्त्यो या हेतयः शस्त्राणि ताभिर्दीप्ता अखिला आशा दिशो यस्य स तथा । वपुष्मान् रोषस्त्रिदश इव विग्रहवती रोषदेवतेव । दिदीपे 'दीपी दीप्तौ' लिट् जज्वाल । मालिनी वृत्तम् ॥ ८८ ॥

**असुरकुलललाम्नस्तस्य भक्तस्य शम्भौ**
**रणमधिगतकालं कत्थ्यते किं विविच्य ।**
**भ्रुकुटिकुटिलदृष्टेर्यस्य कोपाग्निधूमा**
**गगनचरगणानां दृष्टिपातं वितेनुः ॥ ८९ ॥**

**असुरेति** ।। असुराणां कुलस्य ललाम्नः केतुभूतस्य श्रेष्ठस्य वा । 'ध्वजे चिह्ने च पुच्छे च पशुशृङ्गे च भूषणे । छत्रे धाम्नि च पुण्ड्रे च श्रेष्ठे च द्वे तु घोटके । ......नकारान्तं ललाम वै' इति केशवः । शम्भौ भक्तस्य सेवकस्य भक्तशब्दो व्याख्यातः 'भक्तश्च शार्ङ्गिणी'त्यत्र द्वितीये । बाणासुरस्य । अधिगतः कालो यस्य तत् तदधिगतकालं रणम् । 'अस्त्रियां समरानीकरणाः कलह' इत्यमरः । विविच्य किं कत्थ्यते । 'कत्थ श्लाघायां' कर्मणि लट् । श्लाघ्यते कविभिः । तेन तत्र तत्रावसरे क्रियमाणो रणः सर्वोऽपि द्रष्टृलोकविस्मयमावहतीति भावः । भ्रुकुट्या भ्रूभङ्गेन कुटिला वक्रा दृष्टिर्यस्य स भ्रुकुटिकुटिलदृष्टिः तस्य । 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । भ्रुवोः कुटिः कौटिल्यं भ्रुकुटिः । कुट कौटिल्ये 'इगुपधात्कित्' 'इको ह्रस्वो ङ्यो गालवस्य' इति सूत्रे 'इयङुवङ्-भाविनामव्ययानां च नेति वाच्यम्' इति निषेधोत्तरं पठितस्य 'अभ्रुकुंसा-दीनाम्' इति वक्तव्यस्य अकारादेशपरतया ह्रस्वनिषेधपर्युदासपरतया च व्याख्यानात् अत्र भ्रुकुटीति भ्रूशब्दे ह्रस्वो युक्तः । यस्य बाणस्य कोप एवाग्निस्तस्य धूमा गगनचरगणानां देवगन्धर्वादिसमूहानां दृष्टिपातं दृष्टीनां चक्षुषां पातं पातनं पीडां 'दृष्टिशब्दोऽक्ष्णि बुद्धौ च ज्ञाने चापि' इति केशवः । वितेनुः 'तनु विस्तारे' लिट् कृतवन्तः । तस्येति पूर्वेण सम्बन्धः । अत्रापि मालिनी वृत्तम् ।। ८९ ।।

**सहस्रमस्माद्बृहतां भुजानां पृथक्कृतं चक्रभृता बभूव ।**
**वात्याहृतान्तेन यथा युगानां महाद्रिशृङ्गाद्द्रुमसन्निपातः**
**।। ९० ।।**

**सहस्रमिति** ।। बृहतां बृह वृद्धावित्यस्य औणादिकातिप्रत्ययान्तस्य बृहदिति रूपम् । वर्धमानानां भुजानां सहस्रमस्माद्बाणासुराद् 'ध्रुवमपायेऽपादानम्' इत्यपादानत्वे 'अपादाने पञ्चमी । वात्याहृता आहरतीत्याहृत् वात्याया आहृत् वात्याहृत् तेन युगानामन्तेनावसानेन प्रलयेन । महाद्रिशृङ्गाद् महापर्वतशिखरात् । द्रुमाणां सन्निपातो यथा संश्लेष इव । 'सन्निपातलक्षणो विधिः' इत्यत्र सन्निपातः संश्लेष इति वैय्याकरणैर्व्याख्यातत्वात् । चक्रभृता चक्रपाणिना श्रीकृष्णेन पृथक्कृतं बभूव । बाणासुरस्य सहस्रबाहुत्वात्तत्र द्वौ भुजाववशेष्य इतरान् बाहून् महाद्रिशृङ्गात् वृक्षान् युगान्तानिल इव चक्रपाणिश्चक्रेण न्यकृन्तदिति भावः । उपमालङ्कारः ।। ९० ।।

**रमारमार मारमाधवैककुण्डलान् रणे ।**
**सवासवासवासवा भयाभयोज्ज्वला च गौः ।। ९१ ।।**

**रमेति** ।। रमा । अरं । आर । मारमाधवैककुण्डलान् । रणे । सवासवा । आस । वा सवा । भया । अभयोज्ज्वला । च । गौः । इति पदानि । रमा जयलक्ष्मीः । मारः प्रद्युम्नश्च माधवः श्रीकृष्णश्च एककुण्डलो बलभद्रश्च मारमाधवैककुण्डलास्तान् । रणे । अरं शीघ्रम् । आर 'ऋ गतौ' लिट् । आगतवती । सवासवा सदेवेन्द्रा । अभयेनोज्ज्वला प्रकाशमाना अभयोज्ज्वला । गौः स्वर्गश्च वासमवस्थानमचाञ्चल्यं वाति गच्छतीति वातेः कः । भया कान्त्या आस । अस गतिदीप्त्यादानेषु लिट् । दिदीपे । सवासवासवा सवासः सनाकः वासवो देवेन्द्रो यस्याः सा सवासवासवा । आ अभितो व्याप्ताः सवा अध्वराः यस्यां सा । अभयाश्रिता अभयाहिता गौर्भूमिश्च मारादीन् आर । इति तु

केचिद्व्याचक्षते । 'बलभद्रे कुबेरे चाप्येककुण्डल इत्ययम्' इति केशवः । 'यज्ञः सवोऽध्वरो याग' इत्यमरः । अत्र पक्षे– सवासवासवा । आसवा । इति च्छेदः । अत्र प्रमाणिकावृत्तम् । यमकं शब्दालङ्कारः ।।९१।।

**अवाप्तदैतेयसभाजयं तं सुराः समागम्य सभा जयन्तम् ।**
**सिषेविरे सप्रसभा जयन्तं मुदं पुरस्कृत्य सभाजयन्तम्**
**।। ९२ ।।**

**अवाप्तेति** ।। अवाप्तदैतेयसभाजयं । तं । सुराः । समागम्य । सभाः । जयन्तम् । सिषेविरे । सप्रसभाः । जयन्तं मुदं । पुरस्कृत्य । सभाजयन्तम् । इति पदानि । सप्रसभाः सवेगाः 'प्रसभं स्याद्बलात्कारे' इति केशवः । भया सहिताः सभाः कान्तिमन्त इत्यर्थः । सुराः । अवाप्तदैतेयसभाजयम् अवाप्तो दैतेयानां दैत्यानां सभा दैतेयसभं 'सभा राजामनुष्यपूर्वे'ति क्लीबत्वम् । तस्य । आ समन्तात् जयो येन स तथा तम् । अत एव 'छायाबाहुल्य' इति नपुंसकत्वस्य विधानात् दीर्घाप्राप्तौ 'इक्षुच्छायानिषादिन्य' इति कालिदासवाक्ये आङः प्रश्लिष्य वैय्याकरणैर्व्याख्यानं कृतम् । जयन्तं शङ्करं 'जयन्तः शङ्करेऽपि स्याज्जयन्तः पाकशासनौ' इति विश्वः । जयन्तं जेतारं 'न लोकाव्यय–' इति षष्ठीनिषेधाज्जयच्छब्दयोगे जयन्तशब्दान्न षष्ठी । सभाजयन्तं सभाज प्रीतिसेवनयोरित्यतो णिजन्तात् शतृप्रत्ययः । प्रीयमाणं तं श्रीकृष्णम् । समागम्य सम्पद्य । मुदं सन्तोषं पुरस्कृत्य परितुष्टा इति यावत् । सिषेविरे । 'षेवृ सेवने' इत्यतो लिट् सेवितवन्तः । पादचतुष्टयान्तयमकं शब्दालङ्कारः । उपेन्द्रवज्रावृत्तम् ।। ९२ ।।

परिमलमिलिताथ पुष्पवृष्टिर्विजयसखे विजयिन्यजायताजौ ।
जगुरपि गरुडासनस्य साक्षात्कृतचरिता द्युचराः सुखप्रचाराः
॥ ९३ ॥

॥ इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यविरचिते उषाहरणे महाकाव्ये अष्टमः सर्गः ॥ ८ ॥

**परिमलेति** ॥ अथ श्रीकृष्णसेवनानन्तरम् । विजयिनि विशिष्टजयशालिनि विजयस्यार्जुनस्य सखा विजयसखः 'राजाहस्सखिभ्यष्टच्' इति समासान्तष्टच् । तस्मिन् श्रीकृष्णे । आजौ युद्धे । परिमलमिलिता परिमलेन सौगन्ध्येन मिलिता युक्ता पुष्पवृष्टिः पुष्पाणां वर्षमजायत 'जनी प्रादुर्भावे' लङ् । प्रादुरभवत् । गरुडासनस्य गरुडवाहनस्य श्रीकृष्णस्य साक्षात्कृतचरिताः साक्षात्कृतानि प्रत्यक्षीकृतानि चरितानि प्रमथमथनबाणासुरभुजकर्तनशङ्करजयादिचरित्राणि यैस्ते । द्युचराः दिवि चरन्तीति द्युचराः देवगन्धर्वादयः । चरतेः पचाद्यच् । सुखप्रचाराः सुखाः सुखसाधनीभूताः प्रचाराः प्रचरणानि येषां ते तथा । तथाविधाः सन्तो जगुरपि 'गै शब्दे' लिट् गीतवन्तश्च सिषेविर इति पूर्वक्रियासमुच्चयायापि बाणासुरभुजकर्तनशङ्करविजयादिदर्शनविभासितभगवदनुग्रहसम्पन्नसम्पदो देवादयः श्रीकृष्णचरितानि गीतवन्त इत्यर्थः । पुष्पिताग्रावृत्तम् । वृत्त्यनुप्रासः शब्दालङ्कारः स्फुटः ॥ ९३ ॥

॥ इति श्रीमदुषाहरणव्याख्यायां रसिकरञ्जनीसमाख्यायां सूरीन्द्रश्रीमच्चरणशिष्यसुमतीन्द्रतीर्थयतिविरचितायां अष्टमः सर्गः ॥ ८ ॥

## ।। अथ नवमः सर्गः ।।

**श्रीमन्तमान्तरमनुज्झितकोपकेतुं**
**दैत्येश्वराभिमुखमुद्भ्रुकुटीक्षणेन ।**
**भूयोऽभिवीक्ष्य समरोद्यतचक्रपाणिं**
**भूतेश्वरः स्तुतिमयं निजगाद वाक्यम् ।। १ ।।**

**श्रीमन्तमिति** ।। भूतेश्वरः शङ्करः । श्रीमन्तं प्रतिभटसुरारिविजयजनितशोभाशालिनमन्तर्भवमान्तरं स्वान्तरात्मानम् । उद्भ्रुकुटीक्षणेन उद्गता भ्रुवः कुटी कौटिल्यं भङ्ग इति यावत् यस्य तत् उद्भ्रुकुटि तादृशेनेक्षणेन लोचनेन । ''तौ तृतीयं भ्रुकुटी'त्यत्र भ्रूशब्दे ह्रस्वो व्याख्यातः समनन्तरातीतसर्गे । अनुज्झितकोपकेतुम् अनुज्झितोऽत्यक्तः कोपस्य केतुश्चिह्नं यस्य स तथा तम् । दैत्येश्वराभिमुखं दैत्येश्वरस्य बाणस्याभिमुखम् । समरोद्यतचक्रपाणिं समरे युद्धे उद्यतमुद्युक्तं चक्रं सुदर्शनं यस्य सः समरोद्यतचक्रपाणिर्यस्य स तथा तं श्रीमन्तं लक्ष्मीपतिं श्रीकृष्णं भूयः पुनः पुनः । अभिवीक्ष्य स्तुतिमयं स्तुतिप्रचुरं वाक्यं निजगाद 'गद व्यक्तायां वाचि' लिट् व्यक्तमुक्तवान् । अस्मिन् सर्गे प्रायेण वसन्ततिलकाख्यं वृत्तम् । तथाच सूत्रं– वसन्ततिलका त्भौ जौ गौ' इति । तदर्थो वृत्तरत्नाकरे– 'उक्ता वसन्ततिलका तभजा जगौ गः' इति विवृतः ।। १ ।।

**चित्ते जनस्य विजयिन्नविवेकभाज-**
**स्तेजस्वितेयमिति विस्मयगोचरोऽस्तु ।**
**शक्तिं तवाभिमृशतां विदुषामनन्ते-**
**त्याश्चर्यमाकलयतीति विचित्रमेतत् ।। २ ।।**

**चित्त इति** ।। एतदादिनवश्लोकी भूतेश्वरवचनम् । हे विजयिन् । अनन्तदेशतः कालतो गुणतश्चापरिच्छिन्न । तव इयं सर्वजनसाक्षात्कृत-तेजस्विता तेजः प्रतापोऽस्यास्तीति तेजस्वी 'अस्मायामेधास्रजो विनिः' इति विनिः । तस्य भावस्तेजस्विता प्रतापशालिता । अविवेकमज्ञानित्वं भजतीत्यविवेकभाक् 'भजोण्विः' तस्याविवेकभाजः । जनस्य पामरस्य । 'जनो लोके महर्लोकात्परलोके च पामरे' इति विश्वः । चित्तेऽतिविस्मय-स्यात्याश्चर्यस्य गोचरो विषयोऽस्तु । गोचरशब्दो नित्यपुल्लिङ्ग इति युक्तरसं स्त्रीपुंसयोः सामानाधिकरण्यम् तव शक्तिमभिमृशतां विचारयतां विदुषां तु । अत्याश्चर्यमाकलयति करोतीत्येतद्विचित्रम् । प्राज्ञानामत्यद्भुते वस्तुनि भगवति तेजस्वितादर्शनमत्याश्चर्यमावहतीत्येतदेवात्यद्भुतमिति भावः ।।२।।

**यामावृतामनवबोधविलासभेदैः**
**संसारकारणमुशन्ति विशालधाम्नीम् ।**
**सत्सौरसंविदुदिता विदिता हि वेदैः**
**सैवापुनर्भवकरी भवदीयशक्तिः ।। ३ ।।**

**यामिति** ।। हे अनन्त । विशालधाम्नीं विशालं पृथुलं धाम प्रभावो यस्याः सा तथा ताम् । 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीप् । यां तव शक्तिम् । अनवबोधा भवत्स्वरूपाज्ञानानि तद्विलासानां ये भेदा विशेषाः तैरावृतां संसारकारणमुशन्ति इच्छन्ति 'वश कान्तौ' इति धातोर्लट् । कान्तिरिच्छेति वैय्याकरणाः गृहीज्यादिलक्षणं सम्प्रसारणम् । जानन्तीति यावत् । सैव हि वेदैः विदिता वेदतात्पर्यविषयीकृता भवदीयशक्तिः सत्सौरसंविदुदिता सती च सा सुरीणां विदुषामियं सौरी तथोक्ता संविद् ज्ञानं तया उदिता प्रकाशिता चेत् पुनर्भवकरी पुनर्भवः पुनः पुनर्जननं

ताच्छील्येन करोतीति करोतेष्टः । सा नेत्यपुनर्भवकरी भवतीति शेषः । अत्र 'स्याद्व्याघातोऽन्यथाकारि तथाकरि क्रियेत चेत् । या विद्या मदयन्त्येता जयीन्द्रे विनयावहा' इति सोदाहरणमलङ्कारमञ्जर्यो लक्षितो व्याघातालङ्कारः ।। ३ ।।

**इच्छानुगा तव रमा रमणीषु रम्या**
**सूते सुतासुर पितामहमा[१]दिदेव ।**
**तत्सूनवो वयमनन्तगरुत्मदाद्यास्तद्वो**
**गुरूनुरुगुणान् प्रणुमः शरण्यान् ।। ४ ।।**

**इच्छेति** ।। हे सुतासुर सुता अभिषुता मृदिता असुरा बाणाद्या येन स तथा तत्सम्बुद्धिः । आदिदेव देवानामादिभूतेति यावत् । रमणीषु रम्या रमणीया । 'रम्ये तु रमणीयम्' इति केशवः । तव इच्छामनुगच्छतीति इच्छानुगा 'अन्यत्रापि दृश्यत' इति गमेर्डप्रत्ययः । रमा लक्ष्मीः पितामहं ब्रह्माणं सूते 'षूञ् प्राणिप्रसवे इत्यतो लट् । अनन्तगरुत्मदा(ता)द्या अनन्तः शेषः गरुत्मान् गरुडश्च आद्यौ येषां ते तथोक्ता वयम् । तत्सूनवस्तस्य पितामहस्य सूनवः पुत्राः । तत्तस्मात् गुरुगुणान् अत एव शरण्यान् शरणे रक्षणे साधून् । 'तत्र साधु'रिति यत्प्रत्ययः । गुरून्वः । भवद्रमापितामहान् प्रणुमः 'णु स्तुतौ' प्रकर्षेण स्तुमः रुद्रस्यैकस्यैकवचनमपि अन्यसाहित्याद्बहुवचनं लभते 'त्यदादीनी'त्येकशेषानुशासनात् । अनुप्रासः शब्दालङ्कारः । सुरासुरपितामहमित्यपि क्वचित्पाठः ।। ४ ।।

**अन्तश्चतुर्दश जगन्ति वसन्ति**
**वारांराशौ चराचरपितुः स्वपतस्सदैव ।**

---

१. 'सुरासुरपितामहम्' इति पाठान्तरम् ।

**शान्तात्मनां त्वनशनव्रतिनां यतीनां**
**चेतस्सरोजसुषिरेषु सुखासिका ते ॥ ५ ॥**

**अन्तरिति** ॥ आदिदेव । वारांराशौ 'तत्पुरुषे कृति बहुलम्' इति षष्ठ्या अलुक् । समुद्रे । स्वपतः स्वापं प्राप्नुवतः चराचरपितुस्तव । अन्तरुदरे सदैव चतुर्दश जगन्ति वसन्ति 'वस निवासे' लट् । एतादृशस्यापि ते तु । शान्तात्मनामुपरतमानसानाम् । अनशनं व्रतमेषामस्तीत्यनशनव्रतिनस्तेषां यतीनां सर्वेन्द्रियोपसंयमे प्रयतनशीलानां चेतांसि मनांस्येव सरोजानि पद्मानि तेषां सुषिरेषु विवरेषु । सुखासिका 'धात्वर्थनिर्देशे ण्वुल् वक्तव्य' इति आसेः ण्वुप्रत्ययः । सुखेनावस्थानमासिका सुखा सुखसाधनमिति वरा सुखसाधने सुखशब्दस्य लिङ्गत्रयमस्तीति केशवः । दहरविद्यायां 'तस्मिन्यदन्तस्तदुपासितव्यम्' इति श्रुतौ प्रसिद्धं तत्रावस्थानम् । अत्र 'पृथ्वाधेयाद्यदाधाराधिक्यं तदपि तन्मतम् । कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव' इति सोदाहरणं लक्षितोऽधिकालङ्कारप्रभेदः । 'अहो विशालं भूपाल भुवनत्रितयोदरम् । माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥' इत्युदाहृतवन्तश्च । प्रपञ्चस्तु कुवलयानन्दे ॥ ५ ॥

**उद्दामधामपरितापनितान्ततान्तप्रान्तान्तरं**
**त्रिभुवनं त्रिदशारिसङ्घम् ।**
**ग्रीष्मांशुमन्तमिव सन्ततमुद्धरिष्य-**
**न्नाषाढमास इव बाढमिहागतोऽसि ॥ ६ ॥**

**उद्दामेति** ॥ हे आदिदेव । उद्गतं दाम यस्मात्तदुद्दाम निरङ्कुशं धाम

तेजः प्रतापस्तस्य यः परितापस्तेन नितान्तमत्यर्थं तान्तं म्लानं प्रान्तं परिसरप्रदेशः अन्तरं मध्यं च यस्य स उद्दामेत्याद्युक्तस्तम् । त्रिदशानां देवानां येऽरयस्तेषां सङ्घं सङ्घातं 'सङ्घसङ्घातपुञ्जौघसार्थयूथकदम्बका' इति भागुरिरित्यमरव्याख्याने । ग्रीष्मांशुमन्तं ग्रीष्मर्तूद्भवसूर्यमिव सन्तं तमुद्धरिष्यन् परिहरिष्यन्निति यावत् । आषाढमास इव बाढम् अङ्गीकृति-र्यथा तथा भृशं वा । इहागतोऽसि । 'गत्यर्थाकर्मके-'ति कर्तरि क्तः । भूमाववतीर्णो वर्तस इत्यर्थः । अनेकेवोपमालङ्कारः ।। ६ ।।

**रूपं तवेदमतिसुन्दरमिन्दिरायाः**
**स्वानन्ददायि सुखदं च पयोजयोनेः ।**
**वागीशवायुविपवल्लभमस्मदिष्टं दृष्टं**
**मुकुन्द सदयं दुरितं दुनोति ।। ७ ।।**

**रूपमिति** ।। हे मुकुन्द तवातिसुन्दरमत्यन्तचारु । इन्द्रिराया लक्ष्म्याः स्वानन्दं ताच्छील्येन ददातीति स्वानन्ददायीत्युपपदसमासः । ददातेरातो युक् । 'चिण् कृतोरिति युक् । पयोजयोनेर्विरिञ्चस्य[१] सुखदम् । 'आतोऽ-नुपसर्गे क' इति ददातेः कप्रत्ययः । वागीशो बृहस्पतिः वायुर्मुख्यप्राणः विपो गरुडश्च तेषां वल्लभं दयितम् । अत्र वायुश्च विपश्च वायुविपौ वागीशश्च वायुविपौ चेति द्वन्द्व आश्रयितव्यः । यथा च अल्पाच्तरत्वा-

१. अत्र 'पयोब्धियोनेरिति मूले पठित्वा पयोब्धिरेव योनिरुत्पत्तिहेतुर्यस्या इति विगृह्य इन्दिराया इत्यस्य विशेषणीकृत्य, वागीश इत्यस्य वाचः सरस्वत्या ईशो ब्रह्मा इत्यर्थकरणे वायुविपेति तारतम्यनिर्देशक्रमानुरोधादौचित्यं दृश्यते । पक्षेऽस्मिन् स्वानन्दद । अयि इति पदच्छेदः । एवं कृतेऽभ्यर्हितं पूर्वमिति वागीशपदस्य पूर्वनिपातोऽपि युज्यते । न चेद्वायोः पर्वमिन्द्रादवरस्य गुरोर्निर्देशो नातीवौचितीमावहतीति ।

द्वागीशशब्दस्य पूर्वनिपातो युक्तः । अङ्गीकृतं चैवमेव वैय्याकरणैः 'होता-पोतानेष्टोद्गातार' इत्यत्र द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्व आश्रयणीय इति । अस्मदिष्टमस्माकमिष्टं सदयं दयया सहितं दृष्टमिदं रूपं दुष्कृतं दुनोति उपतपति । 'टुदु उपताप' इत्यतो लट् । पापानि निवर्तयतीत्यर्थः ॥ ७ ॥

**आराधयन्ति रमयन्ति समं ततस्त्वां**
**नृत्यन्ति यान्ति शरणं जयिनं जगत्सु ।**
**स्वर्गौकसोऽम्बरचरा गुणगीतनित्या**
**दिव्यस्त्रियः समुदिताश्च हतावशेषाः ॥ ८ ॥**

**आराधयन्तीति** ॥ हे मुकुन्द । त्वां स्वर्गौकसो देवा आराधयन्ति 'राध साध संसिद्धौ' पूजयन्ति । गुणानां गीतं भावे निष्ठा गानं तस्मिन्नित्या ध्रुवा अम्बरचरा गन्धर्वचारणादयो रमयन्ति रमु क्रीडायामित्यतो ण्यन्ताल्लट् । मित्सञ्ज्ञकत्वाद्ध्रस्वः । गुणगीतनित्या इति दिव्यस्त्रीणामपि विशेषणम् । दिव्यस्त्रियोऽप्सरसो नृत्यन्ति नृती गात्रविक्षेप इत्यतो लट् । युद्धे हतावशेषा हतानामवशेषा हतेभ्योऽवशिष्टा जनाश्च समुदिताः सन्तः । जगत्सु जयिनं त्वां शरणं रक्षितारं यान्ति 'या प्रापणे' लट् प्राप्नुवन्ति । समन्तत इति सर्वक्रियापदेभ्यः आदौ योजनीयम् । अत्र 'यथासङ्ख्यक्रमेणैव क्रमिकाणां समन्वयः । शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय' इति सोदाहरणं लक्षितो यथासङ्ख्यालङ्कारः ॥ ८ ॥

**सत्यं प्रभो प्रखरमुद्गरकर्कराणां**
**दोष्णां निकर्तनमवर्णरतस्य साधु ।**

**दण्डेन मार्दवमसत्सु समर्थयन्ते**
**सन्तो मतङ्गभुवि मत्त इवाङ्कुशेन ।। ९ ।।**

**सत्यमिति** ।। हे प्रभो श्रीकृष्ण । अवर्णरतस्य आक्षेपासक्तस्य बाणासुरस्य 'अवर्णाक्षेपनिर्वादपरिवादापवादवत्' इत्यमरः । प्रखराः प्रकर्षेण तीक्ष्णाः कठिना मुद्गरा द्रुघणशब्दितायुधविशेषास्त इव कर्करा दृढास्तेषाम् । 'कर्करस्तु पुमानस्थ्नि पाषाणे दर्पणेऽपि च । दृढे तु भेद्यलिङ्गः स्यात्' इति केशवः । 'कर्करो दर्पणे दृढे' इति विश्वश्च । 'उपमानानि सामान्य-वचनैः' इति समासः । दोष्णां भुजानां निकर्तनं 'कृती छेदन' इत्यतो भावे ल्युटि लघूपधगुणे च कर्तनमिति रूपम् । छेदनमित्यर्थः । साधु उचितं 'साधुः स्यात्सज्जने सौम्ये वार्धुषावुचितेऽपि च' इति दर्पणः । तथाहि सन्तः । असत्सु दण्डेन मार्दवं मृदुत्वं मृदुशब्दादिगन्ताच्च लघुपूर्वा-दित्यणि कर्मणि द्वितीया । मत्ते मदयुक्ते मतङ्गभुवि मतङ्गादृषेर्भवतीति मतङ्गभूर्गजस्तस्मिन् । अङ्कुशेन समर्थयन्ते । 'अर्थ उपयाञ्चायाम्' इत्यतो लट् सम्पादयन्ति । अत्र विकस्वरालङ्कारः । 'यस्मिन्विशेषसामान्यविशेषाः स विक्रस्वरः । स न जिग्ये महान्तो हि दुर्धर्षाः सागरा इव ।।' इति सोदाहरणं तल्लक्षणाभिधानात् ।। ९ ।।

**दत्ताभयोऽयमसुरः सपरिग्रहो मे पाल्यः**
**स कारणवशात् सदयं तवातः ।**
**भृत्येषु शिष्टिरवधेन विधानयोग्या**
**तत्क्षम्यतां यदपराधमनेन मोहात् ।। १० ।।**

**दत्तेति** ।। हे प्रभो । सपरिग्रहः परिग्रहेण परिजनेन सहितः 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः' इति विश्वः । दत्ताभयः दत्तमभयं यस्मै

स तथा सोऽयमसुरो बाणः यतो मे मम 'कृत्यानां कर्तरि वा' इति षष्ठी। मया कारणवशात् पाल्यः पालनीयः । अतस्तव सदयं दयया सहितं यथा तथा पाल्यः पालनीयः इत्यर्थः । तथाहि– भृत्येषु शिष्टिः शासनं शिक्षा । अवधेन अहननेन विधानस्य करणस्य योग्या । तत्तस्मादनेन बाणेन मोहाद्वैचित्यात् कर्तव्यमौढ्येनेति यावत् । यदपदराद्धम् आग आचरितम् । तत् क्षम्यताम् 'क्षमूष् सहन' इत्यतः कर्मणि लोट् ।।१०।।

**इत्यन्धकारिवचनैरुपचीयमानचेतःप्रसत्तिमभिदैत्यमुदूढशस्त्रः।**
**उद्गीर्णरश्मिनिकरं विनिवर्त्य चक्रं कृष्णः कथञ्चिदुचितं वच**
**आचचक्षे ।। ११ ।।**

**इतीति** ।। इत्युक्तप्रकारेण अन्धकारिवचनैरन्धकस्य अन्धकनामदैत्यस्यारिः शत्रुर्हरस्तस्य वचनैः । उपचीयमाना उपबृह्यमाना चेतसो मनसः प्रसत्तिः प्रसादो यस्य स तथा । अभिदैत्यम् । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । दैत्याभिमुख्येन उदूढमुद्धतं शस्त्रमायुधं येन स उदूढशस्त्रः श्रीकृष्णः । उद्गीर्णरश्मिनिकरम् उद्गीर्ण उद्वान्तः प्रसृतः रश्मीनां किरणानां निकरः समूहो यस्य तत्तथा चक्रं सुदर्शनाख्यं कथञ्चित्प्रार्थनादिनेति यावत् । निवर्त्य निवर्तितं कृत्वा । उचितं योग्यं वचो वचनमाचचक्षे 'चक्षिङ् व्यक्तायां वाची' इत्यतो लिट् व्यक्तमुवाच । चक्षिङः ख्याङादेशः 'वालिटी'ति विकल्पितः ।। ११ ।।

**तद्भक्तवत्सल भवेद्भवदाग्रहेण निर्भीतिरेष तव भूतवरः प्रभूतः ।**
**श्रेयस्विनां पृथुगुणाः प्रथमे प्रथन्तां तेऽप्यस्मदीहितमिदं**
**बहुमन्वते ये ।। १२ ।।**

**तदिति** ।। स चासौ भक्तस्तद्भक्तस्तस्मिन् वत्सलः स्निग्धस्तस्य सम्बुद्धिः श्रीशङ्कर । भवदाग्रहेण भवत आग्रहोऽनुग्रहस्तेन । 'आग्रहोऽनुग्रहासक्त्योः' इति विश्वः । तवैष बाणः निर्भीतिः निर्गता भीतिर्भयं यस्मात्स तथा । प्रभूतः सञ्जातः । 'प्रभूतौ प्राज्यसञ्जातौ' इति दर्पणः । स सन् भूतवरः भूतानां देवयोन्यन्तराणां प्रमथानां वरः स्वामी भवेत् । भवतेर्लिङ् । किं च येऽस्मदीहितमावयोश्चेष्टितं स्तवनप्रसादनादिरूपं बहुमन्वते सबहुकारं मन्वते पूजयन्ति 'मनु अवबोधने' लट् । श्रेयस्विनां शुभयोगिनां मध्ये प्रथमे आद्यभूताः । प्रथमशब्दस्य 'प्रथमचरमे–'त्यादिना जसि वा सर्वनामसञ्ज्ञा । तेऽपि पृथुगुणाः पृथवः गुणा येषां ते तथोक्ताः सन्तः । प्रथन्ताम् 'प्रथ प्रख्याने' लोट् प्रथिता भवन्तु ।। १२ ।।

**इत्युत्तरोक्तवचनो वदतां वरोऽसौ शम्भुं**
**प्रणामिनमभिप्रसृतप्रसादः ।**
**साकूतवीक्षणमवेक्ष्य मुदा मुकुन्दः**
**स्मेराननः स्म गमनाय धियं बिभर्ति ।। १३ ।।**

**इतीति** ।। इत्युक्तप्रकारमुत्तररूपमुक्तवचनं येन सः उत्तरोक्तवचनः । वदतां वक्तॄणां मध्ये वरः श्रेष्ठः । असौ मुकुन्दः । साकूतं साभिप्रायमीक्षणमवलोकनं यस्य तं प्रणामिनं प्रकर्षेण नमनशीलमवेक्ष्य । अभिप्रसृतोऽभितो विस्तृतः प्रसादोऽनुग्रहो यस्य सोऽभिप्रसृतप्रसादः स सन् । स्मेरमीषद्धसदाननं यस्य स स्मेराननः । गमनाय धियं बिभर्ति स्म 'लट् स्म' इति लिटोऽपवादो लट् । बभार 'डुभृञ् भरणे' लट् ।। १३ ।।

**उन्मुच्यमानगुणमस्त्रमृजूकृतं स्वमुत्सार्यमाण-**
**कवचं च भुजान्तरालम् ।**
**सौम्यं मुखं च कलहाध्यवसायमुक्तं**
**चित्तं च तस्य युगपद्विपरीयते स्म ।। १४ ।।**

**उदिति** ।। उन्मुच्यमानो गुणो मौर्वी यस्मात्तत् उन्मुच्यमानगुणम् । अत एव ऋजूकृतम् । च्वौ दीर्घः । पूर्वं वक्रमिदानीमवक्रमापादित-मित्यर्थः । स्वं स्वकीयमस्त्रं धनुः । 'अस्त्रमायुधचापयोः' इति केशवः । उत्सार्यमाणकवचम् उत्सार्यमाणं परिह्रियमाणं कवचं वर्म यस्य तत्तथा । भुजयोरन्तरालं मध्यं वक्षश्च । सौम्यमक्रूरं मुखं च । कलहाध्यवसायमुक्तं कलहस्याध्यवसायो निश्चयस्तस्मान्मुक्तम् 'अपेतापोढमुक्ते'ति समासः । चित्तं च तस्य शम्भुना प्रसन्नीकृतस्य श्रीकृष्णस्य सर्वं धनुरादिकं युगपदेकदा विपरीयते स्म 'वि-परि-पूर्वादिणः' कर्मणि लट् । स्मयोगात् विपर्ययं प्राप्तमित्यर्थः । पूर्वं धनुषो ज्यया वक्रस्य ऋजुभावः । सन्नद्धक-वचस्य वक्षसः तदुन्मोकः । मुखस्याक्रौर्यं कलहाभावेन तदध्यवसायशून्यत्वं मनस इति सर्वं सम्प्रति युद्धकालापेक्षया विपरीतमित्यर्थः । शङ्करे परमानुग्रहात् सर्वं भद्रमासीदिति कविवचनम् ।। १४ ।।

**कन्यापुरं पुरुजवो जितकाशिन-**
**स्तानासादयन्नतिदुरासदमादरेण ।**
**पक्षानिलापहतवीर्यमहाहिबन्ध-**
**स्तार्क्ष्योऽनिरुद्धरुजमाशु समुद्दधाव ।। १५ ।।**

**कन्येति** ।। पुरजवो भूरिवेगः । जितकाशिनः जिताहवान् 'जितकाशी

जितावह' इति हलायुधः । 'जितकाशी जितरण' इति वैजयन्ती च । तान् रामकृष्णप्रद्युम्नान् । अतिदुरासदं पराप्राप्यमिति यावत् । कन्यापुरं कन्यानामन्तःपुरमादरेण कर्मसु त्वरणेनासादयन् आगमयन् । तार्क्ष्यो गरुडः पक्षानिलापहतवीर्यमहाहिबन्धः । पक्षयोरनिलेन वायुना अपहतं वीर्यं यस्य स पक्षानिलापहतवीर्यः । महाहीनां बन्धो यस्य स तथा । बन्धस्य वीर्यापहतिश्च महाहिद्वारा । स सन् अनिरुद्धस्य रुजमुपतापमाशु समुद्दधाव 'धूञ् कम्पने' लिट् परिजहारेत्यर्थः ।। १५ ।।

**अन्योन्यवृत्तिनियमादनुमीयमानभेदौ**
**विविच्य कथमप्यभिवादयन्तम् ।**
**पीताम्बरायुगशरावुपगूहमानौ बालं**
**बलादिव चिरं न विरेमतुस्तम् ।। १६ ।।**

**अन्योन्येति** ।। अन्योन्यस्य वृत्तेर्व्यापारस्य नियमात् नियतत्वाद्धेतोः । अनुमीयमानो भेदो ययोस्तौ । कथमपि केनापि प्रकारेण पितामहं पितरं च विविच्य । अभिवादयन्तम् । वद सन्देशवचन इत्यतश्चौरादिकाच्छतृ-प्रत्ययेऽभिवादयन्तमिति रूपम् । नामोच्चारणपूर्वकं संस्कृतप्रयोगेण नमन्तं बालमनिरुद्धं पीताम्बरः श्रीकृष्णः अयुगशरो विषमशरः प्रद्युम्नश्च तौ तथोक्तौ । बलादिव चिरमुपगूहमानौ आलिङ्गन्तौ सन्तौ न विरेमतुः । 'व्याङ् परिभ्यो रम' इति परस्मैपदम् । विरामं न प्रापतुः 'रमु क्रीडायां' लट् ।। १६ ।।

**पश्चाद् घने नव इवैष विकृष्यताभ्या-**
**माश्लेषबन्धुयुगले विहितः पुरैव ।**

**पादाभिवादनपरः परिरभ्यमाणो**
**रामेण पूर्णशशिनेव बभौ कलङ्कः ।। १७ ।।**

**पश्चादिति** ।। नवे नूतने घने मेघ इव विद्यमाने । आश्लेषबन्धुयुगले आश्लेषस्य समालिङ्गनस्य यौ योग्यौ बन्धू कृष्णप्रद्युम्नौ तयोर्युगले । पुरैव इतराभिवादनात्पूर्वमेव विहितः कृतः ताभ्यामाश्लेषबन्धुभ्यां कृष्णप्रद्युम्नाभ्यां विकृष्य ततो वियोज्य अभिमुखं कृत्वा पश्चाद्रामेण परिरभ्यमाण आश्लिष्यमाणः पादाभिवादनपरः अभिमुखीकरणार्थं वादनं 'वद सन्देशवचन' इत्यतश्चौरादिकाल्ल्युट् । आभिमुख्येन वाद्यत आशीः क्रियते अनेनेति वा हेतुमण्ण्यन्ताद्वद व्यक्तायां वाचीति धातोः करणे ल्युट् । नामोच्चारणपूर्वकं संस्कृतप्रयोगेण नमस्कारनाम अभिवादनशब्द इति 'समे तु पादौ ग्रहणमभिवादनमित्यपि' इत्यमरव्याख्याने उक्तम् । पादयोरभिवादनं परमुत्तमं यस्य स तथा तस्मिन्नेव वस्तुनि पर एकाग्रचित्तस्तत्पर इति हरिदीक्षितव्याख्यानरीत्या पादाभिवादने पर इति सप्तमीतत्पुरुष इत्यप्याहुः । एषोऽनिरुद्धः पूर्णशशिना परिरभ्यमाणः कलङ्क इव बभौ 'भा दीप्तौ' लिट् दिदीपे । उपमालङ्कारः ।। १७ ।।

**तताधिरोह सह कन्यकया सुपर्णमित्यूचिवां-**
**समभितः स्फुरदग्रजं तम् ।**
**पित्रानुयातमधिरूढमिमं स**
**पश्यन्नन्वारुरोह दयिताभुजदत्तपाणिः ।। १८ ।।**

**तातेति** ।। हे तात अनुकम्प्य अनिरुद्ध । त्वं कन्यकया उषया सह सुपर्णं गरुडमधिरोह आरूढो भवेत्यूचिवांसमुक्तवन्तम् । वचेः क्वसुर्व्या-

ख्यातः । अभित आभिमुख्येन स्फुरन्नग्रजो बलो यस्य तं स्फुरदग्रजम् । पित्रा स्वपित्रा प्रद्युम्नेनानुयातमनुगतमिमम् । सुपर्णमधिरूढं रुहेः 'गत्यर्थे-'त्यादिना कर्तरि क्तः । आरूढवन्तं तं श्रीकृष्णं पश्यन् सोऽनिरुद्धः दयितायाः प्रियायाः भुजे दत्तः पाणिर्येन स दयिताभुजदत्तपाणिः सन्नन्वारुरोह पश्चादारूढवान् । 'रुह बीजजन्मनि' प्रादुर्भाव इति व्याख्यातो रुहिः अध्यादियोगादारोहार्थः ॥ १८ ॥

**आलम्बिताहृतमुदं मृदुबाहुमूले**
**कान्तेन साभिनवकुङ्कुमरञ्जितान्ते ।**
**आरोपणे करतलेन नखाग्रसङ्गात्**
**सस्मार सस्मितमुपह्वरनर्मवृत्तेः[1] ॥ १९ ॥**

**आलम्बितेति** ॥ कान्तेनानिरुद्धेन कर्त्रा । अभिनवं यत्कुङ्कुमं कुङ्कुमपङ्कं तेन रञ्जितोऽन्तः प्रान्तदेशो यस्य तस्मिन्नभिनवकुङ्कुमरञ्जितान्ते । मृदोर्बाहोर्मूले करतलेन करणेन । आरोपणसमये आहृतो मुदो हर्षो यस्मिन् कर्मणि तद्यथा भवति तथा । आलम्बिता गृहीता सा उषा । नखाग्राणां सङ्गात् सस्मितं यथा तथा उपह्वरनर्मवृत्तेः उपह्वरे रहसि नर्मणां लीलानां या वृत्तिः स्थितिस्तस्याः । 'उपह्वरोऽस्त्री रहसि समीप' इति केशवः । सस्मार स्मृतवती । 'अधीगर्थदयेशां कर्मणी'ति षष्ठी । नर्मवृत्तिमिति पाठे कर्मणि द्वितीया ॥ १९ ॥

**उद्वाहनोद्यतभुजां मृदुगात्रयष्टिमुच्छ्वा-**
**सितायतसितेतररोमराजिम् ।**

---

१. 'नर्मवृत्तिम्' इति पाठान्तरम् ।

**मुग्धामवेक्ष्य सुषमोन्नतबाहुमूलां**
**मन्दीबभूव पतिरुद्धरणक्रियायाम् ।। २० ।।**

**उद्वाहनेति** ।। उद्वाहने आरोपणे उद्यत उद्युक्तो बाहुर्यस्याः सा तथा ताम् । मृद्वी गात्रयष्टिर्गात्रहारलता यस्याः सा मृदुगात्रयष्टिस्ताम् । 'यष्टिर्हारलतायां स्यात्' इति केशवः । उच्छ्वासो विकासोऽस्याः सञ्जातः उच्छ्वासिता आयता दीर्घा सितेतरा नीला रोम्णां राजिः रेखा यस्याः सा उच्छ्वासितायतसितेतररोमराजिः ताम् । सुषमोन्नतबाहुमूलां सुषमया शोभया उन्नतं बाहुमूलं कक्षो यस्याः सा तथा ताम् । मुग्धां सुन्दरीम् । अवेक्ष्य पतिरनिरुद्ध उद्धरणक्रियायामारोपणकर्मणि विषये मन्दीबभूव अपटुर्बभूव । पूर्वं पटुरपि सुन्दरीनिरीक्षणजनितमोहमहिम्ना उन्नयनायासमर्थ आसीदिति भावः । 'मन्दः शनैश्चरे स्वल्पे तथाज्ञापटुरोगिषु' इति केशवः ।। २० ।।

**बालापि पीनजघनस्तनभारगुर्वी**
**बालेन बाढमसमर्प्य भुजान्तरे स्वे ।**
**आरोपिता हि सुखमिन्दुमुखी कथञ्चि-**
**दादायिनोऽपि विनयान्न चलन्ति सन्तः ।। २१ ।।**

**बालेति** ।। बालापि पीनं स्थूलं जघनं कटिदेशः स्तनौ च प्राण्यङ्ग-त्वादेकवद्भावः । पीनजघनस्तनं तदेव भारो वोढव्यार्थः तेन गुर्वी 'वोतो गुणवचनात्' इति गुरुशब्दात् ङीष् । बालेनानिरुद्धेन । स्वे स्वकीये भुजान्तराले गाढं बाढमसमर्प्य अभिमुखं यथा तथा इन्दुमुखी कथञ्चित् केनापि प्रकारेण आरोपिता । तथाहि– आदायिनोऽपि आदायवन्तः आददाना अपि वा । सन्तः साधवः विनयान्न चलन्तीत्यर्थान्तरन्यासोऽलङ्कारः ।। २१ ।।

**लौल्यादमुष्य सहसा पततः पतङ्गा-**
**दुद्वेजितां गुरुजनेष्वपि लज्जमानाम् ।**
**आलिङ्गतः क्षणमुषामुपकार आसी-**
**द्यात्राजवोऽपि सुकृतामखिलं मुदे स्यात् ।। २२ ।।**

**लौल्यादिति** ।। सहसा बलेन पततः उड्डयमानात् पतङ्गात् पक्षिणो गरुडात् । उद्वेजितामुद्वेगं भयं प्रापिताम् । गुरुजनेषु रामकृष्णप्रद्युम्नेषु विषयसप्तमी । लज्जमानां लज्जां प्राप्नुवन्तीमप्युषाम् । लौल्यात् सतृष्णत्वात् । आलिङ्गतोऽमुष्यानिरुद्धस्य यात्राजवोऽपि यात्रासमयोप-जनितगरुडवेगोऽपि । क्षणमुपकार उपकारक आसीत् । तथाहि– सुकृतां 'सुकर्मपुण्यपापमन्त्रेषु कृञ' इति क्विप् । पुण्यशालिनामखिलं कर्मेति शेषः । मुदे सन्तोषाय स्यादित्यर्थान्तरन्यासोऽलङ्कारः ।। २२ ।।

**स्रस्तोत्तरीयवसनश्वसनावरुद्धं**
**स्वेदाम्बुबिन्दुनिकराकुलिताङ्गरागम् ।**
**सालस्यनिश्वसितनृत्यदुरोजमङ्गं नैवेक्षणं**
**व्यरमदस्य तदावगाढम् ।। २३ ।।**

**स्रस्तेति** ।। स्रस्तं गलितमुत्तरीयं वसनं बहिर्वस्त्रं तस्य श्वसनो वायुस्तेनावरुद्धमन्वितं स्रस्तोत्तरीयवसनश्वसनावरुद्धम् । स्वेदस्याम्बूनि तेषां बिन्दूनां निकरः समूहः तेनाकुलितः शिथिलितोऽङ्गरागोऽनुलेपनं यस्य तत्तथा । सालस्यमालस्येन सहितं यन्निश्वसितं निश्वासस्तेन नृत्यन्तौ चलन्तावुरोजौ स्तनौ यस्य तत्तथा । अङ्गं कर्म । अवगाढमवाप्तमस्येक्षण-मवलोकनं नयनं वा कर्तृ । तदा आलिङ्गनावसरे नैव व्यरमत् । सर्वथा न विराममगच्छत् ।। २३ ।।

**पर्यस्यमानरुचिरोरुचिरंनिषण्णां**
**नीवीविलम्बनविकासिकलत्रभाराम् ।**
**अत्युच्चयानभयसंहृतदृष्टिपातामध्यूरु**
**तामपिदधे मणिमेखलार्चिः ।। २४ ।।**

**पर्यस्यमानेति** ।। पर्यस्यमानौ अनुक्रमेण विपर्यासं प्राप्नुवन्तौ रुचिरौ मनोहरौ ऊरू यस्मिन् कर्मणि तद्यथा भवति तथा । चिरं निषण्णाम् । नीवीविलम्बनेन विलासी प्रकाशमानः कलत्रस्य जघनस्य भारोऽतिशयो यस्याः सा ताम् । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । अत्युच्चं च तद्यानं वाहनं च तस्माद्भयं भीतिस्तेन संहृतो दृष्टेः पातः पतनं यया सा तामुषां मणिमेखलार्चिः मणीनां मेखलानां काञ्चीनामर्चिः शिखा 'अर्चिर्हेतिः शिखाऽस्त्रियाम्' इत्यमरः । अध्यूरु विभक्त्यर्थेऽव्ययीभावः । ऊर्वोरपिदधे पिहितवती । 'डुधाञ् धारणपोषणयोः' इत्यतो लिट् । अत्र नायिकाया नीवीशब्दितांशुकग्रन्थिविस्रंसनेन तस्येतरानवलोकनाय तं जघनं वसनेनाच्छादयन्त्या आल्या वृत्तान्तः स्त्रीलिङ्गार्चिश्शब्देन प्रतीयत इति समासोक्तिरलङ्कारः । 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् । अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ।।' इति सोदाहरणं तल्लक्षणाभिधानात् । ऊरुशब्दस्य कथितस्यापि सप्रयोजनत्वात् अत्र न कथितपदावृत्तिर्दोषाय ।। २४ ।।

**यादृच्छिकोदितकथान्तरहासबद्धव्रीळां-**
**स्वकीयजनतामतिशङ्क्य दृष्ट्वा ।**
**सद्भावनां जडमुखीमभिनन्द्य भर्ता-**
**सोत्कण्ठचित्तमगमत्सरसातिरेकम् ।। २५ ।।**

पारत्रिकफलतारतम्यसीमेत्यर्थः । यद्धि ब्रुवन्ति तत् तारतम्यपर्याप्तिभूमित्वमत्र एतस्यामुषायां सुकृतेन अस्मदीयपुण्यपरिपाकेन दृष्टं साक्षात्कृतम् । इयमेव फलतारतम्यपर्यवसानभूमिरितिं निर्धार्यत इति भावः । ततः परं पारलौकिकस्वर्गादिरूपफलसाधनादुत्तमं सौभाग्यदं यदपि स्यात् सुकृतम् । तदप्यनया सुदत्या सङ्ख्यासुपूर्वस्य दन्तशब्दस्य 'वयसि दन्तस्य दतृ' इति दत्रादेशः। उदित्त्वान्ङीप् । उषया आचरितमनुष्ठितमेव ।। २८ ।।

**शोभाप्रदे स्वयमसक्तमभिप्रसक्तजात्या**
**सुगन्धिनि वधूकबरीभरेऽस्मिन् ।**
**कल्पद्रुमप्रसवदामनिवेष्टनास्थामर्थेन**
**योजयति बन्धनमेव नूनम् ।। २९ ।।**

**शोभेति** ।। असक्तं यथा तथा स्वयमेव शोभाप्रदे । अभिप्रसक्तया व्यतिषिक्तया जात्या जातीकुसुमस्रजा । सुगन्धोऽस्यास्तीति सुगन्धी तस्मिन् सुगन्धिनि । अस्मिन् दृश्यमाने वधूकबरीभरे केशवेशभारे कल्पद्रुमस्य पारिजातस्य प्रसवानां पुष्पाणां दाम्नः स्रजः निवेष्टने संयोजने आस्थामभिनिवेशं कल्पद्रुमप्रसवदामनिवेष्टनास्थामर्थेन योजयति । नूनमित्युत्प्रेक्षते । निरतिशयसौरभशालिन्या भौम्यापि जातीकुसुमस्रजा समासादितसौरभे कबरीभरे दिव्यपारिजातकुसुममालायाः परिकलनं सौगन्ध्यमावहति । किन्तु स्वसन्निवेश एव नूनं प्रयोजनरूप इति भावः । यद्वा अभिप्रसक्तजात्या समुपस्थितमालतीमालया अप्रसक्तमपि यथा तथा शोभाप्रदे अत एव स्वयमात्मनैव सुगन्धिनि अस्मिन् वधूकबरीभरे कल्पद्रुमप्रसवदामनि वेष्टनास्थां बन्धनमेव अर्थेन योजयति । नूनं प्रयोजनतया आकलयतीवेत्यन्वयः । आजानसिद्धशोभासौरभे कबरीभरे पारिजातकुसुम-

मालापरिकलनस्य स्वात्मैव प्रयोजनं न शोभासौरभावहनमिति भावः ।। २९ ।।

**उन्मेषमैष्यदनिशं यदि वारविन्दं-**
**पूर्णेन्दुबिम्बमभविष्यदथाकलङ्कम् ।**
**आह्लादयन्नयनमन्वकरिष्यदच्छमच्छिन्न-**
**सौरभरसं मुखमेतदीयम् ।। ३० ।।**

**उन्मेषमिति** ।। यद्यरविन्दमनिशमजस्रम् उन्मेषं विकासमैष्यम् । 'इण् गतौ' इत्यतो लृङ् । 'लिङ्निमित्ते लृङ्क्रियातिपत्तौ' इति शास्त्रात् । उत्तरत्राप्येवम् । अथवा पूर्णेन्दुबिम्बं यद्यकलङ्कमभविष्यत् । नयनमाह्लादयदित्यरविन्दस्य पूर्णेन्दुबिम्बस्य च विशेषणं नयनसन्तोषकारीत्यर्थः । तदा आह्लादयती नयने यस्य तत्तथा । अच्छमकलुषमेतदीयं 'त्यदादीनि च' इति वृद्धिसञ्ज्ञायां 'वृद्धाच्छः' । अच्छिन्नौ सौरभरसौ यस्य तत्तथा । उषामुखमन्वकरिष्यत् अनुकुर्यात् । कविकल्पितोपमालङ्कारः । 'वा पादान्त' इति पादान्त्यवर्णस्य विकल्पेन गुरुत्वाभिधानान्न वसन्ततिलकावृत्तत्वभङ्गः ।। ३० ।।

**मृद्वायताङ्गुलिदलं विमलं सुजाता-**
**पादद्वयं प्रविलसन्नखराजिरक्तम् ।**
**लाक्षालवच्छुरितमृच्छति षट्पदाली**
**सत्केसरारुणविनिद्रपयोजबुद्ध्या ।। ३१ ।।**

**मृद्विति** ।। षट्पदाली षट्पदानां भ्रमराणामाली पङ्क्ति मृदवः कोमला आयता दीर्घा अङ्गुलयो दलानीव यस्य तत् मृद्वायताङ्गुलिदलम् । विमलम् ।

प्रविलसन्तो ये नखरा नखास्तेषां राज्या पङ्क्त्या रक्तं लाक्षाया अलक्तस्य लवेन छुरितं रूषितं सुजातापादद्वयं सुजातायाः शोभनजननशालिन्या उषायाः पादयोर्द्वयं सत्केसरं सन्तः केसराः यस्य तत्तथोक्तं तच्च तदरुणं रक्तं विगता निर्गता निद्रा मुकुलीभावो यस्य तत्पयोजं पद्मं च तस्य बुद्ध्या ऋच्छति 'ऋ गतौ' लट् गच्छति । 'पाघ्रा–'त्यादिना ऋच्छादेशः । भ्रान्तिमानलङ्कारः ।। ३१ ।।

**श्रोणीरथाङ्गमहितं सदपाङ्गबाणं**
**भ्रूकार्मुकं सुतिलकाख्यपताकमेनाम् ।**
**आरोहधूस्तलजुषः सविलासहेतिं मन्ये**
**रथं विजयिनः कुसुमायुधस्य ।। ३२ ।।**

**श्रोणीति** ।। एनामुषाम् । विजयिनः विजयशालिनः । आरोहधूस्तल-जुषः आरोहः श्रोणीदेश एव धूस्तलं यानमुखप्रदेशः तज्जुषते सेवत इति तथोक्तस्तस्य । 'धूः स्त्री क्लीबे यानमुखे' इत्यमरः । 'आरोहस्तु भवे-च्छ्रोण्याम्' इति दर्पणः । कुसुमायुधस्य मन्मथस्य श्रोण्यौ कटिप्रदेशावेव रथाङ्गे चक्रे ताभ्यां महितं श्रोणीरथाङ्गमहितम् । सदपाङ्गबाणं सन्नपाङ्गो नेत्रान्त एव बाणो यस्य स तथोक्तस्तं कटाक्षबाणमिति यावत् भ्रूकार्मुकं भ्रुवौ कार्मुके धनुषी यस्य स तथा तम् । सतिलकाख्यपताकं तिलकाख्य-ललाटललामरूपा पताका तया सहितः तम् । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । सविलासहेतिं विलासा हेला एव हेतय आयुधानि ताभिः सहितः सविलासहेतिस्तं रथं मन्ये 'मन ज्ञाने' लट् । अत्र सावयवरूपकानु-प्राणितोत्प्रेक्षालङ्कारः ।। ३२ ।।

**तत्राप्सरस्स्वभिनुतं तरुणैरुषाया रूपं**
**निरूप्य धृतमत्सरया कयाचित् ।**
**सौहार्दपात्रमपि हार्दरुजा मुखं**
**स्वमुद्यम्यमानमनिशं विपरीयते स्म ।। ३३ ।।**

**तत्रेति** ।। तरुणैर्युवभिस्तत्र तत्रत्यासु अप्सरस्सु अभिनुतमभिष्टुतं सौहार्दपात्रमपि उषाया रूपं सौन्दर्यम् । 'स्वभावाकृतिसौन्दर्यवपुष्षु श्लोकशब्दयोः । रूपम्' इत्यभिधानम् । निरूप्य विविच्य विज्ञाय । धृतो मत्सरोऽन्यशुभद्वेषो यया सा तथा तया कयाचिद्वनितया । हार्दरुजा हृदयरोगेण मनोदोषेण । अनिशमवेक्षणायोद्यमानमपि स्वं स्वीयं मुखं विपरीयते स्म विपरीतं कृतम् । सौन्दर्यालोकनाभिमुखमपि मुखं मात्सर्येण तिर्यक्कृतमित्यर्थः । विपरिपूर्वादिणः कर्मणि 'लट् स्म' इति लिटोऽपवादो लट् ।। ३३ ।।

**आबध्नतीमभिलसत्यबलामभीक्ष्णमंसा-**
**वलम्बिनि कचे निहितेक्षणायाः ।**
**केशः स्वकस्तुलितचामरचारुवालो**
**लज्जातिरेकमकरोत्सुकरं सुकेश्याः ।। ३४ ।।**

**आबध्नतीमिति** ।। अभीक्ष्णमसकृत् योग्यतया कचमाबध्नतीमबलां स्त्रियमुषामभि 'अभिरभागे' इत्यभेर्लक्षणे कर्मप्रवचनीयत्वे कर्मप्रवचनीययुक्ते द्वितीया । लसति राजति अंसावलम्बिनि अवलम्बितुं शीलमस्येत्यवलम्बी अंसेऽवलम्बी अंसावलम्बी तस्मिन् कचे केशे निहितमीक्षणं चक्षुर्यया सा निहितेक्षणा तस्याः सुकेश्याः 'स्वाङ्गाच्च' इति ङीष् । तन्नाम्न्याः

कस्याश्चिदप्सरसः तुलितश्चमरीसम्बन्धीचारुर्मनोहरो वालो येन स तुलितचामरचारुवालोऽपि स्वकः स्वीयः केशः सुकरं लज्जातिरेकं सुलभामतिशयितां लज्जामकरोत् । उषया अंसावलम्बिनं केशवेशे पश्यन्त्याश्चमरीमृगीवालसदृशकेशपाशं वहन्त्या अपि सुकेश्या अतिवेलं लज्जासीदिति भावः ॥ ३४ ॥

**सल्लापघोषतृषितश्रवसामुषया**
**निर्भर्त्सनाद्विचरतां दिवि मञ्जुघोषा ।**
**आकस्मिकप्रकटितात्स्वयमेव**
**जाड्यादुद्गीतकौशलकृताद्विरराम पूर्वम् ॥ ३५ ॥**

**सल्लापेति** ॥ मञ्जुघोषा मञ्जुघोषानाम्नी काचिदप्सरस्त्री । उषायाः सल्लापस्य घोषो ध्वनिस्तस्मिन् । तृषितानि सञ्जाततृषाणि पिपासितानि श्रवांसि श्रोत्राणि येषां ते सल्लापघोषतृषितश्रवसः तेषाम् । दिवि पुष्करे विचरतां देवादीनामाकस्मिकप्रकटितात् अकस्माद्व्यक्तीकृतात् । विनयादित्वादकस्माच्छब्दात् स्वार्थे ठक् । निर्भत्सनात्तर्जनान्निमित्तात् । उद्गीतस्य उन्नतस्यातिशयितस्य गानस्य कौशलं निपुणत्वं तत्कृतात् जाड्याज्जडभावात्पूर्वं स्वयमात्मनैव विरराम 'रमु क्रीडायां' लिट् । 'व्याङ्परिभ्यो रम' इति परस्मैपदम् । अत्रोद्गानजनितजाड्यासम्बन्धेऽपि तत्सम्बन्धवर्णनात्सम्बन्धातिशयोक्तिरलङ्कारः । तेन चोषासल्लापे माधुर्यातिशयो व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ३५ ॥

**तस्या घनस्तनमुर स्पृहणीयमक्ष्णोः**
**सौन्दर्यसीमसुमनोवनिता विलोक्य ।**

**दिव्यांशुकेन कृतसंवृतिनाध्युरोजं**
**पीनस्तनी किल कृतोपकृतिर्बभूव ।। ३६ ।।**

**तस्या इति** ।। तस्या उषाया घनौ निरन्तरौ स्तनौ यस्मिन् तद् घनस्तनम् । अक्ष्णोर्नयनयोः स्पृहणीयं लोभनीयमुरो वक्षः । सौन्दर्यस्य सीमा च सा सुमनोवनिता अत्यर्थसौन्दर्यशालिन्यमरसुन्दरी पीनस्तनी तन्नाम्नी काचिदप्सरस्त्री । अवलोक्य । अध्युरोजमुरोजयोरिति विभक्त्यर्थेऽ-व्ययीभावः । कृता संवृतिः संवरणमाच्छादनं येन तत्तथा तेन । दिव्यांशुकेन दिविभवेन वसनेन कृता उपकृतिरुपकारो यस्याः सा कृतोपकृतिर्बभूव भवतेर्लिट् । किलेति वार्तायाम् । अन्बरकृतोपकारासंस्पर्शेऽपि तत्सम्बन्ध-वर्णनात् सम्बन्धातिशयोक्तिरलङ्कारः ।। ३६ ।।

**आश्चर्यदां मृगदृशां नवरोमराजिं**
**मध्ये तनुं दिवि रुचाभ्यधिकामवेक्ष्य ।**
**तस्थावनाकुलितमप्सरसां वरान्या**
**धैर्येण मत्सरजयादतिभेदबुद्ध्या ।। ३७ ।।**

**आश्चर्यदामिति** ।। अप्सरसां मध्ये वरा उत्तमा अन्या काचित् । मृगदृशां सुन्दरीणामाश्चर्यदां विस्मयदायिनीम् । रुचा कान्त्याभ्यधिकां मध्ये सतीमिति शेषः । तनुं सूक्ष्मां रोमराजिमवेक्ष्य । अतिभेदबुद्ध्या । अत्यन्तवैलक्षण्यावगमेन । मत्सरजयात् ल्यब्लोपनिमित्ता पञ्चमी मत्सरजयं प्राप्य । धैर्येण अनाकुलितं सञ्जातानाकुलं यथा तथा तस्थौ । 'ष्ठा गतिनिवृत्तौ' लिट् स्थितवती ।। ३७ ।।

इत्याकुलाभिरनुयाति सहाप्सरोभि-
स्तद्दर्शनाय परितो द्युसदां निकाये ।
न्यस्येक्षणं विहितसत्कृतिरात्तसेव-
स्तालध्वजेन जगदे वचनं मुरद्विट् ।। ३८ ।।

**इतीति** ।। इत्युक्तप्रकारेणाकुलाभिः व्यासङ्गवतीभिरप्सरोभिः सह तद्दर्शनाय उपावलोकनाय परितोऽनुयात्यनुगच्छति । द्युसदां देवानां निकाये सङ्घे 'सङ्घे चानौत्तराधर्ये' इति सङ्घार्थे चिनोतेर्घञि धात्वादिवर्णस्य कादेशः । ईक्षणं नयनं न्यस्य निधाय । देवसमूहमवलोक्येत्यर्थः । तत आत्ता सेवा येन स आत्तसेवः । विहिता कृता सत्कृतिः सत्कारो येन स तथा मुरद्विट् । मुरारिः श्रीकृष्णः तालध्वजेन बलभद्रेण वचनं जगदे 'गद व्यक्तायां वाची' इत्यतः कर्मणि लिट् व्यक्तमुक्तः ।। ३८ ।।

निर्याय शोणितपुराद्रधुनैव वह्वीरत्येयुषो
दशशतीर्बहुयोजनानाम् ।
उन्नेतुमस्य पततः सहते न वेगं
चेतो मम स्वयमतीव[1] कृताभ्यसूयम् ।। ३९ ।।

**निर्यायेति** ।। अधुनैव इदानीमेव शोणितपुरात् निर्यात् निर्गत्य । बह्वीः 'बह्वादिभ्यश्च' इति ङीष् । बहुयोजनानां दशशतीः । अकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट' इति स्त्रीत्वे 'द्विगो'रिति ङीप् । सहस्राणि अत्येयुषः अत्याङ्पूर्वादिणो लिटः क्वसुः 'उपेयिवाननाश्वाननूचानश्च' इत्यत्रोपेत्य तन्त्रमिति वैय्याकरणैरुक्तत्वात् 'ईयिवांसमतिस्रुधः' 'समीयिवान्' इत्यादि-

---

१. 'स्वयमितीव' इति पाठान्तरम् ।

प्रयोगाच्च अतिक्रान्तवत् । अस्यास्मद्वाहनस्य पततः पक्षिणो गरुडस्य वेगं मम चेतः स्वयमतीवात्यन्तं कृता अभ्यसूया गुणेषु दोषाविष्करणलक्षणा येन तत् कृताभ्यसूयं सत् । उन्नेतुं परिज्ञातुं न सहते 'षह मर्षणे' लट् । अत्र साभ्यसुयमुन्नेतुं न सहत इत्यसूयाया उन्नयनहेतुत्वोत्प्रेक्षणाद्वाचका-प्रयोगाच्च गम्योत्प्रेक्षालङ्कारः । स्वयमितीव कृताभ्यसुयमिति पाठे कृताभ्य-सूयमिति वेति हेतोर्वेगं न सहत इत्यन्वयः । अत्र पक्षे हेतूत्प्रेक्षैवालङ्कारः ।। ३९ ।।

**देशः क एष विदुषां वर दृष्टिमार्गं**
**दूरेऽप्यनर्गलतया कथमप्युपैति ।**
**गोविन्द मन्दरमहेन्द्रमहाद्रिशृङ्गतुङ्गे**
**सुरेन्द्रजिति नः सुखमास्थितानाम् ।। ४० ।।**

**देश इति** ।। विदुषां ज्ञानिनां वर । गोविन्द गाः वेदादिरूपनिर्दोषवाचः प्रतिपाद्यत्वेन विन्दतीति तथोक्तस्तत्सम्बुद्धिः । गवादिषु 'विदेः सञ्ज्ञायाम्' इति शप्रत्ययः । मन्दरश्च महेन्द्रश्च मन्दरमहेन्द्रौ तौ च तौ महाद्री च तयोः शृङ्गे शिखर इव तुङ्गे । सुरेन्द्रजिति अमृताहरणे देवेन्द्रं जितवति गरुडे सुखं यथा तथा आस्थितानां 'गत्यर्थाकर्मके–'ति तिष्ठतेः कर्तरि क्तप्रत्ययः । आस्थितवतामस्माकमनर्गलतया अर्गलशब्दः प्रतिबन्धोप-लक्षकः । निष्प्रत्यूहत्वेन दूरेऽपि दृष्टिमार्गं कथमपि कृच्छ्रेण । क एष देश उपैति । पुरः स्फुरन्नेष देशः क इति प्रश्नार्थः । इति तालध्वजेन मुरारिर्जगद इति पूर्वेण सम्बन्धः ।। ४० ।।

**इत्थं सुरैरहरहर्निगृहीतचन्द्रश्रीसूर्य-**
**शौर्यविभवाभिभवाभिलाषात् ।**

श्रेण्योद्धतैरहनि शत्रुभयाल्पगूढैरब्दै-
रकालमलिनः किमयं द्युभागः[1] ॥ ४१ ॥

**इत्थमिति** ॥ देशः क एष इति प्रश्न इवान्योऽपि प्रश्नः क्रियत इति इत्थं शब्दः । अयं दृश्यमानः द्युभागः सुरैः कर्तरि तृतीया । अहरह-र्निरन्तरं प्रत्यहम् । निगृहीता अपहृता चन्द्रस्य श्रीः कान्तिर्येन स निगृहीत-चन्द्रश्रीः । स चासौ सूर्यश्च तस्य शौर्यविभवः चन्द्रकान्त्यपहारशक्तिस्तस्या अभिभवस्तिरस्कारः तस्याभिलाषात् तर्षात् तिरस्कारेच्छयेत्यर्थः । श्रेण्या कूटेन उद्धतैः । अहनि शत्रोः सूर्याद् भयेनेव अल्पं गूढैरब्दैर्मेघैः करणैः । अकालमलिनः अकाले मलिनः 'मलिनमलीमसा'विति शास्त्रात् समलङ्कृत इति शेषः । कृतः किम् । कृत इत्यध्याहारः । अकारि मलिनः किमयं द्युभाग इति पाठे नाध्याहारः ॥ ४१ ॥

**वेलावलेपविलसल्लहरीविहारासंहारसङ्गतनवोन्नतफेनचूडः ।**
**उच्छ्रीयते मुहुरपामधिपो दिदृक्षुः कौतूहलात्किमुत**
**लब्धजयश्रियोऽस्मान् ॥ ४२ ॥**

**वेलेति** ॥ वेलायां तीरेऽवलेपेन गर्वेण विलसन्त्यो या लहर्य ऊर्मय-स्तासां विहारसंहाराणां प्रवर्तननिवर्तनानां यत्सङ्गतं सङ्घट्टनं तेन नव उन्नतश्च यः फेनः स चूडाशिरो यस्य स तथोक्तः । 'वेलाब्धितीराब्ध्यवध्योः काल-मर्यादयोरपी'ति । 'अथावलेपो गर्वे स्यादपि गन्धावलेपने' इति । 'तरङ्ग-भङ्ग ऊर्मिर्वास्त्री वीची लहरी समे' इति । 'फेनो डिण्डीर उच्यते' इति । 'चूडा शिरसि शेखर' इति चाभिधानम् । अपामधिपः समुद्रः । लब्धा

---

१. 'अकारिमलिनः किमयं द्युभागः' इति पाठान्तरम् ।

जयश्रीर्यैस्ते लब्धजयश्रियस्तानस्मान् । मुहुः पुनः पुनः दिदृक्षुः । कौतूहलात्कौतुकात् उच्छ्रीयते किमुत कर्मकर्तरि लकारः 'कर्मवत् कर्मणा तुल्यक्रिय' इति कर्तुः कर्मवद्भावात् यगात्मनेपदे भारद्वाजीयमते 'णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसङ्ख्यानम्' इति यक्चिणोः प्रतिषेधादत्र श्रिञो यक् भवत्येव । स्वयमेवोच्छ्रितो भवतीत्यर्थः । किमुतेति निपातः किमर्थे ।। ४२ ।।

**पाषाणसन्धिगलनाधिकशीतलाम्भोगम्भीरनिर्झरविलोभितहंसहृद्यः ।**
**स्यात्पाण्डराण्डरुहमण्डलमण्डितान्तप्रान्तद्रुमः किमुत**
**रैवतकोऽयमद्रिः ।। ४३ ।।**

**पाषाणेति** ।। पाषाणानां सन्धेर्गलनेनावस्रंसनेनाधिकशीतलमम्भ उदकं यस्य स तथा । स चासौ गम्भीरश्चासौ निर्झरो वारिप्रवाहश्च तेन विलोभिता अभिकाङ्क्षिता ये हंसास्तैर्हृद्यः हृदयप्रियो मनोहरः । पाण्डराः श्वेता ये अण्डरुहाः पक्षिणो बकास्तेषां मण्डलेन मण्डिता भूषिता अन्ता रम्याः प्रान्ता अन्तभागाः शिरोदेशा येषां ते तथोक्तास्तथाविधा द्रुमा यस्य स तथोक्तः । अयं पुरोवर्ती पदार्थः । रैवतकोऽद्रिः पर्वतः स्यात् किमुत किम् । इति जगदे ।। ४३ ।।

**निर्णीयते गिरिवरः स तथाप्युदार-**
**सञ्चारनागनिलयस्सरितामिवेशः ।**
**उद्यत्प्रवालरुचिरक्तवनान्तदुर्गस्फी-**
**तस्तटान्तपतितैः पयसां प्रवाहैः ।। ४४ ।।**

**निर्णीयत इति** ।। यद्यप्युक्तरीत्या वितर्कप्रचारास्तथाप्युदारसञ्चारनाग-

निलयः उदारो महान् सञ्चारो येषां ते तथाविधाश्च ते नागा गजाः सर्पाश्च तेषां निलय आलयः । उद्यत्प्रवालरुचिरक्तवनान्तदुर्गस्फीतः उद्यन्तः प्रवालाः पल्लवा विद्रुमाश्च तेषां रुच्या कान्त्या रक्तं यद्वनं तेन अन्तानि रम्याणि यानि दुर्गाणि तैः । स्फीतोऽभिवृद्धः तटान्तेषु प्रपान्तप्रान्तेषु तीरेषु च पतितैः पयसां जलानां प्रवाहैः सरितामीशः समुद्र इव । एष गिरिवरो रैवतको निर्णीयते । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति नयतेर्नकारस्य णत्वम् । किं बहुनोक्तेन । नागसञ्चारादिरूपैरुक्तलक्षणैरेष समुद्रः अयं च रैवतक इति निर्णयाम इति जगद इत्यर्थः ।। ४४ ।।

**आलिङ्गितेन शिशिरः सरसोऽमृतेन**
**व्याजृम्भितेन सगुणोऽम्बुरुहा धृतेन ।**
**आलोलितेन च वनेन जवी गतेन**
**वातेन तेन पवनानुमते[१] हिते नः ।। ४५ ।।**

**आलिङ्गितेनेति** ।। आलिङ्गितेनाश्लिष्टेन सम्बन्धेन सरसः कासारस्य । अमृतेन जलेन शिशिरः शीतलः । व्याजृम्भितेन विकसितेन । धृतेन संस्पृष्टेनेति यावत् । अम्बुरुहा कमलेन सगणः सपरिवारः तेन अभिसमागच्छता वातेन वायुना कर्त्रा गतेन गमनेन करणेन आलोलितेन सञ्चालितेन वनेन च रैवतको गिरिरित्यनुवर्तनीयम् । पवनानुमते पवनानुगृहीते नोऽस्माकं हिते हिताचरणविषये जवी वेगवान् विद्यते । 'आलिङ्गितेन शिशिरः सरसोऽमृतेन व्याजृम्भितेन सगुणोऽम्बुरुहा धृतेन । आलोलितेन च वनेन जवी गतेन वातेन तेन पवनोऽनुमतो हिते नः' इति पाठे (अमृतेन शिशिर इति पूर्ववत्) धृतेनाम्बुरुहा सगुणः

१. **'पवनोऽनुमतो' इति पाठान्तरम् ।**

सौरभ्यलक्षणगुणेन सहितः । गते न गमनविषये न जवी न वेगी मन्द इति प्रतिषेधार्थको नशब्दः । 'अमानोनाः प्रतिषेध' इति वचनात् । वातेन । 'वा गतिगन्धनयोः' इत्यतो भावे निष्ठा । (गमनेन) । तेन रैवतकगिरिणा (आलोलितेन वनेन च) । सहेति शेषः । 'वृद्धो यूने'ति निदर्शनाद्विनापि सहयोगं तृतीया । पवनो वायुर्नः 'हितयोगे च' इति चतुर्थी अस्मभ्यम् । हितेऽभीष्टेऽनुमतोऽनुकूल इति व्याख्याने पवनस्य कविसमयसिद्धाः शैत्यसौरभ्यमान्द्यलक्षणा गुणाः विभाविता भवन्ति ।। ४५ ।।

इदानीं रैवतक इति निर्णीयत इत्याह–

**खं व्याप्नुवन्नयमनन्यभवेन धाम्ना**
**श्रीमानधीरमनसा मनसापि दुर्गः ।**
**शुच्योपपत्तिदृढया निरवद्यदृष्ट्या**
**सुव्यक्तिमौपनिषदोऽर्थ इवाभ्युपैति ।। ४६ ।।**

**खमिति** ।। खमाकाशमन्यत्र दहरं व्याप्नुवन् अश्नुवानः । एकत्रौन्नत्यादन्यत्र विभुत्वाच्चेति भावः । अन्यस्मिन् पर्वतान्तरे देवतान्तरे च भवतीत्यन्यभवम् । भवतेः पचाद्यच् । तन्न भवतीति तथोक्तम् । तेनानितरसाधारणेन । अन्यस्माद्भवतीत्यन्यभवं । तन्नेति तेन । अनन्यभवेन स्वाभाविकेनेति वा । धाम्ना सानुशिखरादिस्फटिकरत्नादिदीप्त्या श्रीमान् शोभावान् । अन्यत्र धाम्ना अपरिच्छिन्नतेजसा उपलक्षितः श्रीमान् लक्ष्मीवान् । अत एव अधीरमनसा अदृढचित्तेन अविदुषा च कर्त्रा । मनसापि करणेन । दुर्गः दुरापः कायेन प्रवेशस्तु दूरापास्त इत्यपि शब्दः । शुच्या शुभ्रया । अन्यत्र वेदान्तजन्यत्वात् पूतया उपपत्त्या गण्डशैलसानुमत्त्वादिरूपया । अन्यत्र मीमांसया दृढया अर्थाव्यभिचारिण्या निरवद्यदृष्ट्या

अदोषचक्षुषा । अन्यत्र दिव्यदृष्ट्या । औपनिषदः उपनिषत्प्रतिपन्नोऽर्थो वस्तु हरिरिवेति यावत् सुव्यक्तिं प्रकाशमभ्युपैति । अभ्युपपूर्वादिणो लिट् । प्राप्नोति । प्रकृतश्लेषोत्थापित उपमालङ्कारोऽत्र द्रष्टव्यः ।। ४६ ।।

**स द्वारकानगरगोपुरतुङ्गशृङ्गश्रेणी-**
**निषङ्गिणि गणे गणिकाङ्गनानाम् ।**
**सान्त्वानिकान्तरचितानि निरीक्षते**
**यो जालान्तरे शिखरसन्मणिरत्नभासा ।। ४७ ।।**

**स इति** ।। सोऽयं गिरिः रैवतकः । द्वारकानगरगोपुरतुङ्गशृङ्गश्रेणी-निषङ्गिणि द्वारकाख्यनगरस्य यानि गोपुराणि द्वाराणि तेषां तुङ्गान्युन्नतानि शृङ्गाणि शिखराणि तेषां श्रेण्यां पङ्क्तौ निषङ्गिणि सम्बन्धिनि । गणिकानां सूळानां 'वारस्त्री गणिका वेश्या सूळा पण्याङ्गनापि च' इति रत्नाकरः । गणे समूहे कान्तरचितानि कामुकजनकृतानि सान्त्वान्यनुनयवचनानि । जालान्तरे गवाक्षविवरे । शिखरसन्मणिरत्नभासा । शिखरे शृङ्गे सद्विद्यमानं यन्मणिरत्नं 'रत्नं स्वजातिश्रेष्ठेव' इत्यभिधानात् श्रेष्ठो मणिस्तस्य भासा प्रभया निरीक्षते पश्यति । अत्र रत्नभासेत्यस्य नयनकान्त्येत्यर्थात् रूपकातिशयोक्तिरलङ्कारः ।। ४७ ।।

**पौरस्त्रियां भृतशिरोरुहमेव नाहो**
**विस्रस्य चोलवसने अपि निर्विशन्तः ।**
**जारापराधजविनोऽधिवसन्ति कामा-**
**माश्वासिता इव सदागतयः सदामुम् ।। ४८ ।।**

**पौरेति** ।। पौरस्त्रियां रूपातिशयोक्तिभङ्ग्या पुरस्य स्त्रीणामित्यर्थः ।

भृतशिरोरुहं भृतं सम्भृतं सन्नद्धं शिरोरुहं केशवेशमित्यर्थः । तमेव तन्मात्रं विस्रस्य न निर्विशन्तः किन्तु चोलवसने कूर्पासपरिधाने अपि 'चोळः कूर्पासकोऽस्त्रियाम्' इत्यमरः । विस्रस्य अपनीय । अहो इति दुष्करं साहसमित्याश्चर्याविष्कारः । निर्विशन्तः सुखमनुभवन्तः । अत एव जारापराधजविनः जारस्योपपत्तेरपराधेन जवितो वेगवन्तः पलायमाना इत्यर्थः । सदागतयो मरुतः 'मातरिश्वा सदागतिः' इत्यमरः । काममत्यर्थमाश्वासिताः सञ्जाताश्वासा इव सदा अमुं रैवतके निवसन्तीत्यर्थः । शरणागतानां शरण्योऽयमद्रिरिति भावः । अत्र निर्विशन्त इति मरुद्व्यापनक्रियायां निवेशनक्रियास्वरूपोत्प्रेक्षानुक्तविषया व्यञ्जकाप्रयोगाद्गम्या जारापराधनविन इत्यसिद्धहेतूत्प्रेक्षया सङ्कीर्यते । अप्रस्तुतस्य जारस्य वाच्यतया विशेषणसाम्येन गम्यत्वाभावान्न समासोक्त्यलङ्कारः शङ्कार्हः ।। ४८ ।।

**पौष्पं रजः सुरभिगन्धवहाय दत्वा**
**गन्धं ततः पुरवधूपरिपीतशेषात् ।**
**आनीतशेषमधुनः सुमहानपेयात्**
**क्रीणाति किं न कुरुते विषयाभिलाषः ।। ४९ ।।**

**पौष्पमिति** ।। महानप्येष गिरिः सुरभि परिमलमिलितं पौष्पं पुष्पाणां सम्बन्धि रजः परागम् । गन्धवहाय वायवे दत्वा । ततो वायोः पुरवधूपरिपीतशेषात् पुरवधूभिर्नगरसुन्दरीभिः परिपीतस्य शेषात् अत एवापेयात् पातुमयोग्यात् । मधुनः 'मधु मद्ये पुष्परस' इत्यभिधानात् मद्यात् । आनीतं गन्दं परिमलं क्रीणाति विनिमयेन प्रतिगृह्णाति । पर्वतः पुष्परजो दत्वा मद्यगन्धमादत्त इत्यर्थः । ननु महतो गिरेरुच्छिष्टात् मद्यात् गन्धादानमनुचितमित्यत उक्तम् । विषयाभिलाषः शब्दादिविषयोपभोगतर्षः पुरुषस्य

किं न कुरुते किमकार्यं न करोति । प्रेक्षावानपि वाञ्छापूर्तये कामवशात् किमप्यकर्तव्यमाचरेदेवेत्यर्थान्तरन्यासोऽलङ्कारः । अत्रापि रैवतकस्य गन्धवहानीतमद्यगन्धादानं विशेषः महतामपि विषयाभिलाष इति सामान्योक्तिश्चास्तीति 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' इति लक्षित उक्तालङ्कार उपपन्नः ।। ४९ ।।

**दत्तेक्षणेन विकलैः कुसुमैः**
**प्रवालैराजुह्वता तुलितपाणितलैश्चलद्भिः ।**
**मत्तालिनादकुशलोक्तिमता विधत्ते**
**सत्कारमेष विनमद्द्रुमकिङ्करेण ।। ५० ।।**

**दत्तेति** ।। एष रैवतकः विकलैर्विगलितैः कुसुमैः । दत्तेक्षणेन दत्ते ईक्षणे येन स तथा तेन । तुलितं पाणितलं येषां ते तथा तैस्तुलितपाणितलैः चलद्भिः वलमानैः पल्लवैः । आजुह्वता । धातूनामनेकार्थत्वात् जुहोतेः शत्रन्तस्याह्वानार्थत्वम् । आह्वयतेवेति गम्योत्प्रेक्षा । मत्तानामलीनां भ्रमराणां नाद एव कुशलोक्तिः कुशलप्रश्नः तद्वान् मत्तालिनादकुशलोक्तिमान् तेन । तथा विनमद्द्रुमकिङ्करेण विनमन् नम्रीभवन् द्रुम एव तरुरेव किङ्करस्तेन । करणे तृतीया । सत्कारं पूजां विधत्ते । करोतीव । अत्र रूपकोत्प्रेक्षयोः संसृष्टिः ।। ५० ।।

**उत्तुङ्गशृङ्गनिपतद्भदिनीतरङ्गैः स्थूलोपलस्खलनवेगविवृत्तपातैः ।**
**स स्वागताभिवदनश्च गभीरघोषैरस्मन्मुदे ध्रुवमयं मधुकैटभारे**
**।। ५१ ।।**

**उत्तुङ्गेति** ।। हे मधुकैटभारे मधुकैटभयोः शत्रो श्रीकृष्ण । गभीरघोषैः

सन्निधानाद्ध्रदिन्या गम्भीरैर्ध्वनिभिः स्थूलोपलस्खलनवेगविवृत्तपातैः स्थूला ये उपलाः पाषाणास्तेषां स्खलनस्य वेगः तेन विवृत्तः परिवृत्तः पातः पतनं येषां ते तथोक्तास्तैः उत्तुङ्गशृङ्गनिपतद्ध्रदिनीतरङ्गैः उत्तुङ्गमुन्नतं शृङ्गं शिखरं तस्मान्निपतन्त्यः ह्वदिन्यो नद्यः तासां तरङ्गैः । 'नदी धुनी निर्झरिणी च निम्नगा समुद्रकान्ता ह्वदिनी च वाहिनी'ति रत्नाकरः । तैश्च । सस्वागताभिवदनः स्वागतं चाभिवदनं च अभिवादनं च ताभ्यां सहितः सस्वागताभिवदनोऽयं गिरिः रैवतकः । अस्मन्मुदे अस्माकं हर्षाय । ध्रुवमित्युत्प्रेक्षा । भवतीति शेषः । अत्र गम्भीरघोषः स्वागतवचनं निपतद्ध्रदिनीतरङ्गशब्दाश्च अभिवादनायिताः ईप्सितो हि बन्धुः स्वागतेनाभिवादनेन प्रेमास्पदेषु हितमाचरतीति भावः ।। ५१ ।।

**उद्भासिगारुडगरुत्पृथुलातपत्रमुद्य-**
**च्छिरोमणिरुचाद्य विचित्रयन्तम् ।**
**एनं सखायमिव सन्तमनन्तमूर्ते**
**नापेक्षते विरतिमक्षि पुनर्दिदृक्षुः ।। ५२ ।।**

**उद्भासीति** ।। अनन्तमूर्तेऽपरिच्छिन्नकाय श्रीकृष्ण । उद्भासिता ये गारुडा गरुडसम्बन्धिनः गरुतः पक्षाः त एव पृतुलं विशालमातपत्रं छत्रं कर्म । उद्यन्तो ये शिरोमणयः शिकररत्नानि तेषां रुचा कान्त्या । अद्य सम्प्रति विचित्रयन्तं विचित्रं कुर्वन्तं सन्तम् सखायमिव एनं गिरिं पुनरप्रथमे मुहुर्दिदृक्षुः द्रष्टुमिच्छुः । अक्षि चक्षुः विरतिं विरामं पर्याप्तिं नापेक्षते नेच्छति । छत्रं स्वशिरोरत्नैः भूषयन्तं रैवतकं अनवरतमवलोकितुमीहते मम चित्तमिति भावः । इत्थं सुरैरहरहमित्याद्यया द्वादशश्लोक्या महाकाव्याङ्गभूतं शैलवर्णनं कविना निबद्धं बोध्यम् ।। ५२ ।।

इत्यादिवर्णनिपुणं भणितानि शृण्वन्
वाक्यानि लाङ्गलभृता मुदितो मुकुन्दः ।
मेने तथानुगुणमेनमुपान्तभाजा
दत्तार्घ्यमुच्चतरनिर्झरशीकरेण ।। ५३ ।।

**इतीति** ।। लाङ्गलभृता सीरिणा । इत्यादिवर्णे स्तुतौ निपुणं कुशलं यथा तथा इत्यादिवर्णनिपुणं 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे' इत्यमरः । भणितानि भण शब्दे क्तः । उक्तानि वाक्यानि शृण्वन्मुदितः सन्तुष्टो मुकुन्दः श्रीकृष्णः । उपान्तभाजा उपान्तं समीपं भजतीति तथा तेन । उच्चतरः निर्झरशीकरेण उच्चतरः । अल्पाच्तरमिति वत् । स्वार्थे कप्रत्ययः । उन्नतः निर्झरस्य प्रस्रवणस्य शीकरेण अम्बुकणेन दत्तार्घ्यम् अस्मान् प्रतीति शेषः । एनं गिरिं तथा बलभद्रोक्तरीत्या अनुगुणमनुरूपं मेने 'मन ज्ञाने' लिट् ।। ५३ ।।

विष्णोः पदादवतरन् धृतयादवेन्द्रः
स द्वारकोपरिविकासिबृहत्पतत्रः ।
तार्क्ष्यो जहौ जनितमच्युतविप्रयोगात्
सन्तापमर्ककिरणप्रभवं च तत्र ।। ५४ ।।

**विष्णोरिति** ।। विष्णोः पदादाकाशात् । व्यस्तपदस्यापि आकाशार्थत्वं व्याख्यातमाद्ये । अवतरन् अवरुहन् धृता यादवेन्द्रा रामाद्या येन स तथा । द्वारकाया उपरि विकासि विकसनशीलं बृहत्पत्रं पक्षो यस्य स तथोक्तः । स तार्क्ष्यः पूर्वमच्युतविप्रयोगात् श्रीकृष्णवियोगात् जनितमर्ककिरणप्रभवम् अर्ककिरणः प्रभवो हेतुर्यस्य तं च सन्तापं तत्र द्वारकायां जहौ 'ओहाक् त्यागे' तत्याज ।। ५४ ।।

**प्रत्युज्जगाम गगनादवतीर्य वीर्य-**
**निर्धूतवैरिनिकरानभिगच्छतस्तान् ।**
**सोत्साहमुत्सुकयुतोऽपि सुहृत्समूहो**
**रुद्धेक्षणार्पणसुखप्रमदाश्रूपूरैः ।। ५५ ।।**

**प्रत्युज्जगामेति** ।। प्रमदाश्रुपूरैः आनन्दबाष्पप्रवाहैः । रुद्धं प्रतिहत-मीक्षणस्यार्पणं समर्पणं तस्य सुखं यस्य स तथाविधोऽपि । उत्सुकेन औत्सुक्येन युतः सुहृत्समूहः । वीर्येण निर्धूता निरस्ता वैरिणां निकरा यैस्ते तथा तान् । गगनादवतीर्याभिगच्छतः आभिमुख्येन यातस्तान् यादवेन्द्रान् । सोत्साहं यथा तथा प्रत्युज्जगाम अभिमुखमागतवान् ।। ५५ ।।

**आचार्यकातिचतुरोऽत्र सतां चरित्रे**
**चर्चोपचारमयमक्रममाचचार ।**
**आसीदतिप्रमदसम्भ्रमसूचकं तद्दोषो**
**गुणोऽपि न महत्समवायलाभे ।। ५६ ।।**

**आचार्यकेति** ।। सतां चरित्रे विषये आचार्यके आचार्यत्वेऽतिचतुरः । 'योपधाद्गुरूपोत्तमाद्वुञि'ति आचार्यशब्दाद्भावे वुञ्प्रत्ययः । अयं प्रत्युद्गतः सुहृत्समूहः । चर्चोपचारं चर्चायाः पुनराख्यानस्य योऽयमुपचारस्तम् । अक्रमं क्रमहीनमाचचार कृतवान् । तदक्रमाचरणम् अतिप्रमदस्यात्यन्त-सन्तोषस्य सम्भ्रमोऽनवस्थानं तस्य सूचकमासीत् अस्तेर्लङ् । तथाहि– महतां समवायस्य गणस्य लाभे दोषोऽपि गुण एवेत्यर्थान्तरन्यासः ।। ५६ ।।

**देवो वसन्नसुमतां हृदि वासुदेवः**
**सङ्कर्षणश्च य इदं निखिलं चकर्ष ।**
**प्रद्युम्न उत्कटबलोऽर्यजितोऽनिरुद्धो**
**नारायणास्पदममी विविशुः शिवं तत् ।। ५७ ।।**

**देव इति** ।। असुमतां प्राणिनां हृदि वसन् देवोऽत एव निर्वचनाद्वासुदेवः । य इदं निखिलं जगच्चकर्ष 'कृष विलेखने' लिट् । तेन सङ्कर्षणः । उत्कटबलः उत्कटं बलं यस्य स तथा प्रद्युम्नः । द्युम्नशब्देन बलं प्रशब्देन तदुत्कर्षश्चाभिप्रेत इति भावः । अरिभिः शत्रुभिः अजितो यतोऽतोऽनिरुद्ध उक्तः । एवममीचत्वारोऽपि तत्प्रसिद्धं शिवं मङ्गलं नारायणास्पदं श्रीकृष्णस्थानं कृष्णमन्दिरं विविशुः 'विश प्रवेशने' लिट् । अत्र 'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्' इत्युक्तलक्षणो निरुक्तिर्नामालङ्कारः ।। ५७ ।।

**सापाङ्गपातमवलम्ब्य करावलम्बं दीर्घं**
**कथश्चिदिव भूरिभरा वधूनाम् ।**
**पत्या पतत्ररथतोऽवततार बाला**
**पृथ्वीपरिक्रमभयादपकुञ्चिताङ्गी ।। ५८ ।।**

**सापाङ्गेति** ।। वधूनां स्त्रीणां करावलम्बं दीर्घं चिरकालं सापाङ्गपातमपाङ्गपातेन सहितं यथा तथा अवलम्ब्य । सखीकरमवष्टभ्येत्यर्थः । पृथ्वीपरिक्रमभयाद्भूमौ परिपतनाद्यद्भयं तस्मात् । अपकुञ्चिताङ्गी सती भूरिभरा स्वर्णरूपवोढव्यवती बहुभूषणेत्यर्थः । गुर्वी वा बाला उषा । पतत्ररथतः पक्षिणो गरुडात् । पत्या अनिरुद्धेन सह कथश्चिदिव

केनाप्यतिकृच्छ्रप्रकारेण । अवततार 'तॄ प्लवनतरणयोः' लट् अवरूढवती ॥ ५८ ॥

तत्राजिरे मलयजद्रवपुष्पकीर्णे
संक्रान्तिकम्पितकुचा पदपल्लवस्य ।
सन्दर्शिता प्रतिवधूं प्रतियोषयोषा
स्पृष्ट्वाङ्गुलीभिरतिविस्मयविस्तृतेर्ष्यम् ॥ ५९ ॥

**तत्रेति** ॥ मलयजद्रवपुष्पकीर्णे मलयजस्य चन्दनस्य द्रवेण पुष्पैश्च कीर्णे तत्र तस्मिन्नजिरे अङ्कणे । पदपल्लवस्य सङ्क्रान्त्या संस्पर्शेन कम्पितौ कुचौ यस्याः सा तथोक्ता उषा । प्रतियोषया प्रतिकामिन्या अङ्गुलीभिः । प्रतिवधूं स्पृष्ट्वा अतिविस्मयेन विस्तृता ईर्ष्या अक्षान्तिर्यस्मिन् कर्मणि तद्यथा तथा दर्शिता ॥ ५९ ॥

तं पारिजातसुमनस्सुहितावतं-
ससौरभ्यलुब्धमधुपानुगतां वरं च ।
पत्युर्निदेशमनुरुध्य निशान्तमन्तर्दारा
हरेः कृतमहं गमयाम्बभूवुः ॥ ६० ॥

**तमिति** ॥ पारिजातस्य याः सुमनसः पुष्पाणि ताभिः सुहिताः तृप्ताः परिपूर्णा अवतंसा येषां सौरभ्ये लुब्धा मधुपा भ्रमरास्तैरनुगता हरेर्दारा रुग्मिण्याद्याः । पत्युः श्रीकृष्णस्य निर्देशं शासनमनुरुध्य स्वीकृत्य । तां वधूमूषां वरमनिरुद्धं च । कृतमहं कृतो मह उत्सवो यस्मिन् तत् । अन्तर्निशान्तमन्तर्मन्दिरं गमयाम्बभूवुः गमितवन्तः ॥ ६० ॥

उद्भासयन्त्यवनता वनिता[1] विदग्धस्त्रीणां
मुखानि हरितामिव सा बभासे ।
श्यामेव सन्तततमोऽन्तरितैरिवर्क्षैरुद्भूषिता
चिहुरभारविकीर्णलाजैः ।। ६१ ।।

**उद्भासयन्तीति** ।। चिहुरभारविकीर्णलाजैः चिहुरः चिकुरः तस्य भारोऽतिशयस्तस्मिन्विकीर्णैर्विक्षिप्तैर्लाजैर्भ्रष्टयवसमुद्भवमङ्गलाक्षतैः । 'चिकुराश्चिहुराः कचा' इति दुर्ग इत्यमरव्याख्या । उद्भूषिता । सन्तत-तमोऽन्तरितैः सन्ततैस्तमोभिरन्धकारैः अन्तरितैरन्तर्हितैः ऋक्षैर्नक्षत्रैरिव श्यामेव रात्रिरिवेति अनेकेवोपमा । 'श्यामा स्याच्छारिबा निशा' इत्यमरः । अवनता अवनम्रा वनिता सा उषा 'वनिता जनितात्यर्थानुरागायां च योषिती'त्यमरः । हरितां दिशां मुखानीव विदग्धस्त्रीणां मुखानि उद्भासयन्ती बभासे 'भासृ दीप्तौ' लिट् दिदीपे । 'भावेन पङ्किलतया कलिका विदग्धस्त्रीणां मुखानि हरितामिव सा बभासे' इति पाठे भावेनाभिप्रायेण पङ्किलतया पङ्कवत्त्वेन आविलतयेति यावत् । अभिप्रायस्य गम्भीरत्वादिति भावः । कलिका चाटुप्रबन्धविशेषः । सा च 'नायकेन प्रकटितस्ववृत्ता सुहृदां पुरः । कविना वापि केचन । कन्याहरणसङ्ग्राम-विप्रलम्भोदयान्विते'ति चिन्तामणौ चूर्णिकाकलिकोत्कलिकाद्यनेकप्रकारेति आख्यायिकाप्रभेदत्वेन निरूपिता कलिकेव कलिका उषा । अनेन चाहरणाविष्कृतधीरोदात्तनायकत्वं व्यज्यते । हरितां मुखानीव विदग्धस्त्रीणां मुखानि अवभासत् भासेर्ण्यन्ताल्लुङि 'भ्राजभासभाषदीपजीवमीलपीडा-मन्यतरस्याम्' इति उपधाह्रस्यस्य विकल्पिततया तदभावे रूपमिदम् । भासयति स्मेत्यर्थः । शिष्टं पूर्ववत् ।। ६१ ।।

---

१. 'भावेन पङ्किलतया कलिका' इति पाठान्तरम् ।

**संक्रामयेयमतुलामखिलाङ्गलक्ष्मीमस्याः**
**प्रियः प्रणयते स्वयमेव येन ।**
**ध्यात्वेति गाढमनिरुद्धविलोभनैषिण्या-**
**लिङ्गदङ्गमबला तरुणी तदीयम् ।। ६२ ।।**

**संक्रामयेयमिति** ।। अतुलामनुपमाम् । अखिलाङ्गलक्ष्मीं सकलावयवशोभां संक्रामयेयं सम्बन्धयेयम् । अस्या अङ्गलक्ष्म्याः । येन संक्रमणेनैष प्रियोऽनिरुद्धः स्वयमेव प्रणयते उत्कृष्टं प्रेमाणं करोति प्रपूर्वान्नयतेर्लट् । 'स्वरितञित' इत्यात्मनेपदम् । इति ध्यात्वा अनिरुद्धविलोभनैषिणी अनिरुद्धस्य विलोभनं प्रतिलोभनम् एष्टुं शीलमस्या इति विलोभनैषिणी तरुणी युवतिः अबला । तदीयमङ्गमनिरुद्धीयमङ्गं गात्रं गाढं दृढमालिङ्गत् लिगि गताविति दण्डकधातुषु पठितम् । आलिङ्गितवती ।। ६२ ।।

**इत्थं महोत्सवपदे विनिवेश्य पौत्रं**
**सक्षेत्रमत्र भगवान्महितः सुहृद्भिः ।**
**सत्सौधरत्ननिकरप्रतिबन्धकश्रीण्या-**
**रादुदैक्षत विमानवतां पदानि ।। ६३ ।।**

**इत्थमिति** ।। इत्थमुक्तप्रकारेण महोत्सवपदे महत उत्सवस्य स्थाने । अत्रान्तःपुरे सक्षेत्रं सभार्यं 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः । पौत्रमनिरुद्धं विनिवेश्य सुहृद्भिर्महितः पूजितः । भगवान् श्रीकृष्णः सत्सौधरत्नप्रतिबन्धकश्रीणि सन्ति यानि सौधस्य रत्नानि तेषां निकरः समूह एव प्रतिबन्धको यस्याः सा तथाविधा श्रीर्येषां तानि तथोक्तानि 'न कोपधायाः' इति पुंवद्भावप्रतिषेधात् प्रतिबन्धिकाश्रीणीत्येव युक्तम् । विमानवतां देवानां

पदानि स्थानानि विमानानीति यावत् । आरात् समीपे उदैक्षत । 'ईक्ष दर्शने' लङ् अपश्यत् ।। ६३ ।।

**अथाभिपत्यानुगता दिवस्पतिं**
**दिवाकराभा नभसो दिवौकसः ।**
**जितद्विषं जिष्णुसखं सुखासना**
**उपासिरे सारविदस्स्तवैर्मुदा ।। ६४ ।।**

**अथेति** ।। अथ ईक्षणानन्तरं नभसो गगनादभिपत्य अवतीर्य दिवस्पतिमिन्द्रमनुगताः । दिवाकराभा दिवाकरस्य सूर्यस्याभेवाभा येषां ते तथोक्ताः सारविदः सारार्थवेदिनः दिवौकसो देवाः । 'दिव शब्दोऽय-मकारान्तोऽप्यस्तीति प्रागेवोक्तमित्यौकारोपपत्तिः । सुखासनाः सुखकरा-सनाः सन्तः । जितद्विषं जिता द्विषो वैरिणो येन तम् । तथा जिष्णु-सखम् अर्जुनमित्रं 'जिष्णुशक्रे धनञ्जये' इति विश्वः । मुदा सन्तुष्ट्या स्तवैः स्तोत्रैः उपासिरे 'उपपूर्वादस गतिदीप्त्यादानेषु' इति धातोर्लिट् उपासितवन्त इत्यर्थः । आसेरेवेदं रूपमित्यङ्गीकारे 'दयायासश्च' इत्याम्प्रत्यये उपासाञ्चक्रिरे इति रूपं दुर्निवारम् । एतदादिनवश्लोकी वंशस्थानामकवृत्तबद्धा । 'जतौ तु वंशस्थमुदीरितं जरौ' इति हि वृत्तरत्नाकरः ।। ६४ ।।

**त्वदन्तिके किञ्चन जल्पितुं मनः**
**समुत्सुकं लज्जयतीह नः प्रभो ।**
**अथास्तु भक्तिस्फुरितं वचो**
**भवत्प्रसादनेनानपवादमर्थवत् ।। ६५ ।।**

**त्वदन्तिकथ इति** ।। हे प्रभो त्वदन्तिके तव समीपे किञ्चन जल्पितुं व्यक्तं वक्तुमुत्सुकम् इष्टार्थोद्युक्तं मनः । इह त्वद्विषये नोऽस्मान् लज्जयति 'ओलस्जि व्रीडायाम्' इत्यतो ण्यन्ताल्लट् लज्जमानान् प्रेरयति लज्जायुक्तान् करोतीत्यर्थः । अथ अथापि भक्त्या स्फुरितं प्रकाशितं भक्तिस्फुरितं वचः । भवत्प्रसादनेन चौरादिकात्सदेर्भावे ल्युट् प्रसादेन । अनपवादमपवादेन निन्दया रहितमर्थवत् प्रयोजनवच्चास्तु ।। ६५ ।।

**त्वमस्यतिक्रान्तगुणत्रयो गुणैः**
**प्रवर्तयन् संसृतियन्त्रमात्मनाम् ।**
**स्वतन्त्रसृष्टिस्थितिभङ्गमिच्छया**
**तवैव गोविन्द जयन्ति यान्ति हि ।। ६६ ।।**

**त्वमिति** ।। हे स्वतन्त्र स्वसत्ताप्रवृत्तिप्रतीतिषु परानपेक्ष गोविन्द श्रीकृष्ण । गुणैः सत्वादिभिः आत्मनां जीवानां संसृतियन्त्रं संसाररूपं बन्धनम् । 'यन्त्रं बन्धनलेख्ययोः' इति दर्पणः । प्रवर्तयन्नपीति योज्यम् । अतिक्रान्तं गुणत्रयं येन सोऽतिक्रान्तगुणत्रयः । असि । किं च जगन्ति तवेच्छयैव । सृष्टिस्थितिभङ्गं द्वन्द्वैकवद्भावः । सृष्टिस्थितिलयान् यान्ति । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्ति' इति श्रुतिप्रसिद्धं हिशब्देन द्योतयति ।। ६६ ।।

**समः प्रतिप्राणि ददासि तत्फलं यदुक्तमम्भोद इवापि सन्वशी ।**
**न हि प्रभोरप्रभुतानुजीविनां कृतानुरोधेन फलं प्रदास्यतः**
**।। ६७ ।।**

**सम इति** ।। हे स्वतन्त्र गोविन्द इत्यनुवर्तनीयम् । यत् स्वर्गापवर्गादि-

रूपं फलमुक्तं शास्त्रेषु तत्फलम् । प्रतिप्राणि सर्वेष्वपि प्राणिषु वशी प्रभुः सन्नपि समः वैषम्यनैर्घृण्यदोषविरहितः अम्भोदो मेघ इव ददासि । ननु परापेक्षया फलं दददीश्वरः कथं स्वतन्त्रः स्यादिति शङ्कामर्थान्तरन्यासेन निरस्यति – **न हीति** ।। अनुजीविनामुपजीवकानां सेवकानां कृतानुरोधेन कर्मानुसारेण फलं प्रदास्यतः प्रभोः अप्रभुता अस्वातन्त्र्यं न हि । तावता न तस्य स्वातन्त्र्यच्युतिः । यदाह भगवान् सूत्रकारः– 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति' इति भावः ।। ६७ ।।

**अबुद्धतत्त्वात्तशुचां विचिन्वतां**
**विजानतां निर्वृतिमातनोषि च ।**
**अमन्दमानन्दकरं करार्पितं यथा च**
**कार्तस्वरचारुभूषणम् ।। ६८ ।।**

**अबुद्धेति** ।। अबुद्धं यत्तत्त्वं जीवेश्वरजडरूपं तेनात्ता उपात्ता शुक् शोको येषां ते तथा तेषाम् । विचिन्वतां विजानतां च त्वमन्दमनर्घ्य-मानन्तकरं सन्तोषकारि करार्पितं करे विधृतं कार्तस्वरचारुभूषणं स्वर्णमय-मनोहराभरणं यथा सुवर्णनिर्मितहृद्यकङ्कणादिभूषणमिव निवृतिं सन्तोष-मातनोषि च । आदौ तत्त्वापरिज्ञानेन उपात्त(दित?) संसारादिशोकानामत एव शोकापनोदनाय शास्त्रविचारशालिनां ततः सम्पादिततत्पदपरोक्षज्ञानिनां पण्डितैः पामरैश्च पूर्वमपरिज्ञातं पश्चात् साक्षात्कृतस्वरूपं कङ्कणादिकार्त-स्वरभूषणमिव त्वमानन्दमातनोषीति भावः ।। ६८ ।।

**पुरासुरेभ्यो व्यपनीय मायया**
**य एव पीयूषमपाययः सुरान् ।**

**व्रजाङ्गनानां भगवन्नचूचुरः स एष**
**चित्तं नवनीतलक्षणम् ।। ६९ ।।**

**पुरेति** ।। हे भगवन् त्वं पुरा पूर्वममृतनिष्पत्तिकाले । असुरेभ्यः मायया व्यपनीय आच्छिद्य । सुरान् पीयूषममृतमपाययः पायितवानभवः । स एष त्वं व्रजाङ्गनानां नवनीतलक्षणं चित्तमचूचुरः चोरितवानभूः 'चुर स्तेये' लुङ् । बाल्य इति भावः ।। ६९ ।।

**अयत्ननिश्शेषितविश्वविद्विषा समीकविस्मापितनैपुणेन नः ।**
**भरावतारश्च समर्थितस्त्वया यदर्थमभ्यर्थितवान् पितामहः**
**।। ७० ।।**

**अयत्नेति** ।। नोऽस्माकं न विद्यते यत्नः प्रयासो यस्मिन् कर्मणि तद्यथा भवति तथा अयत्नं निश्शेषिता निश्शेषाः कृताः अयत्ननिश्शेषिताः विश्वे सर्वे विद्विषो येन सः अयत्ननिश्शेषितविश्वविद्विट् तेन । समीकेन युद्धेन विस्मापितमाश्चर्यं प्रापितं नैपुणं कौशलं यस्य सः समीकविस्मापितनैपुणस्तेन त्वया भरावतारश्च समर्थितः कृतः । भूमेर्भारोऽपहृतः । यदर्थं यद्भाराव-तरणाय पितामहश्चतुर्मुखस्त्वामभ्यर्थितवान् प्रार्थितवान् ।। ७० ।।

**प्रमापणारम्भमरेश्च कुर्वता प्रणामितो गद्गदगीरुमापतिः ।**
**अमित्रनिर्वापणनिर्वृतात्मना कृतश्च कन्याहरणोत्सवस्त्वया**
**।। ७१ ।।**

**प्रमापणेति** ।। हे गोविन्द । अरेः प्रमापणारम्भं हिंसनोपक्रमं कुर्वता त्वया । गद्गदगीः स्खलद्वाणीकः उमापतिः प्रणामितः प्रणामवान् कृतः । प्रणामवच्छब्दात् 'तत्करोती'ति णिचि विन्मतोर्लुकि क्ते च रूपम् । प्रकृष्टो

नामो नमनं यस्य स तथाकृत इति वा विग्रह इत्यप्याहुः । प्रणामोऽस्य सञ्जात इतीतज्वाप्रत्ययः । तेन पूर्वस्य नमतेर्णिचि अमन्तत्वान्मित्त्वे मितां ह्रस्वः स्यादिति दूषणमनवकाशम् । किं च अमित्रनिर्वापणनिर्वृतात्मना शत्रुहिंसनसुखितस्वरूपेण त्वया । कन्याया उषाया यदाहरणमनिरुद्धकर्तृकमप्युषाहरणं स्वतन्त्रत्वात्त्वत्कृतमेवेति भावः ।। ७१ ।।

**परस्परस्पर्धिभवत्कथारसैः सभासु**
**गन्धर्वगणे च गायति ।**
**त्रिविष्टपे नः समयोऽयमायतः**
**क्षणायते सम्भ्रमसौख्यसम्पदाम् ।। ७२ ।।**

**परस्परेति** ।। हे गोविन्द । त्रिविष्टपे सुरलोके । सभासु गन्धर्वगणे परस्परस्पर्धि अन्योन्यस्पर्धा युक्तं यथा तथा । भवत्कथाः भवद्विषयप्रबन्धकल्पनाः रसैः रागैरनुरागैर्गायति सति । सम्भृता सम्पादिता सौख्यस्य स्वार्थे ष्यञ् सुखस्य सम्पत् सम्पत्तिर्यैस्ते सम्भृतसौख्यसम्पदः तेषां नोऽस्माकम् आयतो दीर्घोऽप्ययं समयः कालः क्षणायते क्षण इवाचरतीत्यर्थे क्यङ्प्रत्ययः । अतिसुखसन्ततिसम्पत्त्या चिरकालोऽपि क्षणकाल इवेत्यर्थः ।। ७२ ।।

**इत्यन्नुतीन् बुधगणान् स्वगुणैः प्रतीतैः**
**पूर्णः पुराणपुरुषः परमन्वशासत् ।**
**ज्योतिर्गणानिव गवां जगदेकदीपो**
**जालैरिवेन्दुरमलैरतिसुन्दरश्रीः ।। ७३ ।।**

**इत्थमिति** ।। पूर्णः 'वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' इति पक्षे

इडभावो निपातितः । पूरितः पुराणपुरुषः पुरातन इति वक्तव्ये 'पूर्वकालैकसर्वजरत्पुराणनवकेवला' इति निपातनात्पुराण इति साधुः । स श्रीकृष्णः । इत्थन्नुतीन् उक्तप्रकारस्तुतिवचनान् बुधगणान् । प्रतीतैः प्रसिद्धैः स्वगुणैः शुद्धानन्दोरुसंविद्द्युतिबहुलबलौदार्यवीर्यशौर्य- गाम्भीर्यादि-लक्षणैः । जगदेकदीपः अतिसुन्दरश्रीरिन्दुः । अमलैर्गवां जालैरिव किरण-समूहैरिव ज्योतिर्गणान् नक्षत्रनिवाहानिव परं केवलम् । अन्वशासत् अनुशिष्टवांश्च । 'शासु अनुशिष्टौ' लङ् । 'शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव' इत्यादाविवानेकोपमालङ्कारः । वसन्ततिलकावृत्तम् ।। ७३ ।।

**परिततनिजतेजोऽपास्तसन्तापबीजः**
**प्रशमितमतिभेदैः सेवितं स्वैः सुहृद्भिः ।**
**अमृतमयमगाह्यं विश्वहृद्यं स्ववेद्यं**
**स्वपदमुरुसुखं तत्सोऽध्यतिष्ठन् महिष्ठः ।। ७४ ।।**

**।। इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यविरचिते उषाहरणे महाकाव्ये नवमः सर्गः ।। ९ ।।**

**परिततेति** ।। स एवमनुवर्णितचरित्रः महिष्ठः अतिशयेन महान् सर्वोत्तमः अयं श्रीकृष्णः । परिततं परितो विस्तृतं यन्निजतेजः प्रभावः तेनापास्तं सन्तापस्य ज्वरस्य बीजं कारणं येन सः परिततनिजतेजोऽ-पास्तसन्तापबीजः । प्रशमिताः प्रकर्षेण शममुपशमं प्रापिता मतिभेदा बुद्धिदोषविशेषा येषां ते प्रशमितमतिभेदास्तैः । स्वैः सुहृद्भिर्विबुधाद्यैः सेवितः सन् । अगाह्यमसुकृतिनामवगाहनानर्हम् । विश्वहृद्यं विश्वेषां सर्वेषां हृदयप्रियम् । स्ववेद्यं स्वेन वेदितव्यम् । तत् प्रसिद्धममृतं निःश्रेयसमुरुसुखं

स्वपदं स्वस्य स्थानमध्यतिष्ठत् 'अधिशीङ् स्थासां कर्मे'त्याधारस्य कर्मत्वे कर्मणि द्वितीया । अधिष्ठितवान् । अत्र मालिनीनामकं वृत्तं 'ननमयययुतेयं मालिनीभोगिलोकैः' इति तल्लक्षणम् । 'सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जितम् । काव्यं कल्पान्तरस्थायि' इत्यालङ्कारिकसमयमनेन वृत्तविशेषरचनेन कविरन्वगृह्णादिति सर्वं मङ्गलम् ।। ७४ ।।

**श्रद्धाराद्धगुरूदिताखिलकलासाम्राज्यरज्यद्धियां**
**शब्दालङ्कृतिकोशराशिरसवद्ग्रन्थानुसन्धायिनाम् ।**
नानातन्त्रसुबोधनाश्चितयशोभाजां बुधानां मुदे
व्याख्याता सुमतीन्द्रयोगिमणिना त्रैविक्रमीयं कृतिः ।। १ ।।

उदाहरणवर्षिणीमुचितभावनिष्कर्षिणी-
मशेषरसपोषिणीमखिलसूरिसन्तोषिणीम् ।
त्रिविक्रमसरस्वतीं पठपठेति सङ्घोषिणी-
मुषाहरणदीपिकां हरिमुदेऽहमातन्व्यमूम् ।। २ ।।

त्रिविक्रमपदन्यासो विबुधाद्भुतमोदकृत् ।
तच्छुश्रूषा मम परं भूयात्तत्परितोषिणी ।। ३ ।।

**।। इति श्रीमदुषाहरणव्याख्यायां रसिकरञ्जनीसमाख्यायां सूरीन्द्रश्रीमच्चरणशिष्यसुमतीन्द्रतीर्थयतिविरचितायां नवमः सर्गः ।। ९ ।।**

**।। इति उषाहरणं समाप्तम् ।।**

# सार्धश्लोकानुक्रमणिका

कृष्णार्पणमस्तु